


बोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितया
न्यासापरपर्यायकाशिकाविवरणपञ्जिकया

विद्वद्वरहरदत्तमिश्रविरचितया
पदमञ्जरीव्याख्यया च सहिता

श्रीमद्वामन-जयादित्यविरचिता

# काशिकावृत्तिः

[ पाणिनीयाष्टाध्यायीव्याख्या ]

## षष्ठो भागः

( सप्तमाध्यायस्य तृतीयचतुर्थपादौ, अष्टमाध्यायश्च )

सम्पादकौ
स्वामी द्वारिकादासः शास्त्री
व्याकरणपालि-साहित्यबौद्धदर्शनाचार्यः
पं० श्रीकालिकाप्रसादशुक्लः
एम० ए०, व्याकरणाचार्यः

तारा पब्लिकेशन्स,
वा   सी
१९६७

प्रकाशक :
तारा पब्लिकेशन्स
कमच्छा, वाराणसी – १.

 प्रथम संस्करण : १९६७
साधारण संस्करण : रु० २०.००

मुद्रक :
जयभारत प्रेस
बांस फाटक, वाराणसी—१.




वाराणसेयसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षचराणां
सर्वतन्त्रस्वतन्त्राणां श्रीमतां रघुनाथशर्ममहाभागानां

# शुभाशंसनम्

इदं खलु विलोकयतो विमृशतश्च मम मानसमवारितप्रसरमुद्वेलमुल्लोलकल्लोलजालमुल्लासमासादयति यत् *काशिकावृत्ति-न्यास-पदमञ्जरी*ग्रन्थैर्ग्रथितस्य ग्रन्थस्यायं चरमो भागः, यत्र सप्तमाध्यायस्य तृतीयचतुर्थपादौ, समग्रश्चाष्टमाध्यायो वरीवर्ति, प्राङ्मनोरथपथातीतोऽपि साम्प्रतं दृग्गोचरतामायाति ।

एतस्य शुक्लस्य महतोऽनिन्दितस्य च सुकृतस्य कर्मणः पूरयितारौ वैयाकरणमूर्धन्यौ--पण्डित*श्रीकालिकाप्रसादशुक्ल*महोदयः, लब्धव्याकरणाचार्यपदवीकोऽनेकशास्त्रकृतभूरिपरिश्रमः *स्वामी श्रीद्वारिकादास*महानुभावश्च । ग्रन्थस्यास्य सम्पादकाविमौ साम्प्रतमनवरतं सुलोक्यावग्रे च भविष्यति भविष्यतः, शताब्द्याः परतः सुश्लोक्यौ चैनेनैव सुकृतेन ।

आशासे—अस्मिन् प्रवर्त्तमाने प्रवर्धमाने च भाषापरिष्कारविरोधिनि विषयमात्रपरिष्कारप्रवणे कराले काले समावर्त्तनाय त्वरयति च च्छात्रवर्गे नूनमयं ग्रन्थोऽनूनमनवमं च पदमवाप्स्यत्यरमलञ्च ।

इदञ्चापरमप्याशासे—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥

इति प्राक् परोक्षं कविभिः स्तूयमानोऽयं ग्रन्थ इतः परं प्रत्यक्षामपि स्तुतिं लप्स्यत इति ।

अभ्येषये च कुतुकाक्रान्तस्वान्तो गीर्वाणवागनुरक्तान् विपश्चितो यत्तेऽस्य ग्रन्थस्य श्रुत्यङ्गस्य श्रवणमनननिदिध्यासनैः श्रोत्रमनसी संस्कुर्वन्त्विति ।

कृष्णजन्माष्टमी २०२४ वै०
वाराणसी

रघुनाथशर्मा

## व्याकरणप्रशस्तिः

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥

❀ ❀ ❀

तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥

❀ ❀ ❀

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥

—श्रीभर्तृहरिपादाः

❀ ❀ ❀

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥

❀ ❀ ❀

रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

—श्रीहरदत्तमिश्राः
( पदमञ्जरीकाराः )

# प्रकाशकीयम्

पाणिनीयं शब्दशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

देवैरपि स्पृहणीयस्यास्य महनीयस्यार्यावर्तस्य प्राचीनेतिवृत्तसङ्कलनेन गौरवमावहन्ती सुरभारतीयं विश्वस्याखिलासु भाषास्वतिप्राचीनतमा । प्रातःस्मरणीयैर्विगतविविधकल्मषैर्मुनिभिः, आचार्यैः, पण्डितपुङ्गवैश्चास्यामेव देववाण्यां तानि तानि सन्दर्भरत्नानि ग्रथितानि, यैर्देशस्यास्य माहात्म्यं परां काष्ठां नीतम् ।

परमिदानीं महदिदमसन्तोषकरमेव यदीदृश्या भाषाया भूयांसो ग्रन्थमणयः कालवशादेवं पारोक्ष्यमुपागताः, मन्ये ते विरचिता एव नासन् ! तेषु केचित् लब्धात्मलाभा अपि कतिपयैः प्रकाशकैर्विकृतिं नीताः, केषाञ्चित् पत्त्राणि भ्रष्टानि, केषाञ्चिदङ्कनं न मनोहारि, केषाञ्चिच्च तत्रस्थः सन्दर्भ एव व्यत्यस्तः ।

अतः, बहोः कालादस्माकं मनस्ययं विचारः पदमादधदासीद्यत् कश्चिन् मनस्वी दोषानिमान्निरस्यादर्शभूतान् दुर्लभान् संस्कृतसन्दर्भान् प्रकाशयेत्, येन संस्कृतसमाजस्य चिरायोपकृतिर्भवेत् । एतद्धियैवास्माभिरियं *प्राच्यभारती-ग्रन्थमाला* समारब्धा । अत्र वयं यथासमयं सुदुर्लभान् संस्कृतभाषानिबद्धान् महत्त्वशालिनो ग्रन्थान् मुद्रापयित्वा प्रकाशयिष्यामः ।

अत्र प्रथमं प्रकाशनम्—*माधवीया धातुवृत्तिः*, यत्र हि पाणिनीयधातुपाठमाश्रित्य *श्रीमत्सायणाचार्येण* धातूनधिकृत्य तेषामतिविस्तृतं सकलाङ्गोपाङ्गसम्भृतं व्याख्यानं विहितम् । ग्रन्थेनानेन वैयाकरणानां कियानुपकारो जात इति मात्सर्यरागविधुरा भाषातत्त्वविदो विद्वांसो विदन्त्येव ।

ततश्चेदानीमयमनेकेभ्यो वर्षेभ्यो लुप्तप्रायोऽपरो ग्रन्थः पाणिनीयशब्दानुशासनसम्बद्धः *काशिकावृत्ति*नामा विद्वद्धुर*वामन-जयादित्य*विरचितः, आचार्य*श्रीजिनेन्द्रबुद्धिपाद*कृत*न्यासेन*, *श्रीहरदत्तमिश्र*कृत*पदमञ्जरी*व्याख्यया च सह षट्सु भागेषु विभज्य प्राकाश्यं नीयते, यस्य प्रथमो भागः प्रथमाध्यायमितो २०२२ वैक्रमाब्दे प्रकाशितः ।

तथाऽस्य द्वितीयो भागोऽपि, यत्र द्वितीयोऽध्यायः, द्वितीयपादान्तश्च तृतीयोऽध्यायोऽस्ति, परारि प्रकाशितः।

एवमेवास्य तृतीयो भागः, यत्र तृतीयचतुर्थपादात्मकस्तृतीयोऽध्यायः, चतुर्थोऽध्यायश्चास्ति, परुदेव प्रकाशितः।

अनुपदमेव चास्य चतुर्थभागोऽपि, यत्र पञ्चमोऽध्यायः, प्रथमपादात्मकश्च षष्ठोऽध्यायोऽस्ति, सर्वावयवानवद्यः प्राकाश्यमवाप्तवान्।

ततश्चास्य ग्रन्थरत्नस्य पञ्चमो भागः—यत्रावशिष्टः षष्ठोऽध्यायः, द्वितीयपादान्तश्च सप्तमोऽध्यायो विराजते, विदुषां करकमलेष्वैषम एवोपायनीकृतः।

इदानीमयमन्तिमः षष्ठो भागोऽपि न्यासपदमञ्जर्योरवशिष्टांशं प्रेक्षितुकामानां सचेतसां पुरः समुपस्थापितः, यत्रावशिष्टः सप्तमोऽध्यायः, समग्रश्चाष्टमोऽध्यायो वरीवर्त्ति।

एवमिदमनन्यसाधारणं स्पृहणीयं कर्म विदुषां कृपाप्रसादेन साहाय्यातिशयेन च सम्पूर्त्तिमगादिति अस्मद्विधानां प्रकाशकानां कृते महत् प्रमोदास्पदमिति हर्षगद्गदगला वयमिदानीं न किञ्चिदितोऽधिकं वक्तुं पारयामः।

एतद्ग्रन्थरत्नस्य साधु सम्पादनार्थमस्माभिर्भृशं प्रार्थिताविमौ विद्वद्धौरेयौ—एको विद्वत्पुङ्गवः स्वामिश्रीद्वारिकादासशास्त्रिमहाभागः, व्याकरणपालिसाहित्यबौद्धदर्शनाचार्यः, वाराणसेयविद्वत्समाजे प्राप्तप्रतिष्ठः; अपरश्च पण्डितप्रकाण्डः शास्त्रार्थमहारथी श्रीकालिकाप्रसादशुक्लमहोदयः, एम. ए., व्याकरणाचार्यः, यो हि वाराणसेयसंस्कृतविश्वविद्यालयेऽनुसन्धानसहायकपदमलङ्करोति। आभ्यां पण्डितप्रकाण्डाभ्यामपरेऽप्यनेके ग्रन्थाष्टीकिताः, सम्पादिताश्च।

तदेवमनयोः शास्त्रविचारदक्षयोः साहाय्येनेतोऽनन्तरमप्यस्माभिः प्रकाश्यमानानां ग्रन्थानामपि प्रकाशनमनुपदमेव भविष्यतीत्याशासाना वयं ग्रन्थरत्नमिदं विदुषां समक्षं समुपस्थापयामः।

- प्रकाशकाः




## सम्पादकीयम्

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

भाषामधिकृत्य वैज्ञानिकसरण्या यावत्सुव्यवस्थितं सुदृढञ्च भारतीयैर्मनीषि-मूर्धन्यैर्विचारितम्, न तावदन्यत्र दृग्गोचरीभवति । भाषाया वर्गीकारः, प्रकृतिप्रत्ययविश्लेषणम्, पदानां मूलभूतशब्दान्वेषणम्, धातुप्रत्ययवाच्य-निश्चयनम्, पदार्थानां परस्परं सम्बन्धनिरूपणम्, प्रकृतिप्रत्ययार्थसंसर्गस्थापनञ्च भारतीयसंस्कृतशाब्दिकानां बुद्धिवैभवस्य परां काष्ठां बोधयति। देशेऽस्मिन् शताब्दीर्यावत् मेधाविनो वैयाकरणमूर्धन्याश्शब्दविद्यावगमाय माहात्म्यसम्प-न्नानि तानि तानि निबन्धरत्नानि निरमासिषुरिति न परोक्षं प्रेक्षावताम्। अमीषां निबन्धानां सामर्थ्येनैव संस्कृतभाषा पराममरतां भजति। किमधिकम्, वैदेशिकैरपि विद्वन्मूर्धन्यैरेषां निबन्धानां स्वकीयेषु भाषाशास्त्रेषु नितरामुपयोगः कृत इति केषां सुमनसां नाविदितचरम् । अथ च आ सृष्टेरद्य यावद् व्यवस्थितभाषाशास्त्रराहित्येनाप्यनेका भाषा नातिचरमेव विलयं गताः, दुरवबोधा वा जाताः; परन्तु संस्कृतभाषाशाब्दिकानां विपुलयाऽनुकम्पया संस्कृतवाङ्मयं परःसहस्रं परप्रहारान् सोढ्वापि जीवत् सत् सुतरां सुगमतां गच्छति ।

भाषां स्थिरयितुं व्यवस्थापयितुं वा प्रातिशाख्यादिषु प्राचीनतमग्रन्थेषु निर्दिष्टेषु सङ्केतितेषु, सम्प्रति स्वसत्तामासादयत्सु चानेकेषु शब्दानुशासनेषु पाणिनीयशब्दानुशासनमेव सर्वातिशायीति केन तिरोधातुं साहसमाद्रियेत ! संस्कृतवाङ्मयमधिगन्तुमपेक्ष्यमाणसकलसामग्रीसम्भृतमिदं पाणिनीयाष्टकमस्ति, यस्य रचनापाटवपरिपाटी न केनचिदद्यावधि मनागप्यतिशयितेतीतोऽधिकं सम्प्रति अप्रस्तुतप्रशंसाप्रसङ्गकलङ्को मा भूदिति विरम्यते। एतावदपि, विद्व-त्समाजस्य सेवायां सादरमुपायनीक्रियमाणोऽयं व्याख्याद्वयोपेतो ग्रन्थस्तदेव पाणिनीयाष्टकमुपजीव्य विरचित इति कृत्वा निवेदितम्।

## काशिकावृत्तिः

गच्छति काले *पाणिनीयाष्टक*सूत्राणि सारवन्त्यपि अल्पाक्षरत्वात्, असन्दिग्धान्यपि विश्वतोमुखत्वात् मध्यमधियां मन्दधियाञ्च कृते दुरवगाह्यानि जातानि। तेषामिदं मान्द्यमवलोक्य अनुग्रहैकहृदयो भगवान् *पतञ्जलिस्*तेषु सूत्रेषु *महाभाष्यं* प्रणिनाय। यत्र सर्वाण्येव दुरूहाणि पाणिनीयसूत्राणि सरलया प्राञ्जलया च भाषया तथा व्याख्यातानि, यथा वराका अपि क्रियतैवायासेन दुरधिगममेतच्छास्त्रं पारं गच्छेयुः। ततोऽप्यवरस्मिन् काले *महाभाष्यस्यास्य* गूढाशयतया तत्रत्यानामभ्युपगमवादानां सिद्धान्तानाञ्च दुरधिगमतया मन्दमतीनां ततोऽभीष्टसिद्धावन्तरायमालोच्य व्याडि-*कुणि-श्वोभूति*-देव*नन्दि-दुर्विनीत-चूर्णि-निल्लूरादि*विद्वद्भिस्तानि सूत्राणि ताभिस्ताभिर्वृत्तिभिरुपबृंहितानि; परन्तु करालेन कलिकालेन ताः सर्वा एवाकरुणं कवलिताः; इदानीं संस्कृतसमाजस्तासामुद्धरणमात्रैकशरणः संवृत्तः। अथापि भगवतो भूतभावनस्यासीमयाऽनुकम्पया साम्प्रतमियं *काशिकावृत्तिरेव* पाणिनीयाष्टकसमुपासकान् सूपकरोति। सा चेदानीमियं पाणिनीयसूत्राष्टकस्योपलब्धवृत्तिषु सर्वातिशायिनी प्राचीनतमा वृत्तिः। अस्यां प्रतिसूत्रमनुवृत्ति-वृत्त्युदाहरण-प्रत्युदाहरणानि शङ्का-समाधानपुरःसराणि समुपलभ्यन्ते। वृत्तेरस्याः प्रौढा प्रतिपादनशैली प्रौढानामपि चेतांसि चमत्करोति। यथोक्तं ग्रन्थकारेण—

इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम॥

एतेन काशिकारचनायां ग्रन्थकर्तृहृदयं प्रतिपादनशैली च स्पष्टं परिलक्ष्यते।

सा चेयं वृत्तिरापञ्चमाध्यायं विद्वद्वर*जयादित्येन* ( ६५०-७०० वै० श० ) विरचिता, शेषाश्चास्यास्त्रयोऽध्यायाः कोविदकुलकुमुदकलाधरेण *वामनेन* विवृताः—इति सम्प्रदायः।

वृत्तेरस्या *न्यासव्याख्या*पर्यालोचनेनेदमनुमीयते यदाभ्यां विद्वद्भ्यां पृथक् पृथगपि द्वे वृत्ती विरचिते; परं कालक्रमेण ते कथं विलुप्ते, अथ वा— तयोरेव सारमादायैषा नवीना वृत्तिस्ताभ्यामेव विद्वद्भ्यां परिष्कृता, अन्यैर्वा

विद्वद्भिरर्वाचीने काले इत्थं प्रतिसंस्कृता—इत्येतत्सर्वं ग्रन्थस्यास्य सप्तमे भागे '*काशिकावृत्त्युपस्कार*'—नामके ग्रन्थे नातिचिरं विस्तरतो विचारयिष्यते।

अथ च—यद्यपि विदुषोरनयोः क्वचित्तत्र तत्र *महाभाष्यतो* वैमत्यं दरीदृश्यते; परं नैतेनैवास्या माहात्म्यं क्षीयेत! अपि त्वस्यां बहुत्र भाष्यानुक्तानामपि विषयाणां हृदयहारि प्रतिपादनं विपश्चिदपश्चिमानामपि मनांसि बलादावर्जयति—इति सर्वथैवाभ्यसनीयेयं वृत्तिः।

## व्याख्याद्वयी—न्यासः, पदमञ्जरी च

अस्याः काशिकावृत्तेरक्षुण्णं माहात्म्यमूरीकृत्यानेकैर्विबुधवरैरत्र पूर्णपाण्डित्याष्टीकाः कृताः। परं हन्त! तामिमां व्याख्याद्वयीमतिरिच्य ताः सर्वा एव नामतोऽपि विलयमिताः। तत्रैका—बोधिसत्त्वदेशीयाचार्यश्री*जिनेन्द्रबुद्धि*पादविरचिता *न्यासा*परनामधेया *काशिकाविवरणपञ्चिका*, अपरा च विद्वद्वरहरदत्तमिश्रविहिता *पदमञ्जरी* भगवत्या भारत्या भाण्डागारं बिभृतः। यद्यपि तत्र तत्र शास्त्रार्थविषयो महताऽऽडम्बरेण *पदमञ्जर्या*मेव विस्तरतः स्फोटितः; तथापि श्री*जिनेन्द्रबुद्धि*पादानां व्याख्याशैली प्रौढा, पाण्डित्यपूर्णा, अधिगमितयाथातथ्या च, अतस्तस्या एव महत्त्वमधिकतरां वर्त्ततेऽधिगन्तॄणामधिजिगमिषूणाञ्च कृते—इति द्वे अपीमे व्याख्ये अस्मिन् संस्करणे *काशिकया* सहैव समायोजिते। एतत्समायोजनमेवास्य संस्करणस्यापूर्वं महत्त्वं ख्यापयिष्यति।

अथ चान्ते—यद्यपि कालक्रमसमीक्षणे, *न्यासस्य* प्राचीनत्वं स्फुटतरमिति *काशिका*तोऽनन्तरमत्र तस्यैव स्थानं निधित्सितमासीद्, तथाप्यस्माभिः *पदमञ्जर्या* वर्त्तमानविद्वत्समाजे शास्त्रार्थसरणावभ्यर्हितत्वात्तस्या एव पूर्वनिपातः कृत इति क्षन्तव्या वयमैतिह्यैकचक्षुष्कैर्विद्वद्भिः।

## अस्मत्सम्पादन उपजीव्यभूतानि संस्करणानि

१. *काशिका*—अत्रास्माभिः काशीस्थराजकीयपाठशालायां धर्मशास्त्राध्यापकै रानडेोपाख्यैर्दिगन्तविश्रुतयशोभि*र्बालशास्त्रिभिः* परिशोधितम्, काश्यां *तारायन्त्रालये* १९२८तमे खिष्टाब्दे मुद्रितं द्वितीयं संस्करणम्, यस्याधार ऊनविंशशताब्द्याश्चरमे भागे मुद्रितं पण्डितपत्रस्थं संस्करणमस्ति,

यद्यप्युपजीव्यत्वेन समादृतम्; तथापि न्यासानुरोधेन, क्वचिच्च पदमञ्जर्यनुरोधेन तस्यास्मदाचरितं यत्र तत्र परिवर्तनं सचेतसां सुमनसां मनांसि—

*'पक्षपातो न मे वीरे न वैरं कपिलादिषु।*
*युक्तिमद्वचनं यस्य तस्य: कार्य: परिग्रह:'॥*

इत्यभियुक्तोक्तया नीत्या नोद्विजेदित्याशास्महे।

२. *पदमञ्जरी*—अत्र चास्माभि: काशिकराजकीयपाठशालायां व्याकरणप्रधानाध्यापकैर्भारद्वाजोपमै: *दामोदरशास्त्रिभारद्वाजै:* संशोधितम्, काश्याम् *'मेडिकल हाल'* नाम्नि यन्त्रालये १९५२मिते वैक्रमाब्दे (१८९५मिते ख्रिष्टाब्दे) मुद्रितं संस्करणमुपजीव्यत्वेन गृहीतम्। केवलमत्र यत्र तत्र सर्वसुगमा मुद्रणजा:, प्रमादजं वा अशुद्धय एव परिमार्जिता:।

३. *न्यास:*—इह चास्माभि: ढाकाविश्वविद्यालये संस्कृतविभागे प्रवक्तृपदमलङ्कुर्वद्भिर्वङ्गमहीमण्डलावतंसै: *श्री श्रीशचन्द्रचक्रवर्त्तिभि:* सम्पादितम्, *'वारेन्द्र रिसर्च सोसायटी, राजशाही, बंगाल'*—इत्येताख्यप्रतिष्ठानेन १९१३-१९२५ख्रिष्टाब्देषु प्रकाशितं संस्करणमुपजीव्यत्वेन स्वीकृतम्। अत्राप्यस्माभि: सामान्येन मुद्रणजं प्रमादजञ्चाशुद्धिमलमेव प्रक्षालितमिति विदाङ्कुर्वन्तु सुधिय:।

## सम्पादनशैली

गूढाशयाया: *काशिकावृत्ते:*, प्रतिपदं शास्त्रार्थमुद्रां बिभ्राणाया: *पदमञ्जर्या:*, स्पष्टपदाया अपि गभीरार्थाया: *काशिकाविवरणपञ्जिकाया* यथायथं सम्पादनं बालक्रीडैव नानुमेया! आभि: पदे पदे यथा वयं व्यामोहे निपातितास्तदस्माकमेवानुभवैकगम्यम्। अथापि *'तारा पब्लिकेशन्स'—प्रतिष्ठानाध्यक्षाणां* प्राच्यसंस्कृतग्रन्थानां प्रकाशने कल्पनातीतमुत्साहं पर्यालोचम्पर्यालोचम्, अविगणय्यापि महान्तमायासम्, सम्पादनेऽस्मिन् कर्मणि वयं व्यापृता अभूम। वृत्ते:, व्याख्याद्वयस्य च गाम्भीर्यमालोच्य, परिश्रमं चास्माकमनुमाय, अत्र साधुत्वासाधुत्वे विद्वांस एव प्रमाणम्।

अस्माभिरनुसृता सम्पादनशैली तु पूर्ववदेव। तथा च—

(क) काशिकापाठः प्रायः सर्वत्र न्यासानुसार्येव स्वीकृतः। बालशास्त्रि-संस्करणपाठः, तदुद्धृतपाठभेदश्च सर्वत्र टिप्पण्यां स्थापितः। अथ चात्र क्वचित्कुत्रचित् पदमञ्जरीतोऽपि भिन्नः पाठो दृक्पथमायास्यति, परं तत्र कुशाग्र-बुद्धीनां सुगम एव धीप्रसरः—इति श्रमवैयर्थ्यबुद्ध्या न कश्चित्सङ्केतायासः कृतः।

(ख) प्रायः प्रतिपृष्ठम् अनुकाशिकावृत्ति व्याख्ये स्थापिते।

(ग) व्याख्याद्वयेऽपि प्रतीकरूपाणि पदानि विभिन्नाक्षरैर्मुद्रापितानि, येन द्रष्टॄणां चक्षूंषि सद्य एव तत्राभिनिपतेयुः।

(घ) वृत्तौ व्याख्याद्वये वा समागतान्यन्यग्रन्थकर्तॄणां ग्रन्थानां वा नामानि तथैव विभिन्नाक्षरैर्मुद्रापितानि; उद्धरणानि च एककद्विकचिह्नादिभिः (' ' " ") संयोजितानि बोद्धॄणां सौकर्याय।

(ङ) यत्र तत्र सत्यावश्यकत्वे टिप्पण्यादयोऽपि संयोजिताः।

(च) वृत्तेः व्याख्याद्वयस्य च भाषाजाटिल्यनिरासार्थं तत्र तत्र दुरवगमः सन्धिजालोऽप्यस्माभिर्निरस्तः, येनायासमन्तरैवान्तेवासिनामप्यत्र सुखाव-गतिर्भवेत्, ग्रन्थस्यास्य च सौन्दर्यमक्षुण्णं स्यात्।

(छ) अत एवास्माभिरधुनोपयुज्यमानानि विरामादिचिह्नान्यप्यत्र सर्वथोपयोजि-तानि, येन ग्रन्थकर्तुर्हृदयं वाचकैः सपदि समासादितं भवेत्।

(ज) अनुसन्धित्सूनां विषयान्वेषणे समयव्ययो मा भूदिति प्रतिपृष्ठं कोणप्रदेशे व्याख्यायमानं सूत्रम्, अध्यायः, पादश्च स्थापितम्।

(झ) व्याख्यायमानानि सूत्राणि सर्वत्र ( वृत्तौ, व्याख्याद्वये च ) विभिन्ना-क्षरैरेव मुद्रापितानि। वृत्तौ च सूत्राणामष्टाध्यायीगतसङ्ख्यापि निर्दिष्टा।

(ञ) ग्रन्थस्य प्रारम्भ एवाक्षरक्रमेण एतद्भागान्तःपातिसूत्रसूची सङ्कलिता।

एवं प्रकाशकानां त्वरया विवशैस्त्वरमाणैरप्यस्माभिर्ग्रन्थस्य महत्त्वमवधारय-द्भिरत्र हृदयेनैवैतत्कार्यं सम्पादितम्, यद्धि प्रकृतग्रन्थावलोकनेन लोचनपथ-मारोक्ष्यति। अथापि याः काश्चन त्रुटयः प्रमादात्सम्भूतास्ता विद्वद्भिः कालेकाले उद्बोधनीयाः, येनागामिनि संस्करणे कृतज्ञैरस्माभिस्तथाविधास्त्रुटयो निवारिताः स्युरिति। तथा हि—

मत्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि ।

अन्ते च—वृत्तिम्, वृत्तिकारम्, वृत्तिस्थविषयञ्चाधिकृत्य; पदमञ्जरीम्, पदमञ्जरीकारम्, पदमञ्जरीस्थविषयञ्च; एवमेव न्यासम्, न्यासकारम्, न्यासस्थविषयञ्चाधिकृत्य यद् बहु वक्तव्यं समालोच्यं वास्ति, तत्सर्वं ग्रन्थस्यास्यान्तिमे भागे नातिचिरमेव मुद्र्यमाणे '*काशिकावृत्त्युपरकार*'—नामके ग्रन्थे वक्ष्याम इति तावन्तं कालं प्रतीक्षमाणैः क्षन्तव्या वयं विद्वद्भिरिति ।

अनन्तचतुर्दशी २०२४ वै०
वाराणसी

सम्पादकौ

# सूत्रसूची

भागान्तःपातिसूत्राणामेतद्वृत्त्यनुसारिणाम् ।
सूची प्रदर्श्यते तावदक्षरक्रमपूर्विका ॥

# अथ सप्तमाध्याये तृतीयः पादः

## देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात् ॥ १ ॥

देविका, शिंशपा, दित्यवाट्, दीर्घसत्त्र, श्रेयस्—इत्येतेषामङ्गा-

पदमञ्जरी

देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात् ॥ अत्र विशेषणविशेष्यभावे कामचाराद् देविकादिभिरङ्गं विशेष्यते, तेन वा तानि, तत्रापि सामानाधिकरण्येन, वैयधिकरण्येन वा—इति चत्वारः पक्षाः। तत्र देविकादिभिः सामानाधिकरण्येनाङ्गस्य विशेषणात् तदन्तविधिसम्भवाद्देविकाद्यन्तस्याचामादेराकारो भवतीत्यर्थः स्यात्। तत्र केवलानां न स्यात्, न हि तदेव तदन्तं भवति। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन निषिद्धः। यदि तु प्रत्ययविधिविषयः स प्रतिषेधः, तदा केवलानां भवतु, तदादौ तु न स्यात्—देविकाकूले भवा दाविकाकूलाः शालय इति। तदन्ते चातिप्रसङ्गः—सुदेविकादौ भवं सौदेविकमिति; अत्र सोरुकारस्याकारः स्यात्। अथ वैयधिकरण्येन विशेषणम्—देविकादीनां यदङ्गमिति, किञ्च देविकादीनामङ्गं यत्र च तेऽवयवभूताः, ततश्च केवलान्न स्यात्, न हि स एव तस्यावयवो भवति। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन प्रतिषिद्धः। यदि तु प्रत्ययविषयः स प्रतिषेधः, तदा केवलानां भवतु, तदन्ते त्वतिप्रसङ्गः पूर्ववत्। केवलं तदादावप्रसङ्ग

न्यासः

देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात् ॥ 'तद्धितेष्वचामादेः' इत्यान्तरतम्यादैकारे वृद्धौ प्राप्तायां देविकादीनामाकारो विधीयते। अत्र पक्षत्रयं सम्भाव्यते—१. प्रकृतेनाङ्गेन देविकादयो विशिष्यन्ते—देविकादीनामङ्गानामिति, २. तैर्वाङ्गम्—देविकाद्यन्तस्याङ्गस्येति, अथ वा—३. तैराद्योऽच्—देविकादानां सम्बन्धिनामचां मध्ये य आदिरजिति। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा देविकाकूले भवाः शालयो दाविकाकूलाः शालयः इति न सिध्येत्, न ह्यत्र देविकाशब्दोऽङ्गम्, किं तर्हि? देविकाकूलशब्दः। ननु चाङ्गस्येत्यवयवषष्ठी, तत्रैवं विशेषणविशेष्यभावः करिष्यते—अङ्गस्य ये देविकादयोऽवयवभूता इति, भवति चेहावयवोऽङ्गस्य देविकाशब्दः, ततोऽयमदोष इति चेत्? सत्यमेतत्; किन्त्वतिप्रसङ्गः स्यात्, सुदेविकायां भवः सौदेविकः—इत्यत्रापि स्यात्। अथ द्वितीयपक्ष आश्रीयेत, एवमपि दाविकाकूलाः शालय इति न सिध्येत्। देविकादिभिः प्रकृतेऽङ्गे विशेष्यमाणे विशेषणे च तदन्तविधिरिति देविकाद्यन्तस्याङ्गस्येति भवितव्यम्, न तदादेः। तस्मात् तदादेरपि यथा स्यादिति यत्नान्तरमास्थेयमिति। तृतीये तु पक्ष आश्रीयमाणे, विनापि यत्नान्तरेण केवलस्य तदादेस्तदन्तस्य भवति। सर्वत्राचामादेरचो देविकादिसम्बन्धित्वात्। अतस्तमेवाश्रित्याह—देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयस इत्येतेषामित्यादि। एषां देविकादीनामचां मध्य आदिभूतो योऽज्

नामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारो भवति ञिति, णिति, किति तद्धिते परतः। देविकायां भवमुदकं दाविकमुदकम्। देविकाकूले भवाः शालयो दाविकाकूलाः शालयः। पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः। 'प्राचां ग्रामनगराणाम्' इत्युत्तरपदवृद्धिः, साप्याकार एव भवति।

शिंशपा–शिंशपाया विकारश्चमसः शांशपश्चमसः। पलाशादिरयम्, तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ्। शिंशपास्थले भवाः शांशपास्थलाः। पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः।

दित्यवाट्–दित्यौह इदं दात्यौहम्। दीर्घसत्त्रे भवं दार्घसत्त्रम्। श्रेयस्–श्रेयसि भवं श्रायसम्।

पदमञ्जरी

एवास्मिन्पक्षे परिहृतः। अथाङ्गं समानाधिकरणं विशेषणम्–अङ्गं ये देविकादय इति, तदा तदन्तेऽतिप्रसङ्गः परिहृतः, तदादौ त्वप्रसङ्गः स्यादेव। तदेव तर्हि व्यधिकरणं विशेषणम्—अङ्गस्य ये अवयवभूता देविकादयस्तेषामचामादेराकार इति ? तदा केवले तदादौ च न दोषः, किन्तु परपदभूतानामपि तेषामाकारप्रसङ्गः। तत्र प्राग्ग्रामे पूर्वशांशप इत्यादाविष्ट एवाकारः, सुदेविकादावग्रामे त्वनिष्टप्रसङ्गः। तदेवमेते चत्वारोऽपि पक्षा दुष्टाः।

अथापरः पक्षः–अङ्गेन देविकादिभिश्चाचामादिर्विशेष्यते—अङ्गस्याचामादेराकारो भवति स चेद्देविकादीनां सम्बन्धी भवतीति। अत्र पक्षे केवलेषु तदादौ चाङ्गे नास्ति दोषः, नापि सौदेविकमित्यत्र पूर्वपदस्योत्तरपदस्य वा प्रसङ्गः; किन्तु प्राग्ग्रामे पूर्वशांशपः—इत्यादावुत्तरपदभूतानां देविकादीनामाकारो न स्यात् ? नैष दोषः; 'प्राचां ग्रामनगराणाम्' इत्यत्रैतदनुवर्तिष्यते, तत्र च वाक्यभेदेन सम्बन्धः—प्राचां ग्रामनगराणामुत्तरपदस्याचामादेरचो वृद्धिर्भवति, देविकादीनामुत्तरपदानामचामादेराकार इति। अयमपि *वृत्तिकारस्य* पक्षो न भवति; यद्ययं पक्षोऽभविष्यत्, उत्तरपदवृद्धावप्येतदनुवर्त्तिष्यत इत्येवावक्ष्यत्।

न्यासः

वृद्धेरैकारस्य प्रसङ्गे तस्याकारो विधीयते।

पूर्वशांशप इति। पूर्ववदुत्तरपदस्य वृद्धिः। साप्याकार एव भवतीति। उत्तरपदाधिकारे देविकादीनामनुवृत्तेर्लभ्यते।

❀ वहीनरस्येद्वचनं कर्तव्यम् ❀। वृद्धिविषयेऽचामादेरचः स्थाने वहीनरस्य इकारादेशो भवति । वहीनरस्यापत्यं वैहीनरिः । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

## केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥

केकय, मित्रयु, प्रलय—इत्येतेषां यकारादेः 'इय'—इत्ययमादेशो भवति तद्धिते ञिति, णिति, किति च परतः । केकयस्यापत्यं कैकेयः । 'जनपदशब्दात्क्षत्त्रियादञ्' इत्यञ्प्रत्ययः ।

### पदमञ्जरी

कस्तर्हि वृत्तिकारस्य पक्षोऽयमभिधीयते ?
परिभाषेयमान्तर्यपरिभाषाऽपवादिनी ॥
देविकादेरचामादेर्यत्र वृद्धिः प्रसज्यते ।
तत्रोपतिष्ठते, तेन सर्वमिष्टं प्रसिध्यति ॥ इति ।

अनारभ्यमाणे एतस्मिन्, देविकादीनामादेरचो वृद्धिर्भवन्ती स्थानेऽन्तरतमवचनादैकारः प्राप्नोति, तदपवादेनाकारः प्राप्यते, तत्राङ्गं भवतु देविकादयः पूर्वपदमुत्तरपदं वा; सर्वथा यत्र देविकादीनामचामादेरचो वृद्धिप्रसङ्गः, तत्राकारो भवतीति परिभाष्यते । ननु च 'अङ्गस्य' इति वर्त्तते ? सत्यम्; नैवमस्याभिसम्बन्धः—अङ्गस्याचामादेराकारो भवति स चेद्देविकादीनां सम्बन्धीति, किं तर्हि ? देविकादीनामचामादेराकारो भवति स चेदङ्गस्य सम्बन्धीति । अथैवमभिसम्बन्धे किं व्यावर्त्यम् ? न किञ्चित्, अनुवृत्तस्य तु सम्बन्धो वक्तव्य इत्येतावत् । *साप्याकार एव भवतीति* । उक्तोऽत्र हेतुः ।

*वहीनरस्येति* । वहोऽस्यास्तीति वही, वही चासौ नरश्चेति वहीनरः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । *वैहीनरिरिति* । अत्राकारवृद्धिः प्राप्ता इकारेण बाध्यते । तस्य त्वैकारवृद्धिर्भवत्येव, न हि तस्यां नाप्राप्तायामिकारो विधीयते, एवं च कृत्वा सूत्रेऽप्यकार एव विधेयः, तस्याकारवृद्धौ सिद्धमिष्टम् ? तथा तु न कृतमित्येव । *केचित्त्विति* । विहीनो नरो विहीनरः, पृषोदरादित्वान्नशब्दस्य लोपः ॥

*केकयमित्रयुप्रलयानां यादेरियः ॥ लौकिकं हि तत्र गोत्रं गृह्यत इति* । मित्रयु-

### न्यासः

वहीनरस्येद्वचनं कर्त्तव्यमिति । अकारस्य या वृद्धिः प्राप्नोति तद्बाधनार्थमेतत् । इकारे कृते या वृद्धिः प्राप्नोति सा तु भवत्येव । केचित्त्वित्यादि । कुण्डवाडवादयः । विहीनो नरः कामक्रोधाभ्यामिति पृषोदरादित्वान्नलोपः, विहीनरस्यापत्यं वैहीनरिः—'अत इञ्' ॥

केकयमित्रयुप्रलयानां यादेरियः ॥ केकयमित्रयुप्रलयानामिति याद्यपेक्षयाऽवयव-

मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते । 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' इति वुञ् । लौकिकं हि तत्र गोत्रं गृह्यते । लोके च ऋषिशब्दः 'गोत्रम्' इत्यभिधीयते ।

प्रलय—प्रलयादागतं प्रालेयमुदकम् ॥

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥**

यकारवकारभ्यामुत्तरस्य अचामादेरचः स्थाने वृद्धिर्न भवति; ताभ्यां तु यकारवकाराभ्यां पूर्वमैजागमौ भवतो ञिति, णिति, किति च तद्धिते परतः । यकारादैकारः, वकारादौकारः । व्यसने भवं वैयसनम् । व्याकरणमधीते वैयाकरणः । स्वश्वस्यापत्यं सौवश्वः ।

पदमञ्जरी

शब्दोऽभेदोपचारात्तदपत्यसन्ताने यदा वर्त्तते न परं प्रकृतावेव, तदेदमुच्यते । यदा तु गृष्ट्यादिभ्यष्ठञो यस्कादित्वाद् बहुषु लुक् क्रियते, तदा पारिभाषिकेऽपि गोत्रे न दोषः । अत्र यद्यपि वृद्धिप्रसङ्गेऽयमादेश उच्यते, तथापि वृद्धिर्न बाध्यते; विषयभेदात्—अचामादेर्वृद्धिः, यादेरियादेशः, अङ्गं तूभयोर्विशेषणम्, न कार्यि ॥

*न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्* ॥ अत्रार्थद्वयविधानाद्वाक्यभेदः, तस्यैव द्योतकस्तुशब्दः, 'पूर्वौ' इत्यनेन सम्बन्धादैचाविति प्राप्ते एकवचनं सौत्रम् । वृत्तौ तु क्रियाविशेषणत्वादेकवचनम् । *ताभ्यां तु पूर्वमिति* । *ऐजागमो भवतीति* । टित्त्वाद्यागमलिङ्गाभावेऽपि पूर्वशब्देन देशविशेषे भवन्नागम इत्युच्यते—आगच्छतीत्यागम इति । *वैयसनमिति* । 'गतिकारकोपपदानां प्राक्सुबु-

न्यासः

षष्ठी । यादेरित्येषापीयादेशापेक्षया स्थानषष्ठी—य आदिर्यस्य स यादिः । अकारसहितो यकार उकारसहितश्च । केकयादीनां योऽवयवो यादिस्तस्येयादेशो भवति । ननु च मित्रयुशब्दः परमप्रकृतिः, न गोत्रम्; 'अपत्यं पौत्रप्रभृति गोत्रम्' इत्यपत्यविशेषस्य गोत्रसंज्ञाविधानात्, तत् कथं गोत्रादुच्यमानः प्रत्ययः परमप्रकृतेर्भवति ? इत्यत आह—लौकिकं हीत्यादि । किं पुनर्लौकिकं गोत्रम् ? इत्यत आह—लोके चेत्यादि । इह लौकिकं गोत्रं गृह्यते । लोके च ऋषिशब्दः 'गोत्रम्' इत्यभिधीयते । मित्रयुशब्दश्चायमृषिवचनः, तस्मात् ततोऽपि गोत्रादुच्यमानः प्रत्ययो भवतीति ।

प्रालेयमिति । 'तत आगतः' इत्यण् ॥

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ 'तद्धितेष्वचामादेः' इत्यादिना ञिणदादौ तद्धिते वृद्धौ प्राप्तायां प्रतिषेधोऽयमुच्यते, तत्सन्नियोगेनैजागमौ भवतः । यकारादैकार इत्यादिना यथासंख्येन सम्बन्धं दर्शयति । वैयसनमिति । 'असु क्षेपणे' ।

य्वाभ्यामिति किम् ? न्रर्थस्यापत्यं न्रार्थिः । पदान्ताभ्यामिति किम् ? यष्टिः प्रहरणमस्य याष्टीकः । यत इमे छात्त्रा याताः ।

पदमञ्जरी

त्पत्तेः समासः' इत्युत्तरपदविषयमित्यवोचाम । तेन वैयसनादिषु य्वोः पदान्तत्वम् । स्वश्वशब्दः शिवादिः ।

*याष्टीक इति* । 'शक्तियष्ट्योरीकक्' । ननु चात्राचामादेः स्थाने यौ य्वौ ताभ्यामित्याश्रयणादेव न भविष्यति ? तत्राह—*यत इम इति* । 'इण् गतौ', लटः शत्रादेशः, शपो लुक्, 'इणो यण्' । इहासत्यपि प्रतिषेधे वैयसनमित्यादौ व्यसन + अ इति स्थिते वृद्धिश्च प्राप्नोति, ऐजागमश्च; तत्र वृद्धिरनित्या, शब्दान्तरप्राप्तेः । सा ह्यैचि कृते तस्यैव प्राप्नोति; तन्मध्यपातितस्य तद्ग्रहणेन ग्रहणात् । ऐजागमस्तु नित्य इति स एव तावद्भवति । तत्र कृते यद्यपि पुनःप्रसङ्गविज्ञानाद् वृद्धिः, तथाप्यान्तर्यत ऐकारस्यैकारः, औकारस्यौकार इति न कश्चिद्दोषः, किं प्रतिषेधेन !

न्यासः

विपूर्वाद् विशेषेणास्यते क्षिप्यते येनेति करणे ल्युट्, प्रादिसमासः, यणादेशः; ततः 'तत्र भवः' इत्यण् । तत्र यकारात् पदान्तात् परस्याकारस्य वृद्धिर्न भवति, तस्मात् पूर्वमैजागमः । वैयाकरण इति । विशेषेणाक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति करणे ल्युट्, व्याकरणमिति, प्रादिसमासः, ततः 'तदधीते तद्वेद' इत्यण्, तत्र पर्जन्यवल्लक्षणप्रवृत्त्या पदान्ताद् यकारात् परस्य या वृद्धिः प्राप्नोति सा न भवति, तस्मात् पूर्वमैजागमः । सौवश्व इति । शोभनोऽश्वः स्वश्वः, पूर्ववत् समासः, ततोऽपत्यार्थे शिवाद्यण् । अत्र वकारात् पदान्तात् परस्य वृद्धिर्न भवति, तस्मात् पूर्वमैजागमो भवति । न्रार्थिरिति । ना अर्थो यस्य स न्रर्थः, तस्यापत्यम् 'अत इञ्' । याष्टीक इति । 'शक्तियष्ट्योरीकक्' । याता इति । इणः परस्य लटः शत्रादेशः, 'इणो यण्' इति यण्, ततः 'तस्येदम्' इत्यण् । तत्रोभयत्रापि यकारस्य पदान्तता नास्ति । अथ प्रतिषेधवचनं किमर्थम् ? उच्यते; यस्मान्न प्राप्तायां वृद्धावैचौ विधीयमानौ तस्या बाधकौ भविष्यतः, यथा—'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति दधिदानस्य तक्रदानं बाधकम् । अथापि बाधकौ न स्याताम्, तथापि नित्यत्वादैचोः कृतयोः पश्चाद् वृद्धिर्भवन्ती तयोरेव भविष्यतीति । न चात्र शब्दान्तरप्राप्त्या तयोरप्यैचोरनित्यत्वमाशङ्कनीयम्, न हि तौ शब्दान्तरस्य विधीयेते, अपि त्वभक्तावेव य्वाभ्यां पूर्वौ ।

यद्यपि शब्दान्तरस्य प्राप्तिः स्यात्, तथापि द्वयोरनित्ययोः परत्वादैचोः कृतयोः 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति पुनर्वृद्धिर्न भवति । यद्यपि पुनःप्रसङ्गविज्ञानाद्वृद्धिः स्यात्, तथापीष्टसिद्धिः स्यादेव; विशेषाभावादित्यत आह—

प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थम् । इह मा भूद्—दाध्यश्विः, माध्वश्विरिति, न ह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति । वृद्धेर-

### पदमञ्जरी

नन्वसति तस्मिन्, वैयाकरणी भार्या अस्य वैयाकरणभार्य इति 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः स्यात्, सति तु प्रतिषेधे न भवति; कथं न भवति, यावता वृद्धेर्निमित्तं ञणका यस्मिंस्तद्धित इति बहुव्रीहिः, विद्यते चात्र णकारः ? सत्यं विद्यते, निमित्तं तु न भवति; 'कुर्वद्रूपे हि निमित्तशब्दो मुख्यः' इत्युक्तम् । ननु च मा भूत् 'तद्धितेष्वचामादेः' इत्यस्या वृद्धेर्निमित्तम्, य एव त्वसौ णित्तद्धिताश्रय ऐज्विधीयते तस्यैव वृद्धिसंज्ञकस्य निमित्तं णकार इति स्यादेव पुंवद्भावप्रतिषेधः ? उच्यते; न हि वस्तुतो या वृद्धिस्तस्या यन्निमित्तं ञकारादिस्तद्धति प्रतिषेधः, किं तर्हि ? वृद्धिरित्येवं या विधीयते तन्निमित्ते । अतः पुंवद्भावप्रतिषेधनिवृत्त्यर्थं वृद्धेः प्रतिषेधो वक्तव्य एव ? न वक्तव्यः; एकस्मिन्नङ्गे विशेषविहितावैचौ सामान्यविहिताया वृद्धेर्बाधकौ भविष्यतः, सत्यपि सम्भवे बाधनं भवतीति न्यायात्; ततश्च पूर्ववत्पुंवद्भावप्रतिषेधो न भविष्यतीति 'य्वाभ्यां पूर्वमैच्' इत्येवास्तु, नार्थः प्रतिषेधेन ? इत्यत आह—*प्रतिषेधवचनमिति* । प्रतिषेधवचने सति याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता प्रतिषिध्यते, ताभ्यामेव पूर्वावैचौ भवत इत्यर्थो भवति, असति हि तस्मिन् यौ कौचन य्वौ गृह्येयाताम् । तस्मादैचोर्विशिष्टो विषयः प्रक्लृप्तो यथा स्यादित्येवमर्थं प्रतिषेधवचनं क्रियत इत्यर्थः । *दाध्यश्विः, माध्वश्विरिति* । दधिप्रियोऽश्वो यस्य स दध्यश्वः । एवं मध्वश्वः, ताभ्याम् 'अत इञ्' ।

### न्यासः

प्रतिषेधवचनमित्यादि । प्रक्लृप्तिः=प्रकल्पनम्, व्यवस्थेत्यर्थः । यत्र य्वाभ्यां परस्य वृद्धेः प्रतिषेधः स एवैचोर्विषयः कथन्नाम प्रकल्पेत ? व्यवतिष्ठेतेत्येवमर्थः । प्रतिषेध उच्यते, किमर्थं पुनरैचोर्विषयप्रक्लृप्तिः क्रियते ? इत्यत आह—इह मा भूदिति । यदि प्रतिषेधवचनेनैचोर्विषयव्यवस्था न क्रियेत, तदा दाध्यश्विः, माध्वश्विरित्यत्रापि स्यात् । अतो मा भूदेष दोष इति प्रतिषेधवचनेनैचोर्विषयव्यवस्था क्रियते । दधिप्रियोऽश्वो दध्यश्वः, मधुप्रियोऽश्वो मध्वश्वः—समानाधिकरणाधिकारे 'शाकपार्थिवादीनां समास उत्तरपदलोपश्च' इति मध्यमपदलोपी समासः । अथ क्रियमाणे प्रतिषेधवचने कस्मादेवात्र न भवति, यावता य्वाभ्यां परस्य वृद्धिर्नास्ति ? इत्यत आह—न ह्यत्रेत्यादि । प्रसङ्गे हि सति वृद्धेः प्रतिषेधो भवति, नासति; न चात्र य्वाभ्यां परस्य वृद्धेः प्रसङ्गोऽस्ति, अतः प्रतिषेधो नास्त्येवेत्यभिप्रायः । ननु च 'अचामादेः' इत्यनुवर्त्तते, तेन य्वौ विशिष्येते—अचामादेरचः स्थाने यौ य्वाविति । न च दाध्यश्विरित्यादावेवंविधौ तौ

भावात् प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः।

उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वैत्र्यलिन्दे भवः पूर्वैत्रै-

पदमञ्जरी

ननु च 'अचामादेः' इत्यनेन य्वौ विशेषयिष्यामः—अचामादेरचः स्थाने यौ य्वाविति ? एवमपि द्वे अशीती अधीष्टः, 'तद्धितार्थ' इति समासः, तमधीष्ट इति 'प्राग्वतेष्ठक्', द्व्याशीतिकः—अत्र प्राप्नोति। सति तु प्रतिषेधे 'तद्धितेष्व-चामादेः' इत्यनुवृत्तेर्याभ्यां परस्य 'तद्धितेष्वचामादेः' इति वृद्धिः प्राप्ता प्रति-षिध्यते, ताभ्यामिति विज्ञायते; अत्र तु 'संख्यायाः संवत्सरसंख्यस्य च' इत्येव-मुत्तरपदवृद्धिर्विधीयत इति तस्या निषेधाभावादैजागमाभावः सिद्धः। स्यादे-तत्—अचामादेरित्यनुवृत्तं स्वरूपपरं सद् वृद्धेर्विशेषणम्, अचामादेरित्येवं या वृद्धिस्तस्याः प्रसङ्गे तदपवादौ य्वाभ्यां पूर्वमैचो भवत इत्यर्थः, इह तु नैवं वृद्धेः प्रसङ्ग इत्यैचौ न भविष्यत इति ? एवमपि य्वावविशेषितौ स्याताम्, ततश्च दाध्य-श्वादौ प्रसङ्गः। न च सकृच्छ्रुतमचामादेरित्येतदेवोभयं विशेषयितुमर्हति, येना-चामादेः स्थाने य्वौ ताभ्यां पूर्वावैचो भवतः, सति तस्मिन्नचामादेरित्येवं वृद्धेः प्रसङ्ग इत्याश्रयणान्न क्वापि दोषः स्यात। न च तन्त्रावृत्त्येकशेषाणामन्यतमा-श्रयणे प्रमाणमस्ति, तस्मात्सुष्ठूक्तम्—प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थमिति।

*उत्तरपदवृद्धेरपीति*। एतच्च तत्रास्याधिकाराल्लभ्यते। *यत्र त्विति*। एतद-प्युत्तरपदेन य्वोर्विशेषणाल्लभ्यते—उत्तरपदस्य यौ य्वौ ताभ्यां परस्य वृद्धिर्न भवति, ताभ्यां च पूर्वमैजागम इति। इह—इश्च अजश्च यजौ, उश्च अजश्च वजौ, तयोरिदं ऐयजम्, औवजमिति ऐचोरभक्तत्वादतन्मध्यपतितत्वाच्च अङ्ग-ग्रहणेनाग्रहणादैयजीयम्, औवजीयमित्यादौ शेषनिघातो न स्यात्, शेषविवक्षायां

न्यासः

स्त इति, न चात्रैचो भविष्यतः, अतो नार्थः ? नैतदस्ति; एकं ह्यचामादिग्रहणम्, तेन यदि य्वौ विशिष्येते तदा वृद्धिरविशेषिता स्यात्। ततश्चेहापि वृद्धेः प्रतिषेधः स्यात्—द्वे अशीती भृतो भूतो भावी वा 'प्राग्वतेष्ठञ्' द्व्याशीतिक इति। अथ वृद्धि-र्विशिष्यते—अचामादेरित्येवं वा वृद्धिः, ततो न भवत्येष दोषः। न ह्यत्राचामादेरि-त्येवं वृद्धिः, किं तर्हि ? 'संख्यायाः संवत्सरसंख्यस्य च' इत्येवम्। किं तर्हि य्वौ न विशेषितौ स्याताम्, ततश्च दाध्यश्विरित्यादावैचौ स्यातामेव। तस्मात् तयोर्विषयव्य-वस्थार्थं नेति वक्तव्यम्।

उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यत इति। स चोत्तरपदाधिकारेऽस्यानुवर्तमानत्वा-ल्लभ्यते। पूर्वैत्र्यलिन्द इति। अत्र 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धौ प्राप्तायां प्रति-षेधः। यद्युत्तरपदवृद्धेरप्ययं प्रतिषेधः, तदा द्व्याशीतिक इत्यत्रापि 'संख्यायाः संवत्सर-

यलिन्दः । यत्र तूत्तरपदसम्बन्धी यण्न भवति तत्र नेष्यते प्रतिषेधः— द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः ॥

द्वारादीनां च ॥ ४ ॥

'द्वार'-इत्येवमादीनां य्वाभ्याम् उत्तरपदस्याचामादेरचः स्थाने वृद्धिर्न भवति, पूर्वौ तु ताभ्यामैजागमौ भवतः । द्वारे नियुक्तो दौवारिकः । द्वारपालस्येदं दौवारपालम् । तदादिविधिश्चात्र भवति ।

पदमञ्जरी

च वृद्धाच्छो न स्यात्, प्रातिपदिकस्यावृद्धत्वात् ? उच्यते; यद्येवंविधमभिधानमस्ति, ततः पूर्वशब्द आवर्तयितव्यः, तत्रैकोऽवयववचनः, अपरो व्यवस्थावचनः—य्वाभ्यां पूर्वावैचौ भवतस्तौ चाङ्गस्यावयवाविति ।

अत्र संग्रहश्लोकौ—

नाप्राप्ताया हि वृद्धेः प्रतिपदविधिरैज्बाधको नञ् किमर्थो
याभ्यां य्वाभ्यां परस्यैच् प्रसजति तत एवैष पूर्वो यथा स्यात् ।
मा दाध्यश्वादिके भूदिति ननु विहितौ यावचां स्थान आदेय्वौ ताभ्यामैजिहैवं न भवति इति चेद् द्वे अशीती अधीष्टे ॥
स्यादैज् व्याशीतिकेऽङ्गाद्यच इति विहितस्यैवमैच्चेत्प्रसङ्गाद्
य्वौ न स्यातां विशिष्टौ श्रुतमपि च सकृन्नोभयं भेत्तुमर्हम् ।
स्यादेतस्योत्तरत्राप्यधिकृतिरिह च य्वोः पदस्योत्तरस्यैवं पूर्वत्रैयलिन्दे भवति, न च भवेद् द्वे अशीती अधीष्टे ॥

द्वारादीनां च ॥ *दौवारिक इति* । 'तत्र नियुक्तः' इति ठक् । *द्वारपालस्येदं दौवारपालमिति* । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धलक्षणश्छो न भवति, 'कलापिनोऽण्' इत्यत्राण्ग्रहणस्याधिकविधानार्थत्वाद्वा । कथं पुनर्द्वारशब्दस्य पाठे द्वारपालशब्दस्य विधिरयं भवति ? तत्राह—*तदादिविधिश्चात्र भवतीति* ।

न्यासः

संख्यस्य च' इति या वृद्धिरुत्तरपदस्य प्राप्तेत्यस्या अपि प्रतिषेधः स्यादित्यत आह—यत्र स्वित्यादि । कथं पुनरिष्यमाणोऽप्यत्र प्रतिषेधो न भवति ? उत्तरपदस्याचामाद्येनाचा हि य्वोर्विशेषणत्वात् । उत्तरपदसम्बन्धी योऽचामादिरच् तस्य स्थाने यौ य्वौ ताभ्यामुत्तरपदस्य वृद्धिर्न भवति । न च द्व्याशीतिक इत्यत्रोत्तरपदस्याचामादेरचः स्थाने यकार इति नात्र वृद्धेः प्रतिषेधो भवतीति ॥

द्वारादीनाञ्च ॥ दौवारिक इति । 'तत्र नियुक्तः' इति ठक् । द्वारपालस्येदं दौवारपालमिति । 'तस्येदम्' इत्यण् । प्रायेण तु पुस्तके द्वारपालस्येदं दौवारपालिकमिति

स्वर—स्वरमधिकृत्य कृतो ग्रन्थः सौवरः । सौवरोऽध्यायः । सौवर्यः सप्तम्य इति । व्यल्कश—व्यल्कशे भवः वैयल्कशः । स्वति—स्वस्तीत्याह सौवस्तिकः । स्वर्—स्वर्भवः सौवः ।

❀ अव्ययानां भमात्रे टिलोपः ❀ । स्वर्गमनमाह सौवर्गमिकः ।

स्वाध्याय इति केचित्पठन्ति, तदनर्थकम् । शोभनोऽध्याय इत्येतस्यां व्युत्पत्तौ तु पूर्वेणैव सिद्धम् । अथाप्येवं व्युत्पत्तिः क्रियते—स्वोऽध्यायः स्वाध्याय इति ? एवमप्यत्रैव स्वशब्दस्यैव पाठात्सिद्धम् । तदादावपि हि वृद्धिरियं भवत्येव ।

स्फ्यकृत—स्फ्यकृतस्यापत्यं स्फैकृतः । स्वादुमृदुन इदं सौवादुमृदवम् ।

पदमञ्जरी

अत्र च कारणं देविकादिसूत्र एवोक्तम् । ज्ञापकं चात्र वक्ष्यति । *सौवरोऽध्याय इति* । स पुनः शन्तनुप्रणीतः, फिषित्यादिकः । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति भाष्ये ।

*शोभनोऽध्यायः स्वाध्याय इति* । आङत्र मध्ये प्रक्षेप्तव्यः, 'अन्येषामपि दृश्यते' इति वा उत्तरपदादेर्दीर्घत्वम् । *एवमपीत्यादि* ।

न्यासः

पाठः, स चायुक्तः; न हि तस्येदमित्यत्रार्थे द्वारपालशब्दात् लक्षणेन केनचिट्ठग्विहितः ।

क्वचित् पुनर्द्वारपालस्यापत्यं दौवारपालिक इति पाठः, तत्र 'रेवत्यादिभ्यष्ठक्' इति ठक् । ननु तत्र द्वारपालीशब्दः पठ्यते, न तु द्वारपालशब्दः ? एवं तर्हि मन्यते—द्वारपालशब्दस्तत्र पठितव्यः, स द्वारपालीशब्दमपि ग्राहयिष्यति; 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति न्यायात् । ये तु तत्र द्वारपालशब्दं न पठन्ति, तेऽपत्यार्थे दौवारपालिरितीञन्तमुदाहरन्ति । कथं पुनर्द्वारस्य गणे पाठे द्वारपालस्य भवति ? अत्रापि द्वारादिभिराद्यचो विशेषणात्—द्वारादीनां शब्दानामचां मध्ये य आदिरजिति । वक्ष्यमाणाद्वा तदादिविधेर्ज्ञापकात् । सौवर इति । स्वरमधिकृत्य कृतो ग्रन्थ इति 'अधिकृत्य कृते ग्रन्थे' इत्यण् । सौवर्य्य इति । 'टिड्ढाणञ्' इति ङीप् । वैयल्कश इति । 'तत्र भवः' इत्यण् । सौवस्तिक इति । 'तदाहेति माशब्दादिभ्य उपसंख्यानम्' इति ठक् । सौवर्गमनिक इति । 'आहौ प्रभूतादिभ्य उपसंख्यानम्' इति ठक् ।

पूर्वेणैव सिद्धमिति । वकारस्य पदान्तत्वात् तत्रैतत् स्यात् । यद्येवं व्युत्पत्तिः क्रियते—स्वोऽध्यायः स्वाध्यायः, तदाऽपदान्तत्वान्न प्राप्नोति, तस्यां व्युत्पत्तावर्थवान् स्वाध्यायशब्दस्य पाठः ? इत्यत आह—अथाप्येवमित्यादि ।

श्वन्—शुन इदं शौवनम् । अणि 'अन्' इति प्रकृतिभावः । शुनो विकारो मांसं शौवम् । 'प्राणिरजतादिभ्योऽञ्' इत्यञ् । श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः । स्वस्येदं सौवम् । स्वग्रामे भवः सौवग्रामिकः । अध्यात्मादित्वाट्ठञ् । अपदान्तार्थोऽयमारम्भः ।

द्वार । स्वर । स्वाध्याय । व्यल्कश । स्वस्ति । स्वर् । स्फ्यकृत । स्वादुमृदु । श्वन् । स्व । द्वारादिः ॥

न्यग्रोधस्य च केवलस्य ॥ ५ ॥

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति, तस्माच्च पूर्वमैकार आगमो भवति । न्यग्रोधस्य विकारो नैयग्रोधश्चमसः ।

केवलस्येति किम् ? न्यग्रोधमूले भवाः शालयः न्याग्रोधमूला शालयः । 'न्यग्रोहयतीति न्यग्रोधः'—इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे विध्यर्थम् ॥

पदमञ्जरी

यद्यत्र स्वशब्दः पठ्यते, किमायातं स्वाध्यायशब्दस्य ? तत्राह—*तदादावपि हीति* । स्वार्थिक-स्वाभाविकादयस्तु भाष्यप्रयोगात्साधवः । *स्फैयकृत इति* । ऋषित्वादण् । शौवादंष्ट्रो *मणिरिति* । 'शुनो दन्तदंष्ट्रा' इति दीर्घत्वम्, पूर्ववदण् ॥

*न्यग्रोधस्य च केवलस्य* ॥ *नैयग्रोध इति* । नीचैर्गतौ प्ररोहैर्वर्धत इत्यर्थः ।

*अव्युत्पत्तिपक्षे तु विध्यर्थमिति* । अपदान्तत्वाद्यकारस्य । अथास्मिन्नपि पक्षे

न्यासः

कथं पुनः स्वशब्दात् स्वाध्यायशब्दस्य सिद्धयति ? इत्याह—तदादावपि हीत्यादि । स्फैयकृत इति । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । सौवादुमृदव इति । अत्रापि 'तस्येदम्' इत्यण् ।

एवं शौवनमित्यत्रापि । शौवमिति । 'नस्तद्धिते' इति टिलोपः । शौवादंष्ट्र इति । 'अन्येषामपि' इति दीर्घः ॥

न्यग्रोधस्य च केवलस्य ॥ नैयग्रोध इति । 'तस्य विकारः' इत्यण् ।

न्यग् रोहतीति न्यग्रोध इति । न्यञ्चतीति ऋत्विगादिनाऽञ्चतेः क्विन्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—ककारः, नेर्यणादेशः । न्यक्पूर्वाद्रुहेः पचाद्यच् । तत्र 'न्यङ्क्वादीनाञ्च' इति हकारस्य घकारः, 'झलां जशोऽन्ते' इति ककारस्य गकारः, लघूपधगुणः—एवं यदा न्यग्रोधशब्दो व्युत्पाद्यते तदा पदान्तत्वाद् यकारस्य 'न य्वाभ्याम्'

## न कर्मव्यतिहारे ॥ ६ ॥

कर्मव्यतिहारे यदुक्तं तन्न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी, व्यावलेखी, व्याववर्ती, व्यावहासी वर्त्तते। 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच् प्रत्ययः, तदन्तात् 'णचः स्त्रियामञ्'[1] ॥

## स्वागतादीनां च ॥ ७ ॥

'स्वागत'—इत्येवमादीनां यदुक्तं तन्न भवति। स्वागतमित्याह स्वागतिकः। स्वध्वरेण चरति स्वाध्वरिकः। स्वङ्गस्यापत्यं स्वाङ्गिः। व्यङ्गस्यापत्यं व्याङ्गिः। व्यडस्यापत्यं व्याडिः। व्यवहारेण चरति

### पदमञ्जरी

केवलग्रहणं किमर्थम्, यावता न्यग्रोधस्येत्युच्यते, तत्र कः प्रसङ्गो यत्तदादौ स्यात्? ज्ञापनार्थं तु। एतज्ज्ञापयति—अस्मिन्प्रकरणे यान्युपात्तानि तानि तदादिवृद्धिभाजोऽचो विशेषणानीति ॥

*न कर्मव्यतिहारे* ॥ *कर्मव्यतिहारे यदुक्तमिति*। यदस्मिन्प्रकरणे उक्तं तत्कर्मव्यतिहारे न भवतीत्यर्थः ॥

*स्वागतादीनां च* ॥ व्यावक्रोशीत्यादौ व्यवपूर्वो धातुः कर्मव्यतिहारे दृष्ट इति व्यवहारशब्दोऽपि कर्मव्यतिहारे वर्त्तते, ततश्च पूर्वेणैवात्र सिद्धेरत्रास्य

### न्यासः

इत्यादिनैव सिद्धे नियमार्थमेतत्—केवलस्यैव यथा स्यात्, तदादेर्मा भूदिति। अव्युत्पत्तिपक्षे विध्यर्थमेतदिति। अपदान्तत्वाद् यकारस्य।

**न कर्मव्यतिहारे** ॥ **यदुक्तमिति**। वृद्धिप्रतिषेधः, ऐजागमश्च। **व्याक्रोशीत्यादि**। 'क्रुश आह्वाने', 'लिख अक्षरविन्यासे', चर्च अध्ययने' चुरादिः, 'हसे हसने'—एभ्यो व्यवपूर्वेभ्यो णच्, तदन्तादञ्। अत्र यथोक्ते कार्ये प्रतिषिद्धे वृद्धिरेव भवति, द्वौ प्रतिषेधौ प्रकृत्यर्थं गमयत इति कृत्वा। 'टिड्ढाणञ्' इति ङीप्।

**स्वागतादीनां च** ॥ **स्वागतिक इति**। शोभनमागतं स्वागतम्। 'तदाहेत्यादौ प्रभूतादिभ्य उपसंख्यानम्' इति ठक्। **स्वाध्वरिक इति**। अत्रापि 'चरति' इति ठक्। शोभनोऽध्वरः स्वध्वरः। **स्वाङ्गिरित्यादि**। स्वाङ्गिर्व्याङ्गिर्व्याडिरिति 'अत इञ्'। शोभनान्यङ्गान्यस्य स्वङ्गः, विगतान्यङ्गान्यस्य व्यङ्गः, विगतोऽडोऽस्य व्यडः। व्यवहरणं व्यवहारः, भावे घञ्। ननु च व्यवहारशब्दोऽयं कर्मव्यतीहारे वर्तते, तत्र 'न कर्मव्यतीहारे' इति प्रतिषेधः सिद्धः, तत् कस्मादिह पठ्यते? इत्याह—**व्यवहारशब्दोऽयमिति**। किं पुनर्लौकिकम्? लौकिकं पुनर्वृत्तं येनाचारेण व्यवहारा-

---

1. 'तदन्ताद् टिड्ढाणमिति ङीप्'—इत्यधिकमेकस्मिन्पुस्तके।

व्यावहारिकः । व्यवहारशब्दोऽयं लौकिके वृत्ते वर्त्तते, न तु कर्मव्यतिहारे । स्वपतौ साधुः स्वापतेयः । द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः ।

स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति । स्वागतादिः ॥

श्वादेरिञि ॥ ८ ॥

श्वादेरङ्गस्य इञि परतो यदुक्तं तन्न भवति । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । श्वन्शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम् ।

❀ इकारादिग्रहणं कर्त्तव्यं श्वागणिकाद्यर्थम् ❀ । श्वगणेन चरति

पदमञ्जरी

पाठोऽनर्थक इत्याशङ्कयाह—*व्यवहारशब्दोऽयमिति* । द्वारादिषु स्वशब्दस्य पाठादत्र *प्रसङ्ग इति* । 'तदादेरपि तत्र ग्रहणं भवति' इत्युक्तमेव ॥

*श्वादेरिञि* ॥ *तत्र चेत्यादि* । यदि तत्र तदादिविधिर्न स्यात् एतद्वचनमनर्थकम्, कथम् ? केवलश्वन्शब्दो द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यत्तदादेः स्यात् ! *तदादिविधिर्भवतीति* । अस्मिन्प्रकरणे यदुक्तं तद्वृद्धिभाजोऽचो विशेषणमित्यस्मिन्नर्थे ज्ञापकमित्यर्थः । *इकारादिग्रहणं चेत्यादि* । श्वादेरितीति वक्तव्यमित्यर्थः । तत्र

न्यासः

ल्लोके व्यावहारिक इत्युच्यते तद्वेदितव्यम् । स्वापतेयमिति । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । कथं पुनरत्र प्राप्तिः, यावता नास्य वकारः पदान्तः ? इत्याह—द्वारादिषु स्वशब्दपाठादस्य प्राप्तिरिति । तदादिविधिनेत्यभिप्रायः । यथा तदादिविधिर्भवति तथा तत्रैवोक्तम् ॥

श्वादेरिञि ॥ श्वाभस्त्रिः, श्वादंष्ट्रिरिति । श्वेव भस्त्रा यस्य, शुन इव दंष्ट्रा यस्येति बहुव्रीहिः, उपसर्जनह्रस्वत्वम् । केन पुनः श्वादेर्वृद्धिप्रतिषेधः प्राप्नोति, यतोऽयं प्रतिषेध उच्यते, न ह्यस्य वकारः पदान्तः ? इत्यत आह—श्वशब्दो द्वारादिषु पठ्यत इति । ननु च केवलः श्वशब्दो द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यस्तदादेः स्यात् ! 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिरिति चेत् ? नैतदस्ति; सप्तमीनिर्दिष्टे ह्यल्ग्रहणे च सति तदादिविधिर्भवति, न चात्रैतदुभयमस्तीत्यत आह—तत्र चेत्यादि । यदि तत्र तदादिविधिर्न स्यात्, तदैतत् प्रतिषेधवचनमनर्थकं स्यात्; प्राप्त्यभावादित्यभिप्रायः । ज्ञापकस्य प्रयोजनम्—शौवादंष्ट्रो मणिरित्यादौ वृद्धिप्रतिषेधः ।

इकारादिग्रहणं कर्तव्यमिति । इकारादितद्धितो गृह्यते, येन तदिकारादिग्रहणं व्याख्यानं कर्त्तव्यमित्यर्थः । किमर्थमित्याह—श्वागणिकाद्यर्थमिति । श्वागणिकादीनामर्थः—

श्वागणिकः । श्वायूथिकः ।

तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते । श्वाभस्त्रेरिदं श्वाभस्त्रम् ॥

पदान्तस्यान्यतरस्याम् ॥ ९ ॥

श्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्यां यदुक्तं तन्न भवति । श्वापदस्येदं श्वापदम्, शौवापदम् ॥

उत्तरपदस्य ॥ १० ॥

'उत्तरपदस्य' इत्ययमधिकारः, 'हनस्तोऽचिण्णलोः' इति प्रागे-

पदमञ्जरी

वर्णग्रहणे सप्तमीनिर्देशात्तदादिविधिः । *श्वागणिक इति* । 'श्वगणाट्ठञ्' इति ठञ् । *तदन्तस्येति* । इञन्तस्य । *श्वाभस्त्रमिति* । 'इञश्च' इत्यण् । तन्निमित्तो वृद्धिप्रतिषेधः, ऐजागमश्च भिन्नकक्षत्वादशक्य इञाश्रयेण प्रतिषेधेन निवारयितुमिति वचनारम्भः ॥

*उत्तरपदस्य* ॥ उत्तरत्र 'अचामादेः' इत्यनुवृत्तेरुत्तरपदस्याचामादेर्वृद्धिर्वेदितव्या ।

ननु च 'अवयवादृतोः' इत्यादौ 'अवयवाद्' इत्यादिका पञ्चमी, तत्रान्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति ? अत आह—*यत्रेति* । आदिपदेन 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च', अनुशतिकादीनां च', 'देवताद्वन्द्वे च'—इत्येतेषां

न्यासः

प्रयोजनं यस्मिंस्तत् तथोक्तम् । अर्थस्तु तेषामादिवृद्धिरेव । तत्रेदं व्याख्यानम् = इञ्ग्रहणमिहेकारादेस्तद्धितस्योपलक्षणार्थम्, तेनान्यत्रापि तद्धिते प्रतिषेधो भवतीति ।

तदन्तस्येति । इञन्तस्यान्यत्रापीति । अणि । कथं पुनरिष्यमाणोऽन्यत्र लभ्यते, यावतान्यत्रापि तद्धित उत्पन्न इञः 'यस्येति च' इति लोपेन भवितव्यम् ? नैष दोषः; इञीति नेयं निमित्तसप्तमी, किं तर्हि ? परसप्तमी । निमित्तसप्तम्यामणिनिमित्ताया वृद्धेः प्रतिषेधस्य प्रतिषेधो न स्यात् । परसप्तम्यां तु यद्यपि लोपः क्रियते, तथापि स्थानिवद्भावात् प्रतिषेधः सिध्यति । श्वाभस्त्रमिति । 'इञश्च' इत्यण् ॥

पदान्तस्यान्यतरस्याम् ॥ पूर्वेण नित्ये प्राप्ते प्रतिषेधे विकल्प उच्यते । पदान्तस्येति । पदशब्दान्तस्येत्यर्थः । श्वापदमिति । शुन इव पदमस्येति श्वपदः, तस्येदं श्वापदम् । शौवापदमिति । 'अन्येषामपि दृश्यते' इति दीर्घः ।

उत्तरपदस्य ॥ अङ्गस्याचामादेरचो वृद्धौ प्राप्तायामिदमुच्यते । ननु च 'अवयवादृतोः' इत्यादौ पञ्चमीनिर्देशादन्तरेणाप्युत्तरपदाधिकारम् 'तस्मादित्युत्तरस्य' इत्युत्तर-

तस्मात् यदित ऊर्ध्वमनुक्रमिष्यामः, 'उत्तरपदस्य' इत्येवं तद्वेदितव्यम्। वक्ष्यति–"'अवयवादृतोः'। पूर्ववार्षिकम्। अपरवार्षिकम्। पूर्वहैमनम्। अपरहैमनम्"।

यत्र पञ्चमीनिर्देशो नास्ति–'जे प्रोष्ठपदानाम्' इत्येवमादौ, तदर्थमुत्तरपदाधिकारः।

पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम्, वृद्धेश्च व्यपदेशार्थम्। 'उत्तरपदवृद्धौ सर्वं च' इत्युत्तरपदाधिकारे या वृद्धिरित्येवं विज्ञायते ॥

### पदमञ्जरी

ग्रहणम्। एषु योगेषु पञ्चमीनिर्देशाभावादसत्यस्मिन्नधिकारेऽङ्गस्याचामादेरचो वृद्धिः स्यात्, नोत्तरपदस्य। वचनं तु नियमार्थं स्यात्––ज एव प्रोष्ठपदानाम्, नान्यत्र। प्रोष्ठपदानामेव वा जे इति। वचनसामर्थ्याद्वा पूर्वपदस्यैवानाद्यचो वृद्धिविधानार्थं स्यात्। तस्मादेतदर्थमेवायमधिकारः कर्त्तव्यः।

किमिदानीं पञ्चमीनिर्देशेष्वस्यानुयोग एव? नेत्याह––*पञ्चमीनिर्देशेष्वपीति*। *वृद्धेश्च व्यपदेशार्थमिति*। उत्तरपदाधिकारे विहिता या वृद्धिरिति व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः। क्व पुनरेवंविधेन व्यपदेशेन प्रयोजनम्? इत्यत आह–– *उत्तरपदवृद्धौ सर्वं चेत्यत्रेति*। सर्वभासः, सर्वकार इत्यादौ मा भूदित्येवमर्थं तत्रैवमाश्रितम् ॥

### न्यासः

पदस्यैव भविष्यति, तत् किमुत्तरपदाधिकारेण? इत्यत आह–यत्रेत्यादि। आदिशब्देन 'द्वन्द्वगसिन्ध्वन्ते पूर्वपदस्य', 'अनुशतिकादीनाञ्च', 'देवताद्वन्द्वे च'––इत्येवमादयो गृह्यन्ते। एषु पञ्चमीनिर्देशाभावादसत्युत्तरपदाधिकारेऽङ्गस्याचामादेरच एव वृद्धिः स्यात्, नोत्तरपदस्य। तस्मात् तदर्थमुत्तरपदाधिकारः क्रियते।

यद्येवम्, इह 'अवयवादृतोः' इत्येतन्नोपन्यसनीयम्, अत्र पञ्चमीनिर्देशस्य विद्यमानत्वात्?–इति चोद्यमाशङ्क्यान्यार्थं क्रियमाणस्य यत्रापि पञ्चमीनिर्देशोऽस्ति, तत्रापि प्रासङ्गिकं कार्यमाह–पञ्चमीनिर्देशेष्वपीत्यादि। प्रयोजनान्तरमप्याह––वृद्धेश्चेत्यादि। उत्तरपदाधिकारे या विहिता वृद्धिरित्येष व्यपदेशो वृद्धेर्यथा स्यादित्येवमर्थञ्चोत्तरपदाधिकारः क्रियते। किं पुनः कारणमेवं वृद्धेर्व्यपदेशः प्रार्थ्यते? इत्याह––उत्तरपदवृद्धावित्यादि। उत्तरपदाधिकारे विहिते वृद्धिमत्युत्तरपदे पूर्वपदस्यान्तोदात्तत्वं यथा स्यादित्येवमर्थम्। 'उत्तरपदवृद्धौ सर्वञ्च' इत्यत्रोत्तरपदाधिकारे या विहिता वृद्धिरित्येवं विज्ञायते। एतत्कथं शक्यते विज्ञातुम्? यदि व्यपदेशार्थं उत्तरपदाधिकारः क्रियते, नान्यथा। तस्माद् व्यपदेशार्थश्चोत्तरपदाधिकारः कर्त्तव्यः ॥

## अवयवादृतोः ॥ ११ ॥

अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । पूर्ववार्षिकम् । पूर्वहैमनम् । अपरवार्षिकम् । अपरहैमनम् । पूर्वं वर्षाणाम्, अपरं वर्षाणामित्येकदेशिसमासः । 'तत्र भवः' इत्येतस्मिन्नर्थे 'वर्षाभ्यष्ठक्', 'हेमन्ताच्च', सर्वत्राण् च तलोपश्च' इत्यणप्रत्ययः, तत्र ऋतोर्वृद्धिमद्विधौ 'अवयवात्' इति तदन्तविधिः ।

अवयवादिति किम् ? पूर्वासु वर्षासु भवं पौर्ववर्षिकम् । 'कालाट्ठञ्' इति ठञ् । अवयवपूर्वस्यैव तदन्तविधिः, नान्यस्य ॥

## सुसर्वार्धाज्जनपदस्य ॥ १२ ॥

### पदमञ्जरी

*अवयवादृतोः* ॥ ऋतोर्वृद्धिमद्विधावित्यादि । ऋतोः=ऋतुवाचिनः शब्दाद्वृद्धिमद्विधौ=वृद्धिनिमित्ते प्रत्यये विधीयमाने तदन्तविधिः, ऋतुशब्दान्तादपि प्रत्ययो भवतीत्यर्थः । किं सर्वत्र ? नेत्यत आह—*अवयवादिति* । अवयववचनात् परो यदा ऋतुवचनस्तदेत्यर्थः । ये तु—अवयवानामिति षष्ठीबहुवचनान्तं पठन्ति, तेषां न समीचीनोऽर्थः । तथा च 'सुसर्वार्धदिक्शब्देभ्यः' इति पञ्चम्या निरदेशि । *पूर्वासु वर्षासु भव इति* । 'तद्धितार्थ' इति समासः । अन्ये तु—अदिक्शब्दत्वाद्विशेषणसमासं मन्यन्ते । अथात्रापि तदन्तविधिना वर्षाभ्यष्ठगेव कस्मान्न भवति ? अत आह—*अवयवपूर्वस्यैव हीति* ॥

### न्यासः

**अवयवादृतोः** ॥ नेदं स्वरूपग्रहणम् ? किं तर्हि ? अर्थग्रहणम् । तथा ह्यवयवादित्युच्यते, ऋतोश्चार्थं एवावयवी भवति । अवयवित्वेनर्त्तौ विज्ञायमानेऽर्थनिर्देशोऽयं विज्ञायते, ततश्चावयववाचिनः पूर्वपदादुत्तरस्यर्तुवाचिनः कार्यं विज्ञायत इत्याह—**अवयववाचिन इत्यादि** । **एकदेशिसमास इति** । पूर्वापरादिसूत्रेण । ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, तत् कथं वर्षाहेमन्ताभ्यां प्रत्ययो विधीयमानस्तदन्ताभ्यां लभ्यते ? इत्याह—**तत्र ऋतो वृद्धिमद्विधाववयवानामिति** ।

**पौर्ववर्षिक इति** । पूर्वाश्च ता वर्षाश्चेति विशेषणसमासं कृत्वा भवार्थे तद्धितो विधेयः । पूर्वशब्दोऽत्र कालवाची, न त्ववयववाचीत्यङ्गस्यादिवृद्धिरेव भवतीति । अथात्रापि तदन्तविधिना ठक् कस्मान्न भवति ? इत्याह—**अवयवपूर्वस्यैव हीत्यादि** ॥

**सुसर्वार्धाज्जनपदस्य** ॥ जनपदस्येति नेदं स्वरूपग्रहणम्, उत्तरसूत्रे 'अमद्रा-

सु, सर्व, अर्ध—इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। 'जनपदतदवध्योश्च', 'अवृद्धादपि बहुवचनविषयात्' इति वुञ्। 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' इति तदन्तविधिः ॥

**दिशोऽमद्राणाम् ॥ १३ ॥**

दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दक्षिणपाञ्चालकः। पूर्ववत्तदन्तविधिः प्रत्ययश्च।

दिश इति किम्? पूर्वः पञ्चालानां पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणामिति किम्? पौर्वमद्रः। आपरमद्रः। 'मद्रेभ्योऽञ्' इत्यञ्प्रत्ययः ॥

पदमञ्जरी

*सुसर्वार्धाज्जनपदस्य* ॥ *जनपदवाचिन इति*। स्वरूपग्रहणं तु न भवति; उत्तरसूत्रे मद्रप्रतिषेधात्। *सुसर्वार्धेत्यादि*। जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तस्यापि ग्रहणं भवति, यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः ॥

*दिशोऽमद्राणाम्* ॥ *पूर्वपाञ्चालक इति*। तद्धितार्थे समासः। *पौर्वपञ्चालक इति*। अवयववाच्यत्र पूर्वशब्दः, एकदेशिसमासाद् वुञ्प्रत्ययः। अदिक्शब्दत्वाद्

न्यासः

णाम्' इति निषेधात्। उत्तरसूत्रे हीदमेव जनपदग्रहणमनुवर्त्तते, ततोऽत्र यदि स्वरूपग्रहणं स्यात्, मद्राणां प्रतिषेधोऽनर्थकः स्यात्, तस्मादर्थस्येदं ग्रहणम्, तेन जनपदवाचिनः कार्यं विज्ञायत इत्याह—सुसर्वार्ध इत्येतेभ्य उत्तरस्य जनपदवाचिन इत्यादि। सुपाञ्चालक इति। शोभनाः पञ्चाला इति प्रादिसमासः। सर्वपाञ्चालक इति। 'पूर्वकालैक' इत्यादिना कर्मधारयः। अर्धपाञ्चालक इति। 'अर्धं नपुंसकम्' इत्यर्धशब्देन तत्पुरुषः। सर्वत्र शैषिके जातादावर्थे तद्धितः। कथं जनपदात् 'जनपदतदवध्योश्च' इत्युच्यमानः प्रत्ययस्तदन्ताद् भवति? इत्याह—सुसर्वार्धदिक्शब्देभ्य इत्यादि।

दिशोऽमद्राणाम् ॥ पूर्वपाञ्चालक इति। पूर्वेषु पञ्चालेषु भव इति तद्धितार्थे समासः, ततो वुञ्। दिश इति किम्? पूर्वं पञ्चालानां पूर्वपञ्चालः[1]। पूर्वापरादि-

---

1. चिन्त्यमिदम्; एकाधिकरणस्याभावात्। जनपदत्वेन बहुत्वं तु नानेकाधिकरणवदिति केचित्।

## प्राचां ग्रामनगराणाम् ॥ १४ ॥

प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः ।

ग्रामाणाम्—पूर्वेषु कामशम्यां भवः पूर्वैषुकामशमः । अपरैषुकामशमः । पूर्वकार्ष्णमृत्तिकः । अपरकार्ष्णमृत्तिकः ।

नगराणाम्—पूर्वस्मिन्पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः । अपरपाटलिपुत्रकः । पूर्वकान्यकुब्जः । अपरकान्यकुब्जः ।

### पदमञ्जरी

आदिवृद्धिरेव भवति । यद्येवम्, वुञापि न भवितव्यमदिक्शब्दत्वादेव ? अस्त्यत्र विशेषः, सुसर्वार्द्धादिक्शब्देभ्य इति तदन्तविधौ शब्दग्रहणं क्रियते—दिशि दृष्टः शब्दो दिक्शब्द इत्येवं यथा विज्ञायेत, वृद्धिविधौ तु दिश इत्येतावदुच्यते । अन्ते त्वणन्तमेव प्रत्युदाहरणं पठन्ति ॥

*प्राचां ग्रामनगराणाम्* ॥ 'प्राचाम्' इति नाचार्यनिर्देशः; जनपदादिभिर्देशैः साहचर्यात् ।

*पूर्वैषुकामशम इति* । पूर्वा चासाविषुकामशमी चेति 'दिक्संख्ये संज्ञायाम्' इति समासः, ततो भवार्थे 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्ययः ।

*पूर्वपाटलिपुत्रक इति* । पूर्ववत्समासः, 'रोपधेतोः प्राचाम्' इति वुञ् । यद्यप्येकमेव पाटलिपुत्रम्, तथापि पाटलिपुत्रस्यैकदेशे पाटलिपुत्रशब्दस्य वृत्तेः पूर्वत्वविशेषणं युक्तमेव ।

### न्यासः

सूत्रेणैकदेशिसमासः, तत्र भवः पौर्वपञ्चालः[१] । दिशि यो वर्त्तते स इह दिक्शब्दोऽभिप्रेतः । न चायं पूर्वशब्दो दिशि वर्त्तते, किं तर्हि ? अवयवे । तेन पूर्वपदवृद्धिरेव भवति । योगविभाग उत्तरार्थः—प्राचां ग्रामनगराणां दिश एवोत्तरपदस्य यथा स्यात्, सुसर्वार्धान्मा भूदिति ॥

प्राचां ग्रामनगराणाम् ॥ 'जनपदस्य' इत्यनुवर्त्तते, तेन प्राचामित्येतद् देशग्रहणं विज्ञायते, न त्वाचार्यग्रहणमिति मत्वाऽऽह—प्राचां देशे ग्रामाणामित्यादि । पूर्वैषुकामशम इति । पूर्वा चासाविषुकामशमी चेति 'दिक्संख्ये संज्ञायाम्' इति समासः, ततो भवार्थे 'दिक्पूर्वपदादसंज्ञायां ञः' इति । पूर्वपाटलिपुत्रक इति । पूर्वस्मिन् पाटलिपुत्रे भव इति पूर्ववत् तद्धितार्थे समासः, 'रोपधेतोः प्राचाम्' इति वुञ् ।

१. 'पौर्वपञ्चालकः' इत्यपि क्वचित्, स चायुक्तः; यथाह नागेशः—"अत्र पूर्वशब्दो देशवाची । कालवाचीत्यपि कश्चित् । दिक्शब्दपदेन च दिग्वाचिशब्दस्यैव ग्रहणम् । अतोऽत्र तदन्तविधिविषयाभावान्न वुञ्" ।

ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत्सम्बन्धभेदप्रतिपत्त्यर्थम् । दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादिः ग्रामनामधेयम् । पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह ।

**पदमञ्जरी**

जना यत्र सन्ति स ग्रामः, ततश्च नगरमपि ग्रामः । ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरेऽपि न क्रियन्ते । तद्यथा—'अभक्ष्यो ग्रामकुक्कुटः' इति सुतरां नागरोऽपि न भक्ष्यते । 'ग्रामे नाध्येयम्' इति साधीयो नगरेऽपि नाधीयते । शास्त्रेऽपि—'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्', 'वाहीकग्रामेभ्यश्च', 'दिक्शब्दाः ग्रामजनपदाख्यानचानराटेषु'—नगरमपि गृह्यते, तस्मादिहापि नार्थो नगरग्रहणेन ? इत्यत आह—*ग्रामत्वादेवेति* । *सम्बन्धभेदप्रतिपत्त्यर्थमिति* । अङ्गस्येति प्रकृतम्, उत्तरपदस्येति च, तत्र ग्रामाणामित्येतदङ्गस्येत्यनेन सम्बध्यते–ग्रामवाचिनामङ्गानामिति । नगराणामित्येतदुत्तरपदस्येत्यनेन—नगरवाचिनामुत्तरपदानामिति । न चायं सम्बन्धभेदः सकृदुपात्ते ग्रामशब्दे सम्भवति, तस्मान्नगरग्रहणं क्रियते । तत्र *दिक्पूर्वपदो हीत्यादिना* सम्बन्धभेद

**न्यासः**

ननु चैकमेव पाटलिपुत्रम्, तत्र पाटलिपुत्रान्तरस्य व्यवच्छेद्यस्याभावात्, तत् कथं पूर्वशब्देन पाटलिपुत्रशब्दो विशिष्यते ? पाटलिपुत्रैकदेशे पाटलिपुत्रशब्दो वर्त्तत इत्यदोषः । अथ नगरग्रहणं किमर्थम्, न 'ग्रामाणाम्' इत्येवं सिद्धम्, नगरमपि हि ग्रामो भवत्येव; जननिकायनिवासे ग्रामो रूढः, नगरञ्च जननिकायनिवास एव, अतश्च नगरमपि ग्रामः; यतो ये ग्रामे विधयो नेष्यन्ते, नगरेऽपि ते न क्रियन्ते । तथा हि—अभक्ष्यो ग्राम्यकुक्कुटः', 'अभक्ष्यो ग्राम्यशूकरः—इत्युक्ते नागरोऽपि न भक्ष्यते; 'ग्रामे नाध्येतव्यम्' इत्युक्ते नगरेऽपि नाधीयते, तस्मान्नगरमपि ग्रामः । एवञ्च कृत्वा—'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्ताद्', 'वाहीकग्रामेभ्यश्च', 'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु' इत्यत्र ग्रामग्रहणेन नगरग्रहणमपि भवतीत्याह—ग्रामत्वादेवेत्यादि । यदि तर्हि नगरमपि ग्रामः, तदा विशिष्टलिङ्गः 'नदीदेशोऽग्रामाः' इत्यत्र नगरग्रहणं प्राप्नोति ? सत्यमेतत्, तत्र तु नगराणां प्रतिषेधो वक्तव्यः । स एव च सम्बन्धभेदः कुतो हेतोर्भवति, यस्य प्रतिपत्तये ग्रामनगरयोर्भेदेनोपादानं क्रियते ! इत्याह–दिक्पूर्वपदो हीत्यादि । यदि हि यथा दिक्पूर्वपदः पूर्वोत्तरसमुदायः पूर्वेषुकामशम्यादिर्ग्रामनामधेयम्, तथा नगरनामधेयमपि स्यात्, ततः सम्बन्धो न भिद्येत । यथा च पाटलिपुत्रादि शब्दरूपमुत्तरपदभूतमेव नगरस्य वाचकम्, तथा यदि ग्रामनामधेयमपि ग्रामस्य स्याद्, एवमपि सम्बन्धो न भिद्येत ? न चैवम्; अन्यादृश एव हि पूर्वोत्तरसमुदायात्मको ग्रामवाची शब्दः, अन्यादृशश्चोत्तरपदात्मको नगरवाची शब्दः । तस्माद् ग्रामनगरयोर्भेदात् सम्बन्धभेदो भवति । एवं सम्बन्धभेदहेतुं दर्शयित्वा सम्बन्धभेदं दर्शयन्नाह—

तत्र ग्रामवाचिनामङ्गानामवयवस्य दिक्शब्दादुत्तरस्य च नगरवाचिनामुत्तरपदानामवयवस्य वृद्धिर्भवतीत्येवमभिसम्बन्धः क्रियते । इतरत्र तु दिश उत्तरेषां नगराणामित्येव ।

पूर्वैषुकामशमः—इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितम् 'नेन्द्रस्य परस्य' इति प्रतिषेधेन ॥

संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥

संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः ।

पदमञ्जरी

आश्रयणीय इत्यत्र हेतुर्दर्शितः । *तत्रेत्यादिना* तु स एव सम्बन्धभेदः । इह पूर्वैषुकामशम इति समसनक्रियानन्तरं पूर्वोत्तरपदयोर्गुणः प्राप्नुवन्नन्तरङ्गः, उत्तरपदवृद्धिस्तु पश्चादुपनततद्धितापेक्षत्वाद्बहिरङ्गा, तत्र गुणे कृते पूर्वोत्तरयोर्व्यपवर्गाभावाद्वृद्धिर्न प्राप्नोति; अन्तादिवद्भावोऽप्युभयत आश्रयणे प्रतिषिद्धः । अत्र हि दिग्वाचि पूर्वपदमुत्तरपदं च युगपदाश्रीयेते, तत्राह—*पूर्वैषुकामशम इत्येवमादिष्विति* । यथा 'नेन्द्रस्य परस्य' इति ज्ञापकम्, तथा तत्रैव वक्ष्यामः ॥

*संख्यायाः संवत्सरसंख्यस्य च* ॥ संवत्सरश्च संख्या च संवत्सरसंख्यम्, समाहारद्वन्द्वः । *द्विसांवत्सरिक इति* । 'प्राग्वतेष्ठञ्', तस्य 'अध्यर्धपूर्व' इति लुग्न

न्यासः

तत्रेत्यादि । ग्रामवाचिनामिति । पूर्वेषुकामशमीत्येवमादीनाम् । अवयवस्येति । इषुकामशमी-कृष्णमृत्तिकेत्येवमादेः । दिक्शब्दादिति । पूर्वादेः । इतरत्र त्वित्यादि । नगरेषु । दिश उत्तरेषां नगराणामिति । अत्र वृद्धिर्भवतीत्यभिसम्बन्धः क्रियत इत्येतदपेक्ष्यते ।

पूर्वैषुकामशम इत्येवमादिषु पूर्वोत्तरपदयोरन्तरङ्गत्वादाद् गुणे कृते दिक्शब्दो ग्रामश्चोत्तरपदं नास्तीति वृद्धिर्न प्राप्नोति, वृद्धिर्हि तद्धिते कृते तदाश्रयेण भवन्ती बहिरङ्गा भवति । प्रागेव तद्धितोत्पत्तेर्गुणः प्राप्नुवन्नन्तरङ्गो भवति । न च वचनाद् वृद्धिर्भविष्यतीति शक्यते वक्तुम्, यत्र ह्येकादेशो नास्ति स च वचनस्यावकाशः—पूर्वकार्ष्णमृत्तिक इत्येवमादौ । न चान्तादिवद्भावोऽस्ति; उभयत आश्रये नान्तादिवदिति प्रतिषेधात् । अतोऽत्र पूर्वपदमुत्तरपदञ्चाश्रीयते ?—इति यश्चोदयेत्, तं प्रत्याह—पूर्वैषुकामशम इत्येवमादिष्वित्यादि । यथा 'नेन्द्रस्य परस्य' इति निर्देशेनायमर्थो ज्ञापितः, तथा 'अदस औ सुलोपश्च' इत्यत्र प्रतिपादितः । ग्रामनगराणामिति बहुवचनं स्वरूपविधिनिरासार्थम् ॥

संख्यायाः संवत्सरसंख्यस्य च ॥ द्विसांवत्सरिक इति । पूर्ववत् तद्धितार्थे

संख्यायाः—द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः। द्विसाप्ततिकः। द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्त्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति।

'परिमाणान्तस्य' इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन द्वैसमिकः, त्रैसमिकः—इत्युत्तरपदवृद्धिर्न

पदमञ्जरी

भवति, अनार्हीयत्वात्।

*द्विषाष्टिक इति*। ननु 'तमधीष्टो भृतः' इत्यत्र कालादिति वर्त्तते, तत्कथं द्विषष्ट्यादिशब्देभ्यः प्रत्ययः? इत्यत आह—*द्विषष्ट्यादिशब्द इति*। कालवृत्तिः शब्दस्तत्र गृह्यते, न मासादय एवेति भावः।

ननु च 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र परिच्छेदहेतुत्वमात्रं गृह्यते, न त्वारोहतः परिणाहतश्च येन मीयते तदेव प्रस्थादि; अन्यथा शाणप्रतिषेधोऽनर्थकः स्यात्; कालश्चापि परिच्छेदहेतुर्भवत्येव, ततश्च संवत्सरग्रहणमनर्थकम्, परिमाणान्तस्येत्येव सिद्धत्वात्? इत्यत आह-*संवत्सरग्रहणमिति*। *द्वैसमिक इति*। अधीष्टादिषु 'समायाः खः', 'द्विगोर्वा' इति पक्षे ठञ्।

न केवलं वृद्धिविषयमेव ज्ञापकम्, किं तर्हि? सार्वत्रिकमित्याह—*द्विवर्षामाणविकेति*। द्वे वर्षे भूता इति पूर्ववट्ठञ्, तस्य 'वर्षाल्लुक्', 'चित्तवति

न्यासः

समासः। ततः प्राग्वतीयष्ठञ्[1]।

द्विषाष्टिकः, द्विसाप्ततिक इति। ननु च 'तमधीष्टो भृतो भूतो भावी' इत्यत्र कालादिति वर्त्तते, न द्विषष्ट्यादिः कालशब्दः, किं तर्हि? संख्याशब्दः, तत्कथं कालाधिकारविहितं प्रत्ययमुत्पादयति? इत्याह—द्विषष्ट्यादिशब्द इत्यादि। कालवाचिशब्दस्तत्र कालग्रहणेन गृह्यते, द्विषष्ट्यादिशब्दो हि यदा वर्षेषु संख्येयेषु वर्तते, तदा कालवृत्तित्वात् कालशब्दो भवति। ततः कालाधिकारीयं प्रत्ययमुत्पादयति।

अथ संवत्सरग्रहणं किमर्थम्, यावता 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र परिमाणशब्देन परिच्छेदहेतुमात्रं गृह्यते, न तु प्रस्थादिवदारोहपरिणाहपरिच्छेदहेतुः; अन्यथा हि शाणप्रतिषेधोऽनर्थकः स्यात्, न हि शाणः परिमाणमारोहपरिणाहपरिच्छेदहेतुः; अतः कालोऽपि परिच्छेदहेतुर्भवति, ततश्च सोऽपि परिमाणमिति संवत्सरशब्दस्य 'परिमाणस्यासंज्ञाशाणयोः' इत्येव सिद्धम्? इति चोद्यनिरासायाह—संवत्सरग्रहणमित्यादि। परिमाणग्रहणेन कालपरिमाणस्य ग्रहणं मा भूदित्येवमर्थं संवत्सरग्रहणम्। संवत्सरग्रहणेनासावर्थो ज्ञाप्यते—परिमाणग्रहणे कालपरिमाणग्रहणं न भवतीति। ततश्च यत्र परिमाणग्रहणं तत्र कालपरिमाणं न गृह्यते। तेनेत्यादिना परिमाणग्रहणे

१. क्वचिदार्हीयष्ठगिति पाठः, स चायुक्तः। आर्हीये तु तस्याध्यर्धपूर्वेति लुक्स्यात्।

भवति । द्विवर्षा त्रिवर्षा माणविकेति 'अपरिमाणबिस्ताचित' इति पर्युदासो न भवति ॥

वर्षस्याभविष्यति ॥ १६ ॥

संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः, स चेत्तद्धितो भविष्यत्यर्थे न भवति । द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः । त्रिवार्षिकः ।

अभविष्यतीति किम् ? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये, अधिकं वापि विद्येत, स सोमं पातुमर्हति । त्रीणि वर्षाणि भावीति त्रैवर्षिकम् ।

पदमञ्जरी

नित्यम्' इति लुक् । *पर्युदासो न भवतीति* । प्रतिषेधस्य । तेन प्रतिषेध एव भवति ।

अथ संख्याग्रहणं किमर्थम्, यावता संख्ययापि परिच्छिद्यते, तत्र 'परिमाणान्तस्य' इत्येव सिद्धम् ? केचिदाहुः—संख्याग्रहणमपि ज्ञापकार्थमेव, परिमाणग्रहणेन संख्यापि न गृह्यत इति । तथा च 'अपरिमाणबिस्ताचित' इत्यत्र वृत्तावुक्तम्—'कालः संख्या च परिमाणं न भवति । द्विवर्षा, त्रिवर्षा, द्विशता, त्रिशता' इति । अपर आह—साक्षाच्छिष्टेन निमित्तभावेनानुमितं कार्यित्वं मा बाधीति परिमाणात्पृथगिह संख्याग्रहणं कृतमिति ॥

*वर्षस्याभविष्यति* ॥ *यस्येत्यादि* । यस्य यियक्षोर्यागवर्षादारभ्य त्रीणि वर्षाणि धान्यं भावि=तावन्तं कालं जीवनाय पर्याप्तम्, स सोमयागेऽधिकारी, न न्यून

न्यासः

कालपरिमाणस्याग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति । उत्तरपदवृद्धिर्न भवतीति । 'परिमाणान्तस्य' इत्यादिना । द्विवर्षेति । द्वे वर्षे भृतो भूतो भावी वा पूर्ववट् ठक्, तस्य 'वर्षाल्लुक्' इत्यनुवर्तमाने 'चित्तवति नित्यम्' इति लुक् । पर्युदासो न भवतीति । ङीप्प्रतिषेधे कर्त्तव्ये तेन प्रतिषेधः प्रवर्त्तत एवेति 'द्विगोः' इति ङीन्न भवति ॥

वर्षस्याभविष्यति ॥ द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्य इति । अत्राधीष्टभृतयोस्तद्धित उत्पन्ने भविष्यत्ता प्रतीयते, तस्मात् तयोरपि प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—अधीष्टभृतयोरित्यादि । किं पुनः कारणं न भवति ? इत्याह—गम्यते हीत्यादि । तत्र यदि शब्दान्तरम् 'द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति' इति प्रयुज्यते, ततो भविष्यत्ता गम्यते, नान्यथा । तस्मान्नासौ तद्धितार्थ इत्यधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति । ननु च मनुष्येऽभिधेये 'चित्तवति नित्यम्' इति ठञो लुका भवितव्यम्, तत्

अधीष्टभृतयोः 'अभविष्यति' इति प्रतिषेधो न भवति । गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः ॥

**परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥**

परिमाणान्तस्याङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः; संज्ञायां विषये शाणे चोत्तरपदे न भवति । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । 'विभाषा कार्षापणसहस्रा-

**पदमञ्जरी**

इत्यर्थः । *गम्यते हीति* । वाक्यार्थस्तत्र भविष्यत्ता, न पदार्थ इत्यर्थः । *द्विवार्षिको मनुष्य इति* । 'वर्षाल्लुक्', 'चित्तवति नित्यम्' इति नित्यं लुग्न भवति; भूतार्थ एव हि स इष्यते, अन्यत्र चित्तवत्यपि विकल्प एव ॥

*परिमाणान्तस्यासंज्ञाशाणयोः ॥ द्विकौडविक इति* । कुडेरप्रत्यये कुडवः = प्रस्थचतुर्थभाग इत्युणादिषु व्युत्पत्तिः । कुडवमित्येतदव्युत्पन्नं शब्दान्तरं द्रष्टव्यम् । ततः 'प्राग्वतेष्ठञ्', अनार्हीयत्वाल्लुगभावः । *द्वाभ्यां सुवर्णाभ्यामिति* । शाणप्रतिषेधात्परिच्छित्तिसाधनमिह परिमाणम्, तेनोन्मानस्यापि भवति— लोहिनी = गुञ्जा, ताभिः पञ्चभिः परिमितमाकारविशेषयुक्तं हिरण्यं पाञ्चलोहितिकम् । *कलापः*=कश्चिन्मानविशेषः ।

**न्यासः**

कथं द्विवार्षिको मनुष्य इति सिध्यति ? नैष दोषः; न ह्यसावविशेषेण लुक्, किं तर्हि ? विशिष्ट एव विषये । कथम् ? तत्र नित्यग्रहणं कर्तव्यम्, पूर्वेणैव सिद्ध आरम्भसामर्थ्यादेव नित्यं लुग्भविष्यतीति, तत् कृतं विशिष्टे विषये भूते यथा स्यात्, अधीष्टादौ मा भूदित्येवमर्थम् । तेनाधीष्टादौ 'वर्षाल्लुक्' इति विभाषैव लुग्भवति ॥

परिमाणान्तस्यासंज्ञाशाणयोः॥ संज्ञायाः परत्वं न सम्भवतीत्यतः संज्ञाशाणयोरिति विषयसप्तमीं दर्शयन्नाह—संज्ञायां विषय इत्यादि । शाणे चोत्तरपद इति । विषय इत्यपेक्षते । यद्युत्तरपदस्य शाणस्य परत्वमुपपद्यते, तथापि दुर्घटमेकस्याः सप्तम्या विषयसप्तमीत्वम्, परसप्तमीत्वञ्चेति । तेन शाणशब्दमप्युत्तरपदं प्रति विषयसप्तम्येषा युक्ता । द्विकौडविकमिति । 'प्राग्वतेष्ठञ्' । अनार्हीयत्वाच्च प्रत्ययस्य 'अध्यर्धपूर्वद्विगोः' इति लुग्न भवति । द्विसौवर्णिक इति । स एव प्रत्ययः । कथं पुनरत्र वृद्धिः, यावता परिमाणान्तस्येत्युच्यते, सुवर्णञ्च गुरुत्वमानादुन्मानम्, न परिमाणमिति ? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—गुरुत्वपरिमाणमपीह परिच्छेदहेतुत्वात् परिमाणं गृह्यत इति

भ्याम्' इत्यत्र 'सुवर्णशतमानयोरुपसंख्यानम्' इति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतम् 'द्वित्रिपूर्वान्निष्काद्'—द्विनैष्किकम्।

असंज्ञाशाणयोरिति किम्? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। पञ्च लोहित्यः परिमाणमस्य, पञ्च कलापानि परिमाणमस्येति विगृह्य 'तदस्य परिमाणम्' इति योगविभागात्प्रत्ययः, तद्धितान्तश्चायं समुदायः संज्ञा। द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम्। त्रैशाणम्। 'शाणाद्वा', 'द्वित्रिपूर्वादण्च' इत्यण्प्रत्ययः।

'असंज्ञाशाणकुलिजानाम्' इति केचित्पठन्ति। द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः॥

## जे प्रोष्ठपदानाम् ॥ १८ ॥

'जे' इति जातार्थो निर्दिश्यते। तत्र यस्तद्धितो विहितस्तस्मिन् ञिति, णिति, किति च परतः प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धि-

### पदमञ्जरी

*योगविभागादिति*। पूर्वासु वृत्तिषु 'तदस्य परिमाणं संख्यायाः संज्ञा' इत्येकयोगेन पठितत्वाद्, भाष्ये तत्र योगविभागस्योक्तत्वादेवमुक्तम्। *तद्धितान्तश्चायमिति*। यथा तु 'अध्यर्धपूर्वद्विगोः' इत्यत्र वार्त्तिकं तथा तद्धितलुकि सति संज्ञेति तत्रैवावोचाम। *द्वैशाण इति*। यद्यत्रोत्तरपदवृद्धिः स्यात्, पूर्वपदस्य न स्यात्। कुलिजम् = धान्यमानम्। अन्तग्रहणं चिन्त्यप्रयोजनम्॥

जे *प्रोष्ठपदानाम्* ॥ *ज इति जातार्थो निर्दिश्यत इति*। उपसरज इत्यादौ दृष्टस्य पदैकदेशस्य प्रयोगः, भीमसेनो भीम इतिवत्।

### न्यासः

यदयम् 'असंज्ञाशाणयोः' इति शाणप्रतिषेधमारभते। अथ 'अध्यर्धपूर्व' इति लुक्कस्मान्न भवति? इत्याह—विभाषेत्यादि। द्विनैष्किकमिति। 'असमासे निष्कादिभ्यः' इति ठक्।

पाञ्चलोहितिक इति। तस्मिन्नेव ठकि कृते 'भस्याढे तद्धिते' इति पुंवद्भावेन 'वर्णादनुदात्तात् तोपधात् तो नः' इत्यनेन विहितयोर्ङीब्नकारयोर्निवृत्तिः।

द्वैकुलिजिकमिति। प्राग्वतीयष्ठञ्च॥

जे प्रोष्ठपदानाम् ॥ 'संख्यायाः' इति निवृत्तम्। ज इति जातार्थो निर्दिश्यत इति। जातशब्दैकदेशस्य ज इति, तस्यायं प्रयोगः। भवति हि पदैकदेशस्यापि प्रयोगः, यथा—भीमो भीमसेनः, सत्यभामा भामेति। तस्माज्जातशब्दस्यैकदेशस्य प्रयोगेण जातार्थो निर्दिश्यत इति विज्ञेयम्।

भवति । प्रोष्ठपदा नाम नक्षत्रम्, ताभिर्युक्तः काल इत्यण् । तस्य 'लुबविशेषे' इति लुप् । प्रोष्ठपदासु जातः—'ऋतुनक्षत्रेभ्योऽण्' इत्यण्—प्रोष्ठपदो माणवकः ।

जे इति किम् ? यदा प्रोष्ठपदो मेघो धरणीमभिवर्षति—प्रोष्ठपदासु भवः प्रोष्ठपदः ।

'प्रोष्ठपदानाम्' इति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते—भद्रपाद इति ॥

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥

हृद्, भग, सिन्धु—इत्येवमन्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । सुहृदयस्येदं सौहार्दम् । सुहृदयस्य भावः सौहार्द्यम् । सुभगस्य भावः सौभाग्यम् । दौर्भाग्यम् । सुभगाया अपत्यं सौभागिनेयः । दौर्भागिनेयः ।

कल्याण्यादिषु 'सुभगदुर्भग' इति पठ्यते । 'सुभग मन्त्रे' इत्युद्गात्रादिषु पठ्यते, तत्रोत्तरपदवृद्धिर्नेष्यते—महते सौभगाय; छन्दसि सर्व-

पदमञ्जरी

*बहुवचननिर्देशादिति* । यद्यपि ज्योतिषां बहुत्वाद्बहुवचनान्तप्रोष्ठपदाशब्दः, तथापि तस्यैव शब्दरूपापेक्षायामेकवचनं न्याय्यं मन्यते ॥

*हृद्भगसिन्ध्वन्ते पूर्वपदस्य च* ॥ *सुहृद इति* । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातितः सुहृच्छब्दः । यदा तु *सुहृदयस्येदमिति* पाठः, तदा 'हृदयस्य हृल्लेख' इत्यादिना हृद्भावः । *सौहार्यमिति* । 'वा शोकष्यञ्रोगेषु' इति हृद्भावः । सिन्धवो जनपदः, नदीवचनस्यापि ग्रहणम्, तथा समुद्रवचनस्यापि ॥

न्यासः

प्रोष्ठपदास्विति । 'लुपि युक्तवद् व्यक्तिवचने' इति युक्तवद्भावः । भद्रपाद इति। भद्रपदेन युक्तः काल इति अणादिकार्यं पूर्ववद्विधेयम् ।

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ सौहार्दमिति । 'तस्येदम्' इत्यण् । यदा सुहृदयशब्दादण्, तदा 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावः । सौहार्द्यमिति । 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ्, 'वा शोकष्यञ्रोगेषु' इति हृद्भावः । सौभागिनेयः, दौर्भागिनेय इति । 'कल्याण्यादीनामिनङ् च' इति ढकि कृत इनङादेशः ।

तत्रोत्तरपदवृद्धिर्नेष्यत इति । सुभगस्य भावः । 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' इत्यञि कृते, महते सौभगायवर्द्धन्तामित्येवं भवति । कथं पुनरिष्यमाणाप्युत्तरपदवृद्धिर्न प्राप्नोति ? इत्याह—छन्दसीत्यादि ।

विधीनां विकल्पितत्वात् ।

सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तुसैन्धवः । पानसैन्धवः । सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरिष्यते इत्यण्प्रत्ययः ॥

## अनुशतिकादीनां च ॥ २० ॥

'अनुशतिक'—इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । अनुशतिकस्येदम् आनुशातिकम् । अनुहोडेन चरति आनुहौडिकः । अनुसंवरणे दीयते आनुसांवरणम् । अनुसंवत्सरे दीयते आनुसांवत्सरिकः । अङ्गारवेणुर्नाम कश्चित्, तस्यापत्यम् आङ्गारवैणवः ।

असिहत्य–तत्र भवं आसिहात्यम् । 'अस्यहत्य' इति केचित्

### पदमञ्जरी

*अनुशतिकादीनां च* ॥ *आनुशातिकमिति* । शतेन क्रीतं शतिकम्, 'शताच्च ठन्यतावशते' इति ठन्, अनुगतः शतिकेन अनुशतिकः, ततः 'तस्येदम्' इत्यण् । *आनुहौडिक इति* । 'चरति' इति ठक् । *आनुसांवरणमिति* । 'तत्र च दीयते कार्यं भववत्' इत्यण् । *आनुसांवत्सरिकमिति* । 'बह्वचोऽन्तोदात्ताट्ठञ्' ।

### न्यासः

सक्तुसिन्धव इति । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । साक्तुसैन्धव इति । ओर्देशे ठञि प्राप्ते 'कच्छादिभ्यश्च' इत्यण् । ननु च केवलस्तत्र सिन्धुशब्दः पठ्यते, कथं तदन्ताद्भवति ? इत्याह–तेनेत्यादि । कथं पुनस्तेन सिन्धुशब्देन तदन्तविधिर्लभ्यते, यावता 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्तविधिः प्रतिषिध्यते ? नैष दोषः; चकारस्तत्रानुक्तसमुच्चयार्थः, तेन सिन्धुशब्दात् तदन्तादपि भवति ॥

अनुशतिकादीनाञ्च ॥ अनुशतिक इति । शतेन क्रीतः—'शताच्च ठन्यतावशते' इति ठन्—शतिकः, अनुगतः शतिकेनानुशतिकः, ततः 'तस्येदम्' इत्यण् । आनुशातिकम्, आनुहौडिकमिति । 'चरति' इति ठक् । आनुसांवत्सरिकमिति । 'तत्र च दीयते कार्यं भववत्' इत्यतिदेशाद् 'बह्वचोऽन्तोदात्तात्' इति ठञ् । आङ्गारवैणव इति । 'तस्यापत्यम्' इत्यण् ।

आसिहात्यमिति । 'तत्र भवः' इत्यण् । आस्यहात्यमिति । 'विमुक्तादिभ्योऽण्' । आस्यहैतिकमिति पाठे 'तदस्य प्रयोजनम्' इति प्राग्वतीयष्ठञ् । ननु च प्रातिपदिकादिति

पठन्ति, ततोऽपि विमुक्तादित्वादण् । अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति आस्यहात्यः । 'अस्यहेतिः' इत्येवमपरे पठन्ति, अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः । अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक् ।

वध्योग इति–विदादिरयम्, तस्यापत्यं वाध्योगः । पुष्करसत्, अनुहरत्–एतौ बाह्वादिषु पठ्येते । पौष्करसादिः, आनुहारतिः । कुरुकत–गर्गादिः, कौरुकात्यः । कुरुपञ्चाल––कुरुपञ्चालेषु भवः कौरुपाञ्चालः । 'जनपदसमुदायो जनपदग्रहणेन न गृह्यते' इति वुञ् न भवति–उदकशुद्धस्यापत्यम् औदकशौद्धिः ।

इहलोक, परलोक––तत्र भवः ऐहलौकिकः, पारलौकिकः । 'लोकोत्तरपदस्य' इति ठञ् । सर्वलोक––तत्र विदितः सार्वलौकिकः । सर्वपुरुषस्येदं सार्वपौरुषम् । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्व-

पदमञ्जरी

कुरुकत-शब्दो गर्गादिः ।

सार्वलौकिकमिति । 'लोकसर्वलोकाभ्यां ठञ्' । सार्वभौम इति । 'सर्वभूमि-

न्यासः

वर्तते, अस्यहत्यास्यहेतिश्च पदसमुदायोऽयम्, न प्रातिपदिकम्, तत्कथमतः प्रत्ययः ? सत्यपि वा प्रत्यये कथं विभक्तेरलुक् ? इत्याह––अत एवेत्यादि ।

वाध्योग इति । 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' । पौष्करसादिरानुहारतिरिति । 'बाह्वादिभ्यश्च' इतीञ् । कौरुकात्यमिति । गर्गादित्वाद् यञ् । कौरुपाञ्चाल इति । 'तत्र भवः' इत्यण् । ननु च जनपदशब्दात् 'जनपदतदवध्योश्च' इति वुञा भवितव्यम् ! इत्यत आह–जनपदसमुदायो जनपदग्रहणेनेत्यादि । कुरुपञ्चालशब्दो हि जनपदसमुदायवचनः, न च जनपदसमुदायो जनपदग्रहणेन गृह्यत इति कुतो वुञ्प्रसङ्गः ? औदकशौद्धिरिति । 'अत इञ्' ।

ऐहलौकिकः, पारलौकिक इति । 'लोकोत्तरपदस्य' इति ठञ् । एतत् 'समानस्य तदादेश्च' इत्येवमादिकायां कारिकायामियमिष्टिरिति पठ्यते । सार्वलौकिक इति । 'लोकसर्वलोकाट् ठञ्' । सार्वपौरुषमिति । 'तस्येदम्' इत्यण् । सार्वभौम इति । 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्, अञ्वा । प्रायौगिक इति । अध्यात्मादित्वाट् ठञ् । पारस्त्रैणेय इति । 'कुलटाया वा' इतीनङ् । तत्र 'स्त्रीभ्यो ढक्', 'कल्याण्यादीनामिनङ् च' इत्यनुवर्त्तते ।

भौमः । प्रयोग—तत्र भवः प्रायोगिकः । परस्त्री—पारस्त्रैणेयः । 'कुलटाया वा' इतीनङ् ।

❀ राजपुरुषात् ष्यञि ❀ । राजपौरुष्यम् । ष्यञीति किम् ? राजपुरुषस्यापत्यं राजपुरुषायणिः । 'उदीचां वृद्धादगोत्रात्' इति फिञ् ।

शतकुम्भसुखशयनादयः[1]—शतकुम्भे भवः शातकौम्भः । सौखशायनिकः । पारदारिकः[1] । सूत्रनडस्यापत्यं सौत्रनाडिः ।

आकृतिगणश्चायमिष्यते । तेनेदमपि सिद्धं भवति—अभिगममर्हति आभिगामिकः । अधिदेवे भवमाधिदैविकम् । आधिभौतिकम् । चतस्र एव विद्याः चातुर्वैद्यम् । स्वार्थे ष्यञ् ।

अनुशतिक । अनुहोड । अनुसंवरण । अनुसंवत्सर । अङ्गारवेणु । असिहत्य । वध्योग । पुष्करसत् । अनुहरत् । कुरुकत । कुरुपञ्चाल । उदकशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री । ❀ राजपुरुषात् ष्यञि ❀ । सूत्रनड । अनुशतिकादिः ॥

देवताद्वन्द्वे च ॥ २१ ॥

देवताद्वन्द्वे च पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः । आग्निमारुतीमनड्वा-

पदमञ्जरी

पृथिवीभ्यामणञौ' । प्रयोगाधिदेवाधिभूतेत्यध्यात्मादयः । कुलटाया वेतीनङिति । अपपाठोऽयम्, तत्र हि स्वरूपग्रहणम्, । कल्याण्यादिषु परस्त्रीशब्दः पठ्यते, तस्मात् कल्याण्यादीनामिनङिति पाठः । चातुर्वैद्यमिति । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, ताः पुनश्चतस्रो विद्याः = चत्वारो वेदाः ॥

देवताद्वन्द्वे च ॥ अग्निवरुणौ देवता अस्य आग्निवारुणम्, अग्निमरुतौ

न्यासः

राजपौरुष्यमिति । ब्राह्मणादित्वात् ष्यञ् । सौत्रनाडिरिति । 'अत इञ्' । आभिगामिक इति । अभिगममर्हतीत्यार्हीयष्ठक् ।

आधिदैविकम्, आधिभौतिकमिति । भवार्थेऽध्यात्मादित्वाट्ठञ् । चातुर्वैद्यमिति । ष्यञ् । स्वार्थिको वक्तव्यश्चातुर्वर्ण्यादिसिद्ध्यर्थमिति स्वार्थ एव ष्यञ् ।

देवताद्वन्द्वे च ॥ आग्निमारुतीमिति । अग्निश्च मरुच्चेति द्वन्द्वः, तौ देवते अस्याः—'सास्य देवता' इत्यण्, ततः पूर्वोत्तरयोर्वृद्धिः, 'इद् वृद्धौ' इत्यग्निशब्द-

१—१. पाठोऽयं बहुषु पुस्तकेषु नास्ति ।

हीमालभेत । आग्निमारुतं कर्म ।

योे देवताद्वन्द्वः सूक्तहविःसम्बन्धी, तत्रायं विधिः । इह च न भवति—स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः । ब्रह्मप्रजापती—ब्राह्मप्रजापत्यम् ॥

नेन्द्रस्य परस्य ॥ २२ ॥

इन्द्रशब्दस्य परस्य यदुक्तं तन्न भवति । सौमेन्द्रः । आग्नेन्द्रः । परस्येति किम् ? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत् ।

इन्द्रशब्दे द्वावचौ—तत्र तद्धिते एकस्य यस्येतिलोपः, अपरस्य

पदमञ्जरी

देवता अस्य आग्निमारुतम् । 'इद्वृद्धौ' इत्यग्निशब्दस्य इत्त्वम् ।

*यो देवताद्वन्द्व इत्यादि* । यः सूक्तं भजते स्तुत्यतया स *सूक्तसम्बन्धी*, हविर्यस्मै निरूप्यते स *हविःसम्बन्धी* । अर्थद्वारकं चेदं द्वन्द्वस्य विशेषणम् । *स्कान्दविशाख इति* । 'सास्य देवता' इत्यण् । *ब्राह्मप्रजापत्यमिति* । 'पत्युत्तरपदाण्ण्यः' । ननु 'सास्य देवता' इत्यत्र न जातिवचनो देवताशब्दः, किं तर्हि ? यस्यै हविर्निरूप्यते, या वा मन्त्रस्तुत्या सास्य देवता गृह्यते; न चैवम्भूतोऽत्र द्वन्द्वार्थः, एवम्भूतत्वे वा यथा तद्धिता भवन्ति तथायमपि विधिः प्राप्नोति ? अत्राहुः—तद्धितः क्वचिद-न्यत्रापि भवति—ज्ञा देवतास्य ज्ञः, स्थालीपाक इति हि भाष्ये दृष्टमिति ॥

*नेन्द्रस्य परस्य* ॥ *आग्नेन्द्रम्, सौमेन्द्रमिति* । 'अजाद्यदन्तम्' इतीन्द्रशब्दस्य पूर्वनिपातो न भवति; प्रायिकत्वात्तस्य ।

न्यासः

स्यानङ्विषय इकारादेशः, 'टिड्ढाणञ्' इति ङीप् ।

**यो देवताद्वन्द्वः सूक्तसम्बन्धीत्यादि** । यः सूक्तं भजते स सूक्तसम्बन्धी, यस्मै हविर्निरूप्यते स हविःसम्बन्धीति । अर्थद्वारकश्चेदं द्वन्द्वस्य विशेषणम् । **इह च न भवतीत्यादि** । कथं पुनः सामान्योक्तौ सत्यामयं विशेषो लभ्यते ? एवं मन्यते—'नेन्द्रस्य परस्य' इत्यत्र नेति योगविभागः कर्त्तव्यः, तेन सूक्तसम्बन्धिनो हविःसम्बन्धिनश्चान्यत्र न भवतीति । **स्कान्दविशाख इति** । 'तस्येदम्' इत्यण् । **ब्राह्मप्रजापत्यमिति** । 'दित्य-दित्यादित्यपत्युत्तरपदाण्ण्यः' ।

**नेन्द्रस्य परस्य** ॥ **सौमेन्द्रः, आग्नेन्द्र इति** । 'सास्य देवता' इत्यण्, 'देवताद्वन्द्वे च' इत्यानङादेशः, पूर्वपदस्याद् गुणः । **ऐन्द्राग्न इति** । अत्रापि पूर्ववदणादिकार्यम् ।

**इन्द्रशब्दे द्वावचावित्यादि** । प्रागेवोक्तत्वात् सुबोधम् ॥

पूर्वेण सहैकादेश इत्यप्राप्तिरेव वृद्धेः, तदेदं प्रतिषेधवचनं ज्ञापकम्— बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति, पश्चादेकादेश इति। तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति ॥

दीर्घाच्च वरुणस्य ॥ २३ ॥

दीर्घादुत्तरस्य वरुणस्य यदुक्तं तन्न भवति। ऐन्द्रावरुणम्। मैत्रावरुणम्।

दीर्घादिति किम् ? अग्निवारुणीमनड्वाहीमालभेत। अग्नेः— 'ईदग्नेः सोमवरुणयोः' इत्यस्यानङपवादस्य 'इद्वृद्धौ' इति प्रतिषेधो विधीयते, तेन दीर्घात्परो न भवति ॥

प्राचां नगरान्ते ॥ २४ ॥

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। सुह्मनगरे भवः सौह्मनागरः। पौण्ड्रनागरः।

प्राचामिति किम् ? मद्रनगरमुदक्षु, तत्र भवः माद्रनगरः ॥

पदमञ्जरी

*इन्द्रशब्द इत्यादि*। इन्द्रश्च मरुच्चेत्यादौ व्यञ्जनान्तेन सह द्वन्द्वे इन्द्रशब्दस्य पूर्वनिपातेन भाव्यम्। यथा—ऐन्द्रामारुतीं भेदकामालभेतेति। वाय्विन्द्रावित्यादिकस्तु द्वन्द्वः सूक्तहविःसम्बन्धी न भवतीति भावः ॥

*दीर्घाच्च वरुणस्य* ॥ *अत्र हीत्यादि*। उदाहरणेषु 'देवताद्वन्द्वे च' इत्यानङि कृते दीर्घात्परो वरुणशब्दः ॥

*प्राचां नगरान्ते* ॥ *प्राचां देश इति*। आचार्यग्रहणं तु न भवति; उत्तरसूत्रे 'विभाषितम्' इति वचनात् ॥

न्यासः

दीर्घाच्च वरुणस्य ॥ ऐन्द्रावरुणम्, मैत्रावरुणमिति। 'देवताद्वन्द्वे च' इत्यानङि कृते दीर्घात् परो वरुणशब्दः ॥

प्राचां नगरान्ते ॥ यद्यत्र प्राचामित्यत्राचार्यग्रहणं स्यात्, ततश्चोत्तरसूत्रे 'विभाषितम्' इति न ब्रूयात्, एतदेव हि विकल्पार्थम् प्राचांग्रहणं तत्रानुवर्त्तिष्यते। तस्माद् देशग्रहणं विज्ञायते इत्याह—प्राचां देश इत्यादि। नगरग्रहणेनेह स्वरूपग्रहणम्; 'स्वं रूपं शब्दस्य' इति वचनात् ॥

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २५ ॥

जङ्गल, धेनु, वलज—इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति, विभाषितमुत्तरम्=उत्तरपदस्य विभाषा भवति तद्धिते ञिति, णिति, किति च परतः। कुरुजङ्गलेषु भवं कौरुजङ्गलम्, कौरुजाङ्गलम् । वैश्वधेनवम्, वैश्वधैनवम् । सौवर्णवलजः, सौवर्णवालजः ॥

अर्धात्परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥

अर्धशब्दात्परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति च परतः। अर्धद्रोणेन क्रीतमार्धद्रौणिकम्, अर्धद्रौणिकम् । आर्धकौडविकम्, अर्धकौडविकम् ।

परिमाणस्येति किम्[१] ? अर्धक्रोशः प्रयोजनमस्यार्धक्रोशिकम्[१] ॥

पदमञ्जरी

*जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्* ॥ जङ्गलम्=जनप्रायो देशः, कुरुषु जङ्गलं कुरुजङ्गलम् । धेनुः=नवप्रसूता, विश्वेषां धेनुर्विश्वधेनुः। सुवर्णविकारः=वलजम्, सौवर्णवलजम् । 'उत्तरम्'इत्युत्तरपदं लक्ष्यते, तस्य नित्यसन्निहितत्वात् स्वरूपेण विभाषितत्वानुपपत्तेर्विभाषितवृद्धिकत्वाद् विभाषितमिति गौणो वादः॥

*अर्द्धात्परिमाणस्य पूर्वस्य तु वा* ॥ *अर्द्धद्रौणिकमिति* । प्राग्वतेष्ठञ् ।

वावचनमनर्थकम्, विभाषितमित्यनुवृत्तेः, तत्रैवं वक्तव्यम्—पूर्वं त्विति ? तथा तु न कृतमित्येव ॥

न्यासः

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ 'उत्तरम्' इत्यनेनोत्तरपदं लक्ष्यते; तस्य चोत्तरपदस्य नित्यं सन्निधानात् विभाषितत्वं नोपपद्यते। तस्मात् तत्सम्बन्धिन्या वृद्धेर्विभाषितत्वाद् 'विभाषितम्' इत्युक्तम् । अत एवाह—उत्तरपदस्य विभाषा भवतीति । वृद्धिरिति प्रकृतेन सम्बन्धः ॥

अर्धात् परिमाणस्य पूर्वस्य तु वा ॥ आर्धद्रौणिकमिति । 'अर्धं नपुंसकम्' इति समासः, 'प्राग्वतेष्ठञ्' । अथ वावचनं किमर्थम्, न विभाषितमिति पूर्वसूत्रादनुवर्त्तिष्यते, उत्तरमित्यनेन तत् सम्बद्धम्, अतस्तदनुवृत्तावुत्तरपदस्यैव विकल्पः स्यादिति चेत् ? नैतदस्ति; उत्तरमित्येतन्न स्वरिष्यते, तुशब्दश्चेह क्रियते, स नियमार्थो भविष्यति-पूर्वस्यैव भवति, नोत्तरस्येति । एवं तर्ह्येकयोगे स्वरितत्वकरणाकरणाद्धि वावचनमेव लघीय इति पुनर्वावचनं क्रियते ॥

---

१-१. पाठोऽयं बहुत्र नास्ति ।

## नातः परस्य ॥ २७ ॥

अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, च परतः। अर्धप्रस्थिकः, आर्धप्रस्थिकः। अर्धकंसिकः, आर्धकंसिकः।

अत इति किम्? आर्धकौडविकः। तपरकरणं किम्? इह मा भूत्—अर्धखार्यां भवा अर्धखारी। किं च स्यात्? अर्धखारी भार्या यस्य अर्धखारीभार्यः—'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो न स्यात्। यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते,

### पदमञ्जरी

नातः परस्य॥ *आर्धप्रस्थिकम्, आर्धकंसिकमिति*। पूर्ववट्ठञ्। कंसाट्टिठँस्तु न भवति; तदन्तविधेरभावात्। प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिः, न वार्धशब्दः संख्यावाची।

*किं च स्यादिति*। आकारो वृद्धिरेव, तत्र सत्यसति वा वृद्धिप्रतिषेधे नास्ति विशेष इति मन्यते। किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यात्? इत्यत आह—*यत्र हीति*। तदुक्तम्—'कुर्वद्रूपे निमित्तशब्दो मुख्यः' इति।

### न्यासः

नातः परस्य॥ पूर्वेण परिमाणस्य वृद्धिरुच्यमाना अकारस्याचामादेः प्राप्नोतीति प्रतिषिध्यते। पूर्ववदस्य तु विकल्पो भवत्येव; पूर्वस्य त्वित्यनुवृत्तेः। आर्धप्रस्थिक इति। 'अर्धं नपुंसकम्' इति समासः, पूर्ववत् प्रत्ययः।

किञ्च स्यादिति। एवं मन्यते—आकारो हि वृद्धिमानेव, तत्र नास्ति विशेषः सत्यसति वा वृद्धिप्रतिषेधे, तदेव रूपम्, अतोऽसत्यपि तपरकरणे नैव किञ्चिदनिष्टमापद्यत इति। वृद्धिनिमित्तस्येत्यादि। असति तपरकरणे तत्कालार्थे यदनिष्टमापद्यते तद्दर्शयति। किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यात्? इत्यत आह—यत्र हीत्यादि। वृद्धिं कुर्वन्नेव हि तद्धितो वृद्धिनिमित्तं भवति। तस्माद् यत्र तद्धिते वृद्धिप्रतिषेधः क्रियते स वृद्धेर्निमित्तं न भवति। तेन वृद्धिनिमित्तस्य तद्धितस्य पुंवद्भावो न प्रतिषिध्यत इति पुंवद्भावः स्यात्। क्व? यथेत्यादि। वैयाकरणी भार्यास्येति। वृद्धिप्रतिषेधः पुनरत्र 'न य्वाभ्याम्' इत्यादिना। अथ परस्येति किमर्थं पूर्वस्य मा भूदिति? नैतदस्ति; अत इति विशेषणोपादानसामर्थ्यात् पूर्वस्य न भविष्यति। न हि पूर्वस्यार्धशब्दस्यातोऽन्यो वृद्धिभाक् सम्भवति, 'पूर्वस्य तु वा' इति च विकल्पशासनमनर्थकं स्याद्, यदि तस्य प्रतिषेधः स्यात्। इदं तर्हि प्रयोजनम्—तदन्तविधिर्मा भूदिति? तदन्तविधौ सतीहापि प्रतिषेधः स्याद्—अर्धद्रौणिकमिति। पूर्वस्तु विधिः—अर्धेन मुष्टिना क्रीत-

स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते, यथा—वैयाकरणी भार्या अस्य वैयाकरणभार्य इति ॥

प्रवाहणस्य ढे ॥ २८ ॥

प्रवाहणस्य ढे परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति। प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः। 'शुभ्रादिभ्यश्च' इति ढक् प्रत्ययः ॥

पदमञ्जरी

परस्येति किम्? पूर्वस्य मा भूत्, अत इति विशेषणोपादानसामर्थ्यात्-पूर्वस्य न भविष्यति, न हि पूर्वस्यार्धशब्दस्याकारादन्यो वृद्धिभागस्ति। किञ्च—यदि पूर्वस्य प्रतिषेधः स्यात्, 'पूर्वस्य तु वा' इत्येतदनर्थकं स्यात्। इदं तर्हि प्रयोजनम्—तदन्तविधिर्मा भूदिति, अन्यथाऽकारान्तस्योत्तरपदस्यैवं विज्ञायेत। तत्र को दोषः? इह प्रतिषेधः स्यात्—अर्धद्रौणिकम्, अर्धकौडविकमिति। पूर्वस्तु विधिः—अर्धमुष्टिना क्रीतोऽर्धमौष्टिक इत्यादौ चरितार्थः। तस्मात्तदन्तविधिनिरासार्थम् 'परस्य' इत्युक्तम् ॥

प्रवाहणस्य ढे ॥ प्रवाहणशब्दस्य, ढे परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ। प्रवाहणशब्दस्य अवयवभूतं यदुत्तरपदं तस्येत्यर्थः। ननु वृद्धिमदेवात्र स्वत एवोत्तरपदम्, कस्मै प्रयोजनायास्य पुनर्वृद्धिर्विधीयते? उच्यते; यदा पूर्वपदे वृद्धिर्न

न्यासः

मर्धमौष्टिकम्, आर्धमौष्टिकमित्येवमर्थः स्यात्। परग्रहणे तु सति यदर्धात् परमनन्तरं तदेवाश्रितं भवतीति नास्ति तदन्तविधिप्रसङ्गः ॥

प्रवाहणस्य ढे ॥ प्रवाहण-शब्दस्य, ढे प्रत्यये परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ। प्रवाहणशब्दस्य यदुत्तरपदमवयवस्तस्येत्यर्थः। प्रवाहणेय इति। वहेः प्रपूर्वाण्णिच्—प्रवाहयतीति प्रवाहणः। णिजन्तात् 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्; प्रादिसमासः, 'णेर्विभाषा' इति णत्वम्, ततोऽपत्यार्थे ढक्। किमर्थं पुनरुत्तरपदस्य वृद्धिर्विधीयते, यावता वृद्धिमदेवैतत्? यद्यप्येवम्, तथापि वृद्धिर्विधातव्या; तद्धितस्य वृद्धिनिमित्तत्वाद्, 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात्। यदि ह्युत्तरपदवृद्धिर्न विधीयते, ततो यस्मिन् पक्षे पूर्वपदे वृद्धिर्न विधीयते तस्मिन् पक्षे प्रवाहणेयी भार्या अस्येति प्रवाहणेयीभार्य इत्यत्र पुंवद्भाव प्रतिषेधो न स्यात्; वृद्धेरनिमित्तत्वात् तद्धितस्य। यथा—वैयाकरणभार्य इत्यत्र। ननु चासत्यपि वृद्धिनिमित्तत्वे तद्धितस्य 'जातेश्च' इति पुंवद्भावप्रतिषेधो भविष्यति, अस्ति ह्यत्रापि गोत्रञ्च चरणैः सहेति जातित्वम्? एवं तर्हि एतज्ज्ञापयति—अनित्योऽयं प्रतिषेध इति।

## तत्प्रत्ययस्य च ॥ २९ ॥

ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः । प्रावाहणेयकम्, प्रवाहणेयकम् ।

बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः ॥

**पदमञ्जरी**

भवति तदा यद्युत्तरपदेऽपि वृद्धिर्न स्यात्, 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधो न स्यात्—प्रवाहणेयीभार्य इति । मा भूदेवम्, 'जातेश्च' इत्येवं भविष्यति, 'गोत्रं च चरणैः सह' इति जातित्वम् ? एवं तर्ह्येतज्ज्ञापयति—अनित्योऽयं प्रतिषेध इति । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे' इति वा, 'ठक्छसोश्च' इति वा प्राप्तस्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति । प्रवाहयतीति प्रवाहणः, ण्यन्ताद् वहेर्नन्द्यादेर्ल्युः, 'णेर्विभाषा' इति णत्वम् ॥

*तत्प्रत्ययस्य च ॥ प्रवाहणेयिरिति* । यून्यपत्ये 'अत इञ्' । *प्रवाहणेयकमिति* । 'गोत्रचरणाद् वुञ्' ।

किमर्थमिदमुच्यते ? ढे परतः पूर्वेण विकल्प उक्तः, ठान्तस्येञादौ नित्यवृद्धिर्मा भूदिति । नैतदस्ति प्रयोजनम्, इञादिनिमित्ताया अपि वृद्धेर्ढाश्रय एव विकल्पो बाधको भविष्यति, 'ढे' इति हि परसप्तमी, न निमित्तसप्तमी, तेनान्यनिमित्ताया अपि वृद्धेर्ढे परतः प्रतिषेधो लभ्यत एव ? अत आह—*बाह्यतद्धितनिमित्तेति* । अयमभिप्रायः—ढे उत्पन्ने तदाश्रयां वृद्धिं बाधित्वा विकल्पस्ता-

**न्यासः**

तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे तद्धिते' इत्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति ॥

तत्प्रत्ययस्य च ॥ प्रावाहणेयिरिति । 'अत इञ्' । प्रावाहणेयकमिति । 'गोत्रचरणाद् वुञ्' ।

अथ किमर्थमिदमुच्यते, यावता ढप्रत्ययान्तस्य प्रवाहणेयशब्दस्योत्तरपदं नित्यं वृद्धिमदेवेति, तदर्थस्तावदारम्भो न युक्तः; पूर्वपदस्य वृद्धेर्विकल्पो यथा स्यादित्येवमर्थोऽपि नैवास्यारम्भो युज्यते; इञादावपि तद्धिते तन्निमित्तां वृद्धिं बाधित्वा पूर्वसूत्रेण च निमित्त एव विकल्पो भविष्यति, न हीञादावुत्पन्ने तद्धिते ढस्य परत्वमपैति ? इत्याह—बाह्यतद्धितेत्यादि । बाह्यतद्धितो निमित्तं यस्याः सा तथोक्ता । बाह्यत्वं पुनरिञादेस्तद्धितस्य प्रावाहणेयशब्देऽनन्तर्भावात् । सैवं बाह्यं तद्धितं निमित्तमाश्रित्य भवन्ती

## नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥

नञ उत्तरेषां शुचि, ईश्वर, क्षेत्रज्ञ, कुशल, निपुण—इत्येतेषामचामादेरचो वृद्धिर्भवति, पूर्वपदस्य वा भवति तद्धिते ञिति, णिति, किति च परतः। शुचि—आशौचम्, अशौचम्। ईश्वर—आनैश्वर्यम्, अनैश्वर्यम्। क्षेत्रज्ञ—आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम्। कुशल—आकौशलम्, अकौशलम्। निपुण—आनैपुणम्, अनैपुणम्।

अत्र केचिदाहुः—इयं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते। 'न नञ्पूर्वात्तत्पुरुषात्' इत्युत्तरो भावप्रत्ययः प्रतिषिध्यते, तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद्भवतीति।

तदपरे न मृष्यन्ते—भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्त-

पदमञ्जरी

त्वप्रवृत्तः, पश्चादिष्वादिरुत्पन्नः, तन्निमित्ता च वृद्धिः प्राप्ता, न त्विदानीं ढनिमित्तो विकल्पः, पूर्वमेव प्रवृत्तत्वात्, आवृत्त्ययोगादिति॥

*नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्* ॥ *अप्राप्तैव विधीयत इति*। अप्राप्तिमेवोपपादयति—*न नञ्पूर्वादिति*। *उत्तरो भावप्रत्यय इति*। त्वतल्भ्यामुत्तरः ष्यञादिः, ततश्चोत्तरो भावप्रत्ययः प्रागेव नञ्समासात् शुच्यादिभ्य एव विधेयः, पश्चान्नञ्समासः; तत्र नञोऽङ्गेऽनन्तर्भावादप्राप्ता वृद्धिर्विधीयत इति।

*तदपरे इत्यादि*। असति विषयेऽङ्गाधिकार उपमृद्यः, अस्ति च विषयः; कः

न्यासः

बहिरङ्गा। प्रागेव तु बाह्यतद्धितोत्पत्तेर्ढाश्रयो विकल्पो भवन्नन्तरङ्गस्तां बाधितुं न शक्नोति। ततश्च यदीदं नारभ्येत तदा स्यादेव। तस्माद्विकल्पार्थमिदमारभ्यते॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्॥ उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते।

अत्र केचिदाहुरित्यादि ग्रहणकवाक्यम्। अस्य न नञ्पूर्वात् तत्पुरुषादिति विवरणम्। 'न नञ्पूर्वात् तत्पुरुषात्' इति त्वतल्भ्यामन्यो भावप्रत्ययः प्रतिषिध्यते, तत्रोत्तरं भावप्रत्ययमिच्छता शुच्यादिभ्य एव, न तु नञ्समासेभ्य उत्तरो भावप्रत्ययः कर्त्तव्यः। तस्मिन् कृते पश्चान्नञ्समासः, ततश्चाङ्गस्याचामादेरचो विधीयमाना वृद्धिर्न प्राप्नोति। न हि पूर्वं भावप्रत्यये कृते पश्चान्नञ्समासे नञ् अङ्गस्याचामादिर्भवति, उत्तरपदस्यैवाङ्गत्वात्; उच्यते चेदं वचनम्, तत्र वचनसामर्थ्यादङ्गस्यापि वृद्धिर्भवति।

तदपर इत्यादि। यदुक्तमियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयत इति, तदपर

मपत्यादिष्वर्थेषु नञ्समासादेव विद्यते। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽप्यस्ति, तत्राङ्गाधिकारोपमर्द्दनं न युज्यत इति।

अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु पठ्येते, ततस्ताभ्यां भावे ष्यञ्भवति ॥

**पदमञ्जरी**

पुनरसौ ? भाववचनादन्योऽपत्यादिषु विहितः प्रत्ययः। अथापि भाववचने श्रद्धा, सोऽपि शक्यत एव दर्शयितुमित्याह—*बहुव्रीहेश्चेति*।

'उत्तरो भावप्रत्ययः प्रतिषिध्यते' इत्येतदप्यत्र न सार्वत्रिकमित्याह—*अक्षेत्रज्ञेति*। तदेवमङ्गाधिकारो न बाधनीय इति स्थितम्। एवं च 'तदुपस्पर्शादशौचम्' इत्यादिप्रयोगोपपत्तिः। 'दशाहं शावमाशौचम्' इत्यादौ त्विदमर्थेऽण् द्रष्टव्यः ॥

**न्यासः**

आचार्या न क्षमन्ते। किं कारणम् ? इत्याह—भाववचनादन्योऽपि हीत्यादि। एवकारो भिन्नक्रमो विद्यत इत्यस्यानन्तरं द्रष्टव्यः। यदि नञ्समासादपत्यादिष्वर्थेषु वृद्धिनिमित्तं भाववचनादपरस्तद्धितो न विद्येत, एवं बहुव्रीहेश्च नञ्समासाद् भाववचनादन्योऽपि न विद्येत; ततो युज्यतेऽशुच्यादिशब्दानामनङ्गत्वादङ्गाधिकारोपमर्दनेन वृद्धिः, वचनस्याकृतार्थत्वात्। न त्वेतदेवम्; विद्यत एव ह्यन्योऽपत्यादिष्वर्थेषु नञ्समासाद् वृद्धिनिमित्तस्तद्धितः—अकुशलस्यापत्यमाकौशलिः, अकुशलस्येदमाकौशलमिति। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यत एव—नास्य शुचयो विद्यन्त इत्यशुचिः, तस्य भावः, 'इगन्ताच्च लघुपूर्वात्' इत्यण्—आशौचम्। यत एवमन्योऽपि भाववचनात् तद्धितो नञ्समासाद् विद्यते, वृद्धिनिमित्तको बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यते। तस्मात् तत्र कृतार्थत्वाद्वचनस्याङ्गाधिकारबाधनं च युज्यते।

यदप्युक्तम्—'न नञ्पूर्वात् तत्पुरुषादित्युत्तरो भावप्रत्ययः प्रतिषिध्यत एव' तदप्ययुक्तमिति दर्शयन्नाह—अक्षेत्रज्ञोऽनीश्वर इत्यादि। एतौ हि द्वौ शब्दौ ब्राह्मणादिषु तत्पुरुषावेव पठ्येते, तेनाभ्यां तत्पुरुषाभ्यामेव ष्यञ् भवति, अन्यथा हि ब्राह्मणादिष्वनयोः पाठस्य वैयर्थ्यं स्यात्। तस्मादङ्गस्यैवेयं वृद्धिर्नित्यं प्राप्ता सती भावप्रत्यये, अन्यत्र च तद्धिते विकल्पेन विधीयते यथायोगम्। तत्राशौचमिति यदि तत्पुरुषः क्रियते—न शुचिरशुचिः, तदा 'तस्येदम्' इत्यणि कृते वृद्धिः; अथ बहुव्रीहिः—नास्ति शुचिरस्येत्यशुचिः, ततो यदि भावार्थो विवक्ष्यते तदा 'इगन्ताच्च लघुपूर्वात्' इत्यण्; अथ 'तस्येदम्' इत्यर्थो विवक्ष्यते, तदा 'प्राग्दीव्यतोऽण्' इत्यण्—आनैश्वर्य्यम्, आक्षैत्रज्ञ्यमिति। तत्पुरुषाभ्यां ब्राह्मणादित्वात् ष्यञि कृते वृद्धिः। आकौशलमानैपुणमिति यदि बहुव्रीहिरथापि तत्पुरुषः, उभयथापि 'तस्येदम्' इत्यणेव। यद्यपि कुशलनिपुणशब्दौ ब्राह्मणादिषु युवादिषु च पठ्येते, तथापि तदन्तात् तत्पुरुषाद् बहुव्रीहेरपि भावप्रत्ययो नोपपद्यते; तदन्तविधेरभावात् ॥

## यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥

यथातथ, यथापुर—इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। आयथातथ्यम्, अयाथातथ्यम्। आयथापुर्यम्, अयाथापुर्यम्। अयथातथ, अयथापुरेति ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ।

सूत्रे यथातथ-यथापुरशब्दौ तु 'यथाऽसादृश्ये' इति अव्ययीभावसमासौ, तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम्। भाष्ये तु यथा दर्शितम्—'अयथातथा भावः' इति, तथा 'सुप्सुपा' इति समासो लक्ष्यते[1] ॥

### पदमञ्जरी

*यथातथयथापुरयोः पर्यायेण* ॥ *ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति*। तेन 'न नञ्पूर्वात्' इति ष्यञः प्रतिषेधो न भवतीति भावः। *यथाऽसादृश्य इत्यव्ययीभावसमास इति*। पदार्थानतिवृत्तौ। तथाभावमनतिक्रान्तं यथातथम्=सत्यमुच्यते, यद्वस्तु पुरा यथाभूतं तदद्यापि तथाभावमनतिक्रान्तं यथापुरमुच्यते। किं पुनरव्ययीभावत्वे प्रमाणम्? इत्यत आह—*तथा हीति*। *भाष्ये त्विति*। न हि ह्रस्वत्वमकृत्वा विग्रहप्रदर्शनमव्ययीभावस्योपपद्यते।

अयं योगः शक्योऽवक्तुम्। कथम्? यदा पूर्वपदस्य वृद्धिः, नञ्समासाद्भावप्रत्ययः। यदा तूत्तरपदस्य वृद्धिस्तदा ष्यञन्तेन नञ्समासः। स्वरेऽपि नास्ति विशेषः; अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात्। प्रत्ययान्तरं चाभ्यां न भवति; अनभिधानात् ॥

### न्यासः

यथातथयथापुरयोः पर्यायेण ॥ ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति। तेन नञ्समासाभ्यां ष्यञ् भवतीति भावः। एताविति। यथातथ-यथापुरशब्दौ। 'यथाऽसादृश्ये' इत्यव्ययीभावसमासाविति। ननु च 'असादृश्ये' इति प्रतिषेधः प्राप्नोति? नैष दोषः; न ह्यत्र सादृश्यं गम्यते। तथा हि—यथातथमिति सत्यमुच्यते, यथापुरमिति पुरातनम्। कथं पुनर्ज्ञायतेऽव्ययीभावसमासौ? इत्याह—तथा हीत्यादि। अत्र हि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति नपुंसकाश्रयं ह्रस्वत्वं कृतम्। नपुंसकत्वं चाव्ययीभावस्य विहितम्, तस्मादव्ययीभावसमासाविति ज्ञायते। भाष्ये त्वित्यादि। अयथातथा भाव इति ह्रस्वत्वमकृत्वा वाक्यं यथा दर्शितं तथा 'सुप्सुपा' इति समासो लक्ष्यते, नाव्ययीभावः। अव्ययीभावे हि नपुंसकाश्रयं ह्रस्वत्वं स्यात्। अस्मिंस्तु पक्षे सौत्रत्वान्निर्देशस्य—'छन्दोवत्सूत्राणि भवन्ति' इति वर्णव्यत्ययेन दीर्घस्य स्थाने ह्रस्वो वेदितव्यः।

---

1. 'अस्मिंस्तु पक्षे सौत्रत्वाद्दीर्घस्य ह्रस्वः'—इत्यधिकं क्वचित्।

## हनस्तोऽचिण्णलोः ॥ ३२ ॥

'तद्धितेषु' इति निवृत्तम्, तत्सम्बद्धम् 'किति' इत्यपि। 'ञ्णिति' इति वर्तते। हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः, चिण्णलौ वर्जयित्वा। घातयति। घातकः। साधुघाती। घातङ्घातम्। घातो वर्तते।

अचिण्णलोरिति किम् ? अघानि। जघान।

धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते। इह न भवति—वार्त्रघ्नमितरदिति ॥

### पदमञ्जरी

*हनस्तोऽचिण्णलोः* ॥ *तद्धितेष्विति निवृत्तमिति*। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। *तत्सम्बद्धं कितीत्यपीति*। निवृत्तमित्यपेक्ष्यते। ञ्णिद्ग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्, अतः 'तद्धितेषु' इत्यस्मिन्निवृत्तेऽपि तदनुवर्त्तत एव। उदाहरणेषु 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् ॥

### न्यासः

हनस्तोऽचिण्णलोः ॥ तद्धितेष्विति निवृत्तमिति। अस्वरितत्वात्। तत्सम्बद्धं कितीत्यपीति। निवृत्तमित्यपेक्षते। तत्सम्बद्धत्वं पुनस्तस्य 'किति च' इत्यत्र 'तद्धितेषु' इत्यनुवृत्तेः। यदि पुनः कितीत्यनुवर्त्तेत, ततो लक्षणे 'जायापत्योष्टक्', 'अमनुष्यकर्तृके च' इति टकि कृते—जायाघ्नस्तिलकालक इत्यत्रापि स्यात्। ञ्णिद्ग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्। अतः 'तद्धितेषु' इत्येतस्मिन् निवृत्तेऽपि तदनुवर्त्तत एव। घातयतीति। हेतुमण्णिच्। 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। घातक इति। ण्वुल्। साधुघातीति। 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। घातंघातमिति। 'आभीक्ष्ण्ये णमुल् च', 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम्। घात इति। भावे घञ्।

अघानीति। लुङ्, 'चिण् भावकर्मणोः' इति चिणादेशश्च, 'भावकर्मणोः' इत्यात्मनेपदम्, 'चिणो लुक्' इति तकारस्य लुक्। जघानेति। लिट्, तिप्, तस्य णल्, 'अभ्यासाच्च' इति कुत्वम्—घकारः। अथेह कस्मान्न भवति—वृत्रं हतवानिति, 'ब्रह्मभ्रूणवृत्रेषु क्विप्', तदन्तात् 'तस्येदम्' इत्यण्, 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः—वार्त्रघ्नः, भ्रौणघ्नः ? इत्याह—धातोरित्यादि। धातोरित्येवमुच्चार्य्य यो विहितः प्रत्ययः स धातुप्रत्ययः। धातोः कार्यमुच्यमानं तत्रैव धातुप्रत्यये भवति। एतच्च भ्रौणहत्यमिति ( ६ ४.१७४ सू० ) निपातनेन ज्ञापितम्। तेन वार्त्रघ्नः, भ्रौणघ्न इत्यादौ न भवति। न ह्यत्र धातोरित्येवं प्रत्ययो विहितः, किं तर्हि ? प्रातिपदिकादित्येवम् ॥

## आतो युक्चिण्कृतोः ॥ ३३ ॥

आकारान्तस्याङ्गस्य चिणि कृति ञ्णिति युगागमो भवति। अदायि। अधायि। कृति—दायः, दायकः; धायः, धायकः।

चिण्कृतोरिति किम्? ददौ, दधौ। चौडिः, बालाकिः—बाह्वादित्वादिञ्। ज्ञा देवता अस्य ज्ञः॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३४ ॥

उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तन्न भवति। किञ्चोक्तम्? 'अत उपधायाः' इति

### पदमञ्जरी

*आतो युक् चिण्कृतोः* ॥ चिण्ग्रहणमकृदर्थम्। *ददौ, दधाविति*। ननु च 'आत औ णलः' इत्यौत्वमत्र बाधकं भविष्यति, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशं चौत्वम्, कोऽवकाशः? यदा उत्तमे णलि णित्वाभावः? एवं तर्हि 'अचिण्णलोः' इत्यनुवर्तिष्यते, चिणि तु वचनाद्भविष्यति, तत्राह—*चौडिर्बालाकिरिति*। बाह्वादित्वादिञ्। अत्र दाक्ष्यादौ चरितार्थं यस्येतिलोपं बाधित्वा परत्वाद्युक् स्यात्। अचामादेरित्यनुवृत्तेर्न भविष्यति? अत आह—*ज्ञा देवता अस्येति*। आदिवद्भावादत्र प्रसङ्गः। किञ्च—'अचामादेः' इत्यनुवृत्तौ दरिद्रायक इत्यत्र न स्यात्॥

*नोदात्तोपदेशस्य मान्तस्यानाचमेः* ॥ उपदेशे उदात्त उदात्तोपदेशः। अस्मादेव निपातनात्साधुः। *किञ्चोक्तमिति*। सन्निहितस्य कस्यचिदप्रसङ्गात्प्रश्नः। *अत उपधाया इति वृद्धिरिति*। चिण्कृदुपजीवनार्थं तु न तदनन्तरमिदमारब्धम्।

### न्यासः

आतो युक्. चिण्कृतोः ॥ चिणि कृति चेति। चिण्ग्रहणमकृदर्थम्। अकृत्त्वं तु तस्य द्वितीयधात्वधिकारेऽविहितत्वात्। अदायि, अधायीति। ददातिदधात्योः पूर्ववल्लुङादि कार्यम्। दायः, धाय इति। घञ्। दायकः, धायक इति। ण्वुल्।

ददौ, दधाविति। 'आत औ णलः' इत्यौत्वम्। चौडिः, बालाकिरिति। चूडाबलाकाभ्यां बाह्वादीञ्। अचामादेरित्यनुवृत्तेरत्र न भविष्यतीति यो मन्येत, तं प्रत्युदाहरणान्तरमाह—ज्ञा देवतास्येति ज्ञः। 'सास्य देवता' इत्यण्। अत्र व्यपदेशिवद्भावेनाचामादिराकारो भवति। अत्रासति चिण्कृद्ग्रहणे सत्यामप्यचामादेरित्यनुवृत्तौ स्यादेवात्र युक्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्येतच्च प्रत्ययविधिविषय एव ह्युक्तम्॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ अशमि, अतमि, अदमीति। 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', लुङादि पूर्ववत्। शमक इत्यादौ ण्वुल्। शम

वृद्धिः । अशमि, अतमि, अदमि । कृति खल्वपि—शमकः, तमकः, दमकः । शमः, तमः, दमः ।

उदात्तोपदेशस्येति किम् ? यामकः, रामकः ।

कथमुद्यमोपरमौ ? 'अड उद्यमे', 'यम उपरमे'—इति निपातनादनुगन्तव्यौ । उपदेशग्रहणं किम् ? शमी, दमी, तमीत्यत्र यथा स्यात्; इह मा भूत्—यामकः, रामक इति । मान्तस्येति किम् ? चारकः, पाठकः । अनाचमेरिति किम् ? आचामकः ।

❀ अनाचमिकमिवमीनामिति वक्तव्यम् ❀ । आचामः । कामः ।

पदमञ्जरी

*निपातनादनुगन्तव्यमिति* । येषां तु 'अपाणिनीयो धातुपाठेऽर्थनिर्देशः' इति पक्षः, तेषामत्र 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । *शमी, तमीति* । 'शमित्यष्टाभ्यो घिनुण्', अत्र प्रत्ययस्वरे कृते सम्प्रति धातुरनुदात्तः । *यामकः, रामक इति* । लित्स्वरे कृते भवत्ययं सम्प्रत्युदात्तः ।

'अनाचमेः' इत्यल्पमिदमुच्यते ? इत्याह—*अनाचमिकमिवमीनामिति वक्तव्यमिति* । 'टुवम उद्गिरणे', 'कमु कान्तौ', 'चमु अदने', तत्र सूत्रे आङ्पूर्वस्य पर्युदासः, वाक्ये तु केवलस्य । वृत्तौ तु वाक्योदाहरणमप्याङ्पूर्वस्यैव दर्शितम्, नात्राप्तैर्निरणायि । *काम इति* । कमेः 'आयादय आर्धधातुके वा' इति णिङभाव-

न्यासः

इत्यादौ घञ् । यामकः, रामक इति । 'यम उपरमे', 'रमु क्रीडायाम्' । अनुदात्तोपदेशावेतौ ।

अथ कथमुद्यमोपरमौ ? इत्याह—उद्यमोपरमावित्यादि । अनुगन्तव्यावित्यादि । साधुत्वेनेति शेषः । निपातनादेतौ साधुत्वेन वेदितव्यावित्यर्थः ।

शमी, तमी, दमीत्यत्र यथा स्यादिति । शमादिभ्यः 'शमित्यष्टाभ्यो घिनुण्' । असत्युपदेशग्रहणेऽत्र न स्यात्; प्रत्ययस्वरे कृते धातोरनुदात्तत्वात् । उपदेशग्रहणे तु सति तेनाद्यवस्था लक्ष्यत इति यद्यप्युत्तरकालमनुदात्तत्वं भवति, तथापि भवत्येव प्रतिषेधः; उपदेशावस्थायामुदात्तत्वात् । इहेत्यादि । यद्युपदेशग्रहणं न क्रियते, ततो यामकः, रामक इत्यत्रापि स्यात्; 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वविधानात् । उपदेशग्रहणे तु न भवति; उपदेशेऽनुदात्तत्वात् ।

अनाचमिकमिवमीनामिति वक्तव्यमिति । 'कमु कान्तौ', 'टुवम उद्गिरणे', 'चमु छमु जमु झमु अदने'—एषां त्रयाणां धातूनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चमेस्तावदनाचमेरिति सूत्र एवोपादानात् प्रतिषेधो न

वामः। आम इति–चौरादिकस्य णिचि वृद्धौ सत्यां भवति। तत्र हि मित्त्वं नास्ति—'नान्ये मितोऽहेतौ' इति।

'सूर्यविश्रामा भूमिः'–इत्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते।

चिण्कृतोरित्येव—शशाम, तताम॥

जनिवध्योश्च॥ ३५॥

जनि, वधि–इत्येतयोश्चिणि कृति च ञ्णिति यदुक्तं तन्न भवति। अजनि, जनकः, प्रजनः। अवधि, वधकः, वधः।

**पदमञ्जरी**

पक्षे घञ्, वृद्धिः। *णिचि वृद्धौ सत्यामिति*। न हि तत्रायं प्रतिषेधः; णिचोऽकृत्त्वात्। ननु च सत्यामपि वृद्धौ 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वे सति 'मितां ह्रस्वः' इति ह्रस्वेन भाव्यम्? अत आह—*तत्र हीति*। *नान्ये मितोऽहेताविति*। अहेतौ चुरादिणिच्यनुक्रान्तेभ्योऽन्येऽमन्तादयो मितो न भवन्तीत्यर्थः। *अन्याय्यमेव मन्यन्त इति*। 'विश्रान्तिभूमिः' इति पठितव्यमित्यर्थः। तेन 'विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः'[1] इति व्याख्यातम्॥

*जनिवध्योश्च*॥ *वधिः प्रकृत्यन्तरमिति*। 'वध हिंसायाम्' इति भूवादौ पाठात्। *भक्षकश्चेदिति*। योऽपि मांसं क्रीत्वा भक्षयति, तस्यापि हिंसानुषङ्गोऽस्तीत्येतदनेन प्रतिपाद्यते। यथाह *मनुः* ( म० स्मृ० ५. ५१ )—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः॥ इति।

**न्यासः**

भवतीति। इतरयोस्तु 'वामदेवाड् ड्यड्ड्यौ', 'धनहिरण्यात् कामे' इति निपातनादिति। अथ कथमामः? इत्याह—आम इति चौरादिकस्येत्यादि। 'अम रोगे' इत्यस्य चौरादिकस्य णिचि वृद्धौ, 'एरच्' इत्यचि कृते—आम इति। न हि णिच्यपि वृद्धेः प्रतिषेधो भवति; तस्याचिण्कृत्त्वात्। अकृत्त्वं तु पूर्ववद्वेदितव्यम्। ननु 'जनिजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायां सत्याम् 'मितां ह्रस्वः' इत्यनेनेह णौ भवितव्यम्? इत्यत आह—अत्र हि मित्त्वं नास्तीति। कथं नास्ति? इत्याह—नान्य इत्यादि। यस्तु भ्वादिः 'अम गत्यादिषु' पठ्यते, अम इत्येवं तस्य भवितव्यम्। अथ कथं विश्राम इति, न चायमसाधुरिति शक्यते वक्तुम्, यतः सूर्यविश्रामा भूमिरिति प्रयोगो दृश्यते? इत्याह—एवमादिकं प्रयोगमित्यादि॥

जनिवध्योश्च॥ वधिरयं हनादेशोऽस्ति, तस्येदं ग्रहणमिति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्तुमाह—वधिः प्रकृत्यन्तरमित्यादि। प्रकृत्यन्तरमपि भवन्

---

1. अभि० शा० २. ६।

वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति, तस्यायं प्रतिषेधो विधीयते। 'भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते'—इति हि प्रयोगो दृश्यते। वधादेशस्यादन्तत्वादेव वृद्धेरभावः।

चिण्कृतोरित्येव—जजान गर्भं महिमानमिन्द्रम्॥

**अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ॥ ३६॥**

सर्वं निवृत्तम्, 'अङ्गस्य' इति वर्त्तते। अर्ति, ह्री, व्ली, री, क्नूयी, क्ष्मायी—इत्येतेषामङ्गानामाकारान्तानां च पुगागमो भवति णौ परतः। अर्ति—अर्पयति। ह्री—ह्रेपयति। व्ली—व्लेपयति। री—रेपयति। क्नूयी—क्नोपयति। क्ष्मायी—क्ष्मापयति। आकारान्तानाम्—दापयति, धापयति।

**पदमञ्जरी**

*हनादेशस्येति*। अवधि भवता दस्युरित्यत्र। *जजान गर्भमिति*। व्यत्ययेन परस्मैपदम्, अन्तर्भावितण्यर्थत्वात् सकर्मकत्वम्॥

*अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ*॥ 'व्लीङ् वरणे', 'क्नूयी शब्दे', 'क्ष्मायी विधूनने'। उदाहरणेषु पुगन्तलक्षणो गुणः। *द्वयोरपि ग्रहणमिति*। विशेषानुपादानात्।

*री इत्यपीति*। यद्यपि प्रस्रवणार्थः सानुबन्धकः, तथापि तस्यापि ग्रहणमाचार्यैः स्मर्यत इति भावः।

**न्यासः**

यद्यकारान्तः स्यात्, अनर्थकः प्रतिषेधः स्यात्, घोपधत्वादेव न वृद्धिर्भवतीति मत्वाह—व्यञ्जनान्तस्येत्यादि। कुतः पुनर्वधिः प्रकृत्यन्तरमस्तीत्येतदवसितम्? इत्याह—भक्षकश्चेत्यादि। अथ हनादेशस्यैव वधेरयं प्रतिषेधः कस्मान्न भवति? इत्याह—हनादेशस्येत्यादि।

जजान गर्भमित्यादि। छान्दसः प्रयोगः।

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ॥ अर्त्तीति श्तिपा निर्देशः। ऋकारान्तस्य ग्रहणं मा विज्ञायीति, यथा—'ऋदृशोऽङि गुणः' इति। अर्पयतीति। हेतुमण्णिच्, 'पुगन्तलघूपधस्य' इति गुणः। ह्रेपयति, व्लेपयतीति। 'ह्री लज्जायाम्'। 'व्ली वरणे'। क्नोपयति, क्ष्मापयतीति। 'क्नूयी शब्दे', 'क्ष्मायी विधूनने'। 'लोपो व्योर्वलि' इति यकारलोपः। द्वयोरपि धात्वोर्ग्रहणमिति। विशेषाभावात्।

रीत्येतस्यापि 'री गतिरेषणयोः', 'रीङ् श्रवणे'—इति द्वयोरपि ग्रहणमित्यपेक्ष्यते। ननु च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति रीङो ग्रहणं न प्राप्नोति? नैष

अर्तीति 'ऋ गतिप्रापणयोः', 'ऋ गतौ'—इति द्वयोरपि धात्वोर्ग्रहणम् ।

रीत्यपि—'री गतिरेषणयोः,' 'रीङ् श्रवणे' इति ।

पुकः पूर्वान्तकरणम्—अदीदपदित्यत्रोपधाह्रस्वो यथा स्यादिति ॥

पदमञ्जरी

पूर्वान्तकरणं न यादृच्छिकम्, किं तर्हि ? विवक्षितमित्याह—पुकः पूर्वान्तकरणमिति । अदीदपदिति । यदि पुनर्णेः पुट् स्यात्, तस्य णिग्रहणेन ग्रहणाण्णौ परतो यदङ्गं न तस्याकार उपधेति ह्रस्वो न स्यात् । दोषोपलक्षणं चैतत्, दाप्यते इत्यादौ 'णेरनिटि' इति णेर्लोपेनापहृतत्वात्पकारस्य श्रवणं न स्यात् ? नैष दोषः; न हि लोपः सर्वापहारी, 'अलोऽन्त्यस्य' इत्यन्त्यस्य लोपः । इह तर्हि क्नोपयतीतीडागमः प्राप्नोति ।

लाभोऽपि कश्चिन्नैवात्र परादौ सति दृश्यते ।
पुगन्तस्य गुणो वाच्यो वृद्धिः स्यादन्यथा यतः ॥

यत्किलेदमुच्यते—पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यम्, 'सार्वधातुकार्धधातुकयोः' इत्येव सिद्धत्वादिति, तदप्याशावादमात्रम्; यतः परादावप्यवश्यं पुटि गुणो विधेयः, अन्यथा 'अचो ञ्णिति' इति वृद्धिप्रसङ्गात् ॥

न्यासः

दोषः; अत्र ह्यल्पाच्तरत्वाद् ह्रीव्ल्यातामन्यतमस्य पूर्वनिपाते कर्त्तव्ये 'अल्पाच्तरम्' इत्येतदनपेक्ष्यार्त्तिशब्दस्य पूर्वं निपातं कुर्वताऽन्यदपि किञ्चिदिह शास्त्रवचनं नापेक्ष्यत इत्येतत् सूचितम् । तेन निरनुबन्धकपरिभाषा नापेक्ष्यत इति रीङोऽपि ग्रहणं भवति ।

अथ किमर्थं पुनः पुक् पूर्वान्तः क्रियते, न परादिरेव पुड् विधीयताम्; पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यं भवति, 'सार्वधातुकार्धधातुकयोः' इत्येवं सिद्धत्वात् पुटि; अवश्यं पुड्ग्रहणं कर्त्तव्यम्, अन्यथा हि 'अचो ञ्णिति' इति वृद्धिः स्यादिति चेत् ? नैतदस्ति; नाप्राप्ते णिचो वृद्धिं प्रति निमित्तत्वे पुटं प्रत्यागमित्वमुच्यत इत्युत्तरस्य बाधकं भविष्यतीति नास्ति वृद्धेः प्रसङ्गः । अयं तर्हि परादौ दोषः—दाप्यते, धाप्यत इति—अत्र णेर्लोपेनापहृतत्वात् पकारस्य श्रवणं न स्यादिति ? एषोऽप्यदोषः; न हि णिलोपः सर्वापहारी भवति, येन णेर्निवृत्तौ पुडागमोऽपि निवर्तेत । प्रत्ययलक्षणञ्चास्तीति निवृत्तेऽपि णौ पुटः श्रवणं भविष्यतीत्याह—पुकः पूर्वान्तकरणमित्यादि । दापयतेर्लुङ्, च्लिः, तस्य 'णिश्रिद्रुस्रुभ्यः कर्त्तरि' इति चङि णिलोपः, 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वत्वम्, 'चङि' इति द्विर्वचनम्, 'सन्वल्लघुनि चङ्परे' इतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घत्वम्—अदीदपत् । अत्र यदि पुट् क्रियते तदा ह्रस्वत्वं न स्यात्; अनुपधत्वात् । पुकि तु सति भवति । अतो ह्रस्वार्थं पुकः पूर्वान्तकरणम् ॥

## शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥

शा, छा, सा, ह्वा, व्या, वे, पा—इत्येतेषामङ्गानां युगागमो भवति णौ परतः । शा—निशाययति । छा—अवच्छाययति । सा—अवसाययति । ह्वा—ह्वाययति । व्या—संव्याययति । वे—वाययति । पा—पाययति ।

पाग्रहणे 'पै ओवै शोषणे'—इत्यस्यापीह ग्रहणमिच्छन्ति । 'पा रक्षणे' इत्यस्य लुग्विकरणत्वान्न भवति ।

❀ लुगागमस्तु तस्य वक्तव्यः ❀ । पालयति ।

❀ धूञ्प्रीञोर्नुग्वक्तव्यः ❀ । धूनयति । प्रीणयति ।

### पदमञ्जरी

*शाच्छासाह्वाव्यावेपां युक्* ॥ *पाग्रहणे इत्यादि* । इष्टिरेवेयम्; लाक्षणिकत्वात् पारूपस्य ।

*लुगागमस्त्विति* । यद्यपि पालयतीति रूपम् 'पाल रक्षणे' इत्यस्यैव चुरादिणिजन्तस्य पुनर्हेतुमण्णिचि सिद्धम्, तथापि पातेः पुकि पापयति, युकि तु पाययति इति मा भूदिति लुग्वचनम् ।

*धूञ्प्रीञोरिति* । 'धूञ् कम्पने', 'प्रीञ् तर्पणे', ञान्तस्यानुकरणम्; तेन न दैवादिकस्य नुग्भवति ।

### न्यासः

शाच्छासाह्वाव्यावेपां युक् ॥ 'शो तनूकरणे', 'छो छेदने', 'षोऽन्तकर्मणि', 'ह्वेञ् स्पर्धायाम्', 'व्येञ् संवरणे', 'वेञ् तन्तुसन्ताने'; 'पा पाने', 'पै ओवै शोषणे'—इति द्वयोरपि । एषामाकारान्तत्वात् पुकि प्राप्ते युको विधानम् । निशाययतीत्यादि । 'आदेच उपदेशेऽशिति' इत्यात्त्वम् । पाग्रहणे 'पै ओवै शोषणे' इत्येतस्यापि ग्रहणमिच्छन्तीति । यत्र ह्यस्य ग्रहणं नेष्यते, तत्र पिबतेरित्याह, यथा—'लोपः पिबतेरीच्च' इति भावः । अथ 'पा रक्षणे' इत्यस्यापि ग्रहणं कस्मान्न भवति ? इत्याह—पा रक्षण इत्यस्य त्वित्यादि ।

लुगागमस्तु तस्य वक्तव्य इति । ननु च 'पाल रक्षणे' इति चुरादौ पठ्यते, तस्य पालयतीति भविष्यति ? सत्यमेतत्; पुकस्तु निवृत्त्यर्थो लुगागम उपसंख्यायते, अन्यथा हि पातेः पाययतीति स्यात् ।

धूञ्प्रीञोर्नुग्वक्तव्य इति । 'धूञ् कम्पने', 'प्रीञ् तर्पणे' इति—एतयोर्नुग् वक्तव्यः, व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'धूञ् विधूनने', 'तृप प्रीणने' इति निपातनादेतयोर्लुग्भविष्यतीति ।

एतेऽपि पूर्वान्ता एव क्रियन्ते, तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणत्—इत्युपधाह्रस्वत्वं भवति ।

शाच्छासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम् । किमेतस्याख्याने प्रयोजनम् ? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीत्युपदिश्यते । तेनाध्यापयति, जापयति—इत्येवमादि सिद्धं भवति ॥

## वो विधूनने जुक् ॥ ३८ ॥

'वा'—इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः । पक्षेणोपवाजयति ।

### पदमञ्जरी

*एतेऽपीति* । एते युगादयः, वक्ष्यमाणाश्च जुगादयः । *कृतात्वानां ग्रहणमिति* । आकारान्तानां युकं विधाय तदनन्तरमाकारान्तेषु गृह्यमाणेषु युकः प्राप्तिराख्याता भवतीति भावः । *एवमादीति* । आदिशब्देन—क्रापयति, निजापयति, विलापयते, मुण्डो विस्मापयते, प्रियमाचष्टे प्रापयतीत्यादेर्ग्रहणम् ॥

*वो विधूनने जुक्* ॥ 'विधूनने' इत्ययमेव निर्देशो लिङ्गम्—धूञो णौ नुग्भवतीति । *वा इत्येतस्येति* । 'वा गतिगन्धनयोः' इत्यस्य । 'वज व्रज गतौ' इत्यस्य णिचि रूपे वाजयतीति सिद्धे, धातोः पुग्निवृत्त्यर्थं जुको विधानम् ॥

### न्यासः

एतेऽपीति । युगादयः । निशाययतीत्यादिषु 'आदेच उपदेशेऽशिति' इत्यात्वम् । न्यशीशयदित्यादीनि अदीदपदित्यनेन तुल्यानि, पूर्ववल्लुङादीनि विधाय व्युत्पाद्यानि । अदूधुनदिति । अनकारान्तत्वादिह सन्वद्भावोऽभ्यासस्य नास्तीति । अपिप्रिणदित्यत्राप्यलघुत्वाद् दीर्घत्वं नास्ति ।

ननु च शाच्छासाह्वाव्याः—इत्येत एजन्ता गणे पठ्यन्ते, तत् कथमेषां कृतात्त्वानां ग्रहणम् ? इत्याह—शाह्वेत्यादि । कथं पुनः कृतात्त्वानां ग्रहणेन पुकः प्राप्तिराख्यायते ? आकारान्तानां पुग्विधानात् । अध्यापयतीत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति । अध्यापयतीति 'क्रीङ्जीनां णौ' इत्यात्त्वम् । आदिशब्देन जापयतीत्यादीनां ग्रहणम् । यदि पुकः प्राप्तिमाख्यातुं शाप्रभृतीनां कृतात्वानां ग्रहणं कृतम्, तदा वेञोऽपि कृतात्त्वस्यैव ग्रहणं युक्तम् ? नैवं शक्यम्, वेत्युच्यमाने 'पै ओवै शोषणे'—इत्यस्यापि ग्रहणं स्यात् । तस्मादकृतात्त्वस्यैव वेञो ग्रहणं युक्तम् ॥

वो विधूनने जुक् ॥ पुकि प्राप्ते जुग्विधीयते । वा इत्येतस्येति । 'वा गतिगन्धनयोः' इत्येतस्य । विधूननेऽर्थं इति । कम्पन इत्यर्थः ।

विधूनन इति किम् ? आवापयति केशान् ।

किमर्थं सूत्रम्, 'वज गतौ' ण्यन्तस्य सिद्धत्वात् ? वातेः पुग्मा भूदित्येवमर्थम् । 'पै ओवै शोषणे' इत्यस्यैतद्रूपम् ॥

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ३९ ॥

ली, ला—इत्येतयोरङ्गयोरन्यतरस्यां नुक्, लुक्—इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे । घृतं विलाययति । विलीनयति घृतम् । विलालयति । विलापयति ।

ली + ई इतीकारः प्रश्लिष्यते, तत ईकारान्तस्यैव लुग्भवति, न तु कृतात्वस्य 'विभाषा लीयतेः' इति ।

स्नेहविपातन इति किम् ? जतु विलापयति । जटाभिरालापयते ।

'ली' इति लीलीङोर्ग्रहणम् । 'ला' इति लातेः, कृतात्वस्य च लीयतेः ॥

पदमञ्जरी

*लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने* ॥ स्नेहः=घृतादिः, तस्य विपातनम्= विगच्छतः काठिन्यं त्यजतः प्रयोजकव्यापारः । स्नेहविपातनं काठिन्यमुपगतस्याग्नौ निष्टपनादिना द्रवत्वापादानमित्यर्थः ।

*न तु कृतात्वस्येति* । एकदेशविकृतस्यानन्यत्वात् प्रसङ्गः । *जटाभिरालापयत इति* । 'लियः सम्माननशालीनीकरणयोश्च' इत्यात्मनेपदम् ।

*ली इति लीलीङोर्ग्रहणमिति* । क्रैयादिकदैवादिकयोः । निरनुबन्धकपरि-

न्यासः

ननु 'वज व्रज गतौ' इत्यस्य धातोर्ण्यन्तस्योपवाजयतीति सिद्धम्, तत् किमर्थमेतत् ? वातेः पुग्मा भूदित्येवमर्थं जुको विधानम् । पै औवै शोषण इत्येतस्यैतद्रूपमिति । ननु च लाक्षणिकस्याकारान्तत्वम्, अतो जुका न भवितव्यम् ? नैतदस्ति; इदानीमेव ह्युक्तम्—एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ॥

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ स्नेहविपातनेऽर्थे इति । किमिदं स्नेहविपातनं नाम ? विगच्छतः स्नेहस्य पातनं व्यापारणम् । तथा हि—पातेर्ण्यन्तस्य भावे ल्युटि कृते विपातनमिति । विलीनयतीति । गुणायादेशौ ।

अथ 'विभाषा लीयतेः' इत्यात्वे कृत एकदेशविकृतस्यानन्यत्वाद् विलापयतीत्यत्र कस्मान्नुग् भवति ? इत्याह—ली इत्यादि । ली+ई इति ईकारोऽत्र प्रश्लिष्यते—ईकारान्तस्यैव यथा स्यात्, कृतात्वस्य न भवति ।

ली इति लीलीङोर्ग्रहणमिति । ननु च निरनुबन्धकपरिभाषया 'ली श्लेषणे' इत्येत-

## भियो हेतुभये षुक् ॥ ४० ॥

'भी' इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः । मुण्डो भीषयते । जटिलो भीषयते ।

अत्रापि भी+ई इतीकारप्रश्लेषः कृतात्वस्य षुग्निवृत्त्यर्थः । मुण्डो भापयते---इत्येवं हि तत्र भवति ।

हेतुभय इति किम् ? कुञ्चिकयैनं भाययति । नात्र हेतुः प्रयोजको भयकारणम्, किं तर्हि ? कुञ्चिका ॥

## स्फायो वः ॥ ४१ ॥

'स्फाय्' इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः । स्फावयति ॥

## शदेरगतौ तः ॥ ४२ ॥

### पदमञ्जरी

भाषा तु नेष्यते । *कृतात्वस्य च लीयतेरिति* । ग्रहणमित्यपेक्ष्यते ॥

*भियो हेतुभये षुक्* ॥ हेतुः पारिभाषिकः, भीः=भयम्, हेतोर्भयं हेतुभयम्, तत्र वर्तमानस्य । *भीषयत इति* । 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् । *भापयत इति* । 'बिभेतेर्हेतुभये' इत्यात्वम् ॥

### न्यासः

स्यैव क्रैयादिकस्य ग्रहणं युक्तम्, न तु 'लीङ् श्लेषणे' इत्येतस्य दैवादिकस्य ? एवं मन्यते—एक एवायं धातुर्विकरणद्वयार्थमात्मनेपदार्थञ्च द्विरुपदिश्यते । एवञ्च कृत्वा 'लियः सम्माननशालीनीकरणयोश्च' इत्युभाभ्यामात्मनेपदं भवतीति । ला इति लातेः, कृतात्वस्य च लीयतेरिति । ग्रहणमिति प्रकृतेन सम्बन्धः ॥

भियो हेतुभये षुक् ॥ हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः । बिभेत्यस्मादिति भयः[1], हेतुश्चासौ भयश्चेति हेतुभयः, तस्मिन् हेतुभये । 'ञिभी भये' इत्यस्य वृद्धौ प्राप्तायां 'बिभेतेर्हेतुभये' इत्यात्वे च प्राप्ते पक्षे णौ षुग् विधीयते । मुण्डो भीषयत इति । 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् ।

अथात्वे कृते मुण्डो भापयत इत्यत्र कस्मान्न भवति ? इत्याह—अत्रापीत्यादि ॥

स्फायो वः ॥ स्फावयतीति । 'स्फायी ओप्यायी वृद्धौ' ॥

---

१. अपादाने वाच्ये भयशब्दस्यानपुंसकत्वम्, अन्यथा 'भयलिङ्गभगपदानि नपुंसके' इति ( लिङ्गा० सू० ३९ ) क्लीबत्वमस्य स्यात् ।

शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः। पुष्पाणि शातयति[1]।

अगताविति किम् ? गाः शादयति गोपालकः ॥

रुहः पोऽन्यतरस्याम् ॥ ४३ ॥

रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति णौ परतः। व्रीहीन् रोपयति। व्रीहीन् रोहयति ॥

प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥

प्रत्ययस्थात्ककारात् पूर्वस्याकारस्य इकारादेशो भवति, आपि

पदमञ्जरी

*रुहः पोऽन्यतरस्याम्* ॥ अयं योगः शक्योऽवक्तुम्। कथम् ? 'रुप विमोहने' इति दिवादौ पठ्यते, स ण्यन्तोऽत्र जन्मनि वर्तिष्यते; अनेकार्थत्वाद्धातूनाम्, तस्य रोपयतीति। रुहेस्त्वारोहयतीति।

*प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः* ॥ अत्र यदि कादित्यत्राकारो विवक्षितः स्यात्, एतिकाश्चरन्तीत्यत्रेत्वं न स्यात्। एतदोऽकचि जसि त्यदाद्यत्वे टापि च रूपम्। अकचो ह्यन्त्योऽकार उच्चारणार्थो न श्रवणार्थः; भिन्धकि, रुन्धकि इत्या-

न्यासः

**शदेरगतौ तः** ॥ किमर्थं पुनरिदमुच्यते, यावता 'शद्लृ शातने' इत्यस्मादेव निपातनात् तकारो भविष्यतीति ? गतेरन्यत्र यथा स्याद् गतौ मा भूदिति चेत् ? न; शातनशब्दो हि गतेरन्यमर्थमाचष्टे। एवं तर्हि एतज्ज्ञापयति—अबाधकान्यपि निपातनानि भवन्तीति। तेन पुराशब्दात् 'सायञ्चिरम्' इत्यादिना विधीयमानयोष्ट्युट्युलोः 'पुराणप्रोक्तेषु' इति निपातनेन तुटो बाधनं न भवतीति। तेन पुरातनमित्यपि सिद्धं भवति ॥

**रुहः पोऽन्यतरस्याम्** ॥ रोपयतीति। 'रुह जन्मनि प्रादुर्भावे च'। किमर्थं पुनरिदमुच्यते, यावता दिवादिषु 'रुप लुप विमोहने' इति रुपिः पठ्यते, तस्य रोपयतीति भविष्यति, रुहेस्तु रोहयतीति ? जन्मार्थेऽपि रोपयतीति प्रयोगो यथा स्यात्; अन्यथा हि विमोहनार्थस्यैव स्यात्। अनेकार्थत्वाद् धातूनां रुपिर् जन्मनि वर्त्तिष्यत इति चेत् ? नैतदस्ति; अनेकार्था हि धातवः, न तु सर्वार्थाः। न हि रुप्यतीत्युक्ते जन्मार्थः प्रतीयते, किं तर्हि ? विमोहनार्थ एव ॥

**प्रत्ययस्थात्कात् पूर्वस्यात इदाप्यसुपः** ॥ सुपः परो न भवतीति। सुबन्तात्परो न

1. 'फलानि शातयति' इति पुस्तकान्तरेऽधिकम्।

परतः, स चेदाप्सुपः परो न भवति। जटिलिका। मुण्डिका। कारिका। हारिका। एतिकाश्चरन्ति।

प्रत्ययग्रहणं किम्? शक्नोतीति शका।

स्थग्रहणं विस्पष्टार्थम्, ककारमात्रं प्रत्ययो नास्तीति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम्।

कादिति किम्? मण्डना। रमणा। पूर्वस्येति किम्? परस्य मा भूत्—पटुका। मृदुका। अत इति किम्? गोका। नौका। तपर-

पदमञ्जरी

देरसिद्धिप्रसङ्गात्, ततश्च कशब्दस्याभावादेतिका इत्यत्र न स्यादेव। 'न यासयोः' इति च प्रतिषेधः सङ्घातग्रहणेऽनर्थकः स्यात्। तस्मादुच्चारणार्थोऽकारः, वर्णमात्रमेव विवक्षितमित्याह—*प्रत्ययस्थात्ककारादिति*। *स चेदिति*। स चेदाप्सुपः परस्तान्न भवति तदेतत्रमित्यर्थः। प्रत्ययग्रहणपरिभाषया सुबन्तादिति द्रष्टव्यम्। *जटिलिका, मुण्डिकेति*। टावन्ताभ्यामज्ञातादिषु 'प्रागिवात्कः', 'केऽणः' इति ह्रस्वत्वम्, ततष्टाप्, तत इत्वम्। यद्यप्ययमकारो लाक्षणिकः, तथापि 'उदीचामातः स्थाने' इति लिङ्गात्तस्यापि भवति।

*ककारमात्रं हीति*। उक्तमिदम्—'कादिति वर्णमात्रं विवक्षितम्' इति, न ककारमात्रं कश्चित्प्रत्ययोऽस्ति, तस्मात् कात्प्रत्ययादित्युच्यमानेऽपि प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते इति किं स्थग्रहणेनेत्यर्थः।

*पटुका, मृदुकेति*। पटुमृदुशब्दाभ्यां स्त्र्यर्थवृत्तिभ्यां के कृते टाप्। असति

न्यासः

भवतीत्यर्थः। एष चार्थः प्रत्ययग्रहणपरिभाषया वेदितव्यः। जटिलिका, मुण्डिकेति। अज्ञातादिष्वर्थेषु 'प्रागिवात् कः'। कारिका, हारिकेति। ण्वुल्। एतिकेति। एतदः 'अव्ययसर्वनाम्नाम्' इत्यकच्, त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, टाप्, अकः सवर्णे दीर्घत्वम्। शकेति। पचाद्यच्, टाप्।

**स्थग्रहणं विस्पष्टार्थमिति**। अत्र यत्र ककारमात्रं हि प्रत्ययस्तत्र मा भूदित्येवमर्थं कस्मान्न भवति? इत्याह—ककारमात्रं हीत्यादि। कादिति वर्णग्रहणम्। अकारस्तूच्चारणार्थः। न तु केवलः ककारः प्रत्ययोऽस्ति यन्निवृत्त्यर्थं स्थग्रहणं स्यात्। 'कात् प्रत्ययात्' इत्युच्यमाने प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते, अतोऽन्तरेणापि स्थग्रहणं प्रत्ययस्थस्य ककारस्य ग्रहणं शक्यते विज्ञातुम्। तस्माद् विस्पष्टार्थं स्थग्रहणम्। मण्डना, रमणेति। नन्द्यादिभ्यो ल्युः। पटुका, मृदुका, गोका, नौकेति। पूर्ववत् कः। शका,

करणं किम् ? राका, धाका । आपीति किम् ? कारकः, धारकः ।

अथ आपीत्यनेन किं विशिष्यते ? ककारः । यद्येवम्, कारिकेत्यत्रापि न प्राप्नोति, अकारेण व्यवहितत्वात् ? एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ? वचनाद् व्यवधानमीदृशं यत्स्थानिवद्भावकृतमेकेन वर्णेन तदाश्रीयते । रथ-

### पदमञ्जरी

पूर्वग्रहणे 'तस्मादित्युत्तरस्य' इति कात्परस्यैवाकारस्य 'वार्णादाङ्गं बलीयः' इत्येकादेशं बाधित्वा इत्त्वं स्यात् । यद्यपि जटिलिका, मुण्डिकेत्यादावयं प्रसङ्गः शक्यो दर्शयितुम्; तथापि विस्पष्टार्थमुदाहरणान्तरमुपन्यस्तम् । *राका, धाकेति* । 'कृदाधारार्चिकलिभ्यः कः' ।

*अथापीत्यनेन किं विशिष्यत इति* । ककारः, प्रत्ययो वेति सन्देहात्प्रश्नः । *ककार इति* । प्रत्यये तु विशिष्यमाणे रथकट्यादिष्वतिप्रसङ्ग इति भावः । यद्यपि प्रत्ययोऽपि श्रुतः, तथापि तस्योपसर्जनत्वात् ककार एव विशिष्यते । *कारिकेत्यत्रापि न स्यादिति* । अतिप्रसङ्गस्तिष्ठतु तावत्, इष्टमपि न सिद्ध्यतीत्यपिशब्दस्यार्थः । 'आपि परतो यः ककारः'–इत्येवं विज्ञायमाने कारिकेत्यपि न स्यात्; एकादेशस्य यो द्वितीयोऽकारस्तेन व्यवधानात् । *वचनाद्व्यवधानमीदृशमिति* । आश्रीयत इति वक्ष्यमाणेन सम्बन्धः । ईदृशमित्येतद्व्याचष्टे—*स्थानिवद्भावकृतमिति* । एकेन वर्णेनेत्युपलक्षणम् । स्थानिवद्भावकृतमित्येतावति तात्पर्यम्;

### न्यासः

धाकेति । 'रा ला दाने' इत्यस्माद्धातेश्च 'कृदाधारार्चिकलिभ्यः कः' इत्यौणादिकः कप्रत्ययः ।

अथेत्यादि । चोदकः । ककार इतीतरः । ककारस्य श्रुतत्वात् तस्यैवापीति विशेषणं युक्तमित्यभिप्रायः । येनाभिप्रायेण चोदकः पृष्टवाँस्तमाविष्कर्तुमाह—यद्येवमित्यादि । यद्यपीत्यनेन ककारो विशिष्यते—आपि परतो यः ककार इति । एवं सति कारिकेत्यत्र न प्राप्नोति; ककारस्याकारेणापो व्यवहितत्वात् । एकादेशे कृत इत्यादीतरः । व्यवसर्गे हि सति व्यवधानं भवति । न चैकादेशे कृते व्यवसर्गोऽस्तीत्यतो नास्ति व्यवधानम् । एकादेशः पूर्वेत्यादि । चोदकः । स्थानिवद्भावस्तु 'अचः परस्मिन् पूर्वविधौ' इत्यनेन । वचनादित्रीतरः । उच्यते चेदं वचनम्, न चाप्यनन्तरं ककारः सम्भवतीति तत्र वचनसामर्थ्यात् स्थानिवद्भावे कृते नैकेन वर्णेन सर्वत्र व्यवधानमाश्रीयते । यदि तर्हि वचनसामर्थ्यात् कारिकेत्यादौ व्यवधानेऽपि भवति, तदा रथकट्या, पुत्रकाम्येत्यत्रापि स्यात् ? इत्यत आह–रथकट्यादिष्वित्यादि । रथानां समूहः 'इनित्रकट्यचश्च' इति

कटचादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमिति इत्वं न भवति ।

असुप इति किम् ? बहवः परिव्राजका अस्यां मथुरायां बहुपरिव्राजका मथुरा । सुबन्तादयं परिव्राजकशब्दात्पर आबिति प्रतिषेधो भवति । प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः । पर्युदासे हि सति समुदायादसुबन्तात्पर आबितीत्त्वमत्र स्यादेव । अविद्यमानः

**पदमञ्जरी**

अन्यथा एतिकेत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्त्वं न स्यात् । एक एतदः सम्बन्धी, द्वितीयः 'त्यदादीनामः' इत्यकारः; तत्राकारयोर्यः पररूपमेकादेशः, यश्च टापा सह दीर्घः—द्वयोरपि तयोः स्थानिवद्भावः । अन्ये त्वाहुः—अत्रापि टापा सह य एकादेशस्तस्यैव स्थानिवद्भावः, न त्वकारयोः कृतस्य पररूपस्य; सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् । तेनात्राप्येकेनैव व्यवधानमिति । वचनाद्व्यवधानेऽपि भविष्यतीति वक्तव्ये, ईदृशं व्यवधानमिति यदुक्तम्, तस्य व्यावर्त्यं दर्शयति—*रथकट्यादिष्विति* । रथानां समूहो रथकट्या, 'इनित्रकट्यचश्च' । आदिशब्देन गर्गकाम्यादेर्ग्रहणम् । गर्गमिच्छत्यात्मन इति काम्यजन्तादप्रत्ययः, ततष्टाप् । एतदुक्तं भवति—आपीति सप्तम्या यदानन्तर्यमुपात्तं तन्नात्यन्ताय त्यज्यते, किन्तु यावत्सम्भवमाश्रीयत इति ।

*सुबन्तादयं परिव्राजकशब्दादिति* । प्रत्ययलक्षणेन सुबन्तत्वम् । *पर्युदासे हीति* । सुपोऽन्योऽसुप्, ततश्चेदाप्पर इत्याश्रीयमाण इत्यर्थः । *समुदायादसुबन्तादिति* । अवयवात्परिव्राजकशब्दात्सुबुत्पन्नः, न समुदायादिति तस्यासुबन्त-

**न्यासः**

कट्यच्, ततष्टाप् । पुत्रमिच्छतीति 'काम्यच्च' इति काम्यच्प्रत्ययः, 'अ प्रत्ययात्', ततष्टाप् । तत्र श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्त्वं न भवति । 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन वर्णेन व्यवधानमाश्रीयते । येन नाव्यवधानमपि तु सर्वत्र व्यवधानम्, तेनैकेन वर्णेन व्यवहिते भवितुं युक्तम् । स्थानिवद्भावकृतमेकेन वर्णेन सर्वत्र व्यवधानमस्ति, सङ्घातेन त्वस्ति नास्ति च । तस्मात् तदिह नाश्रीयते ।

सुबन्तादयमिति । परिव्राजकशब्दात् पर आबिति प्रत्ययलक्षणे सुबन्तता वेदितव्या । प्रसज्यप्रतिषेधश्चायमिति । न चेत् सुबन्तादाप् परो भवति । कः पुनः पर्युदासे दोषो यतः स नाश्रीयते ? इत्याह—पर्युदासे हीत्यादि । यद्ययं पर्युदासः स्यात्—सुपोऽन्योऽसुप्, ततश्चेदाप् परो भवतीति; ततो बहुपरिव्राजकेत्यत्रापि स्यादेवेत्त्वम्, असुबन्तात् पूर्वोत्तरपदसमुदायात् पर आबिति कृत्वा । असुबन्तत्वं पुनः समुदायस्य, तस्मात् सुबनुत्पत्तेः; अवयवाद्धि परिव्राजकशब्दादत्र सुबुत्पत्तिः, न तु समुदायात् । भवि-

सुप् यस्मिन् सोऽयमसुबिति—अयमपि नाश्रीयते । तथा हि सति बहुचर्मिकेत्यत्रापि न स्यात् ।

❀ मामकनरकयोरुपसंख्यानं कर्त्तव्यमप्रत्ययस्थत्वात् ❀ । मम इयं मामिका । नरिका । अणि ममकादेशः । 'केवलमाममक' इति नियमात् संज्ञाछन्दसोरीकारो नास्त्यत्र । तेनाण्प्रत्ययान्तादपि टाब्भवति—नरान् कायतीति नरिका । 'आतोऽनुपसर्गे कः' इति कः प्रत्ययः ।

❀ प्रत्ययनिषेधे त्यक्त्यपोश्चोपसंख्यानम् ❀ । 'उदीचामातः स्थाने यकपूर्वायाः' इति विकल्पो मा भूदिति, दाक्षिणात्यिका । इहत्यिका ॥

## पदमञ्जरी

त्वम् । *एवमपि नाश्रीयते इति* । बहुव्रीहिरपि नाश्रीयत इत्यर्थः । किं कारणम् ? इत्यत आह—*तथा हीति* । *बहुचर्मिकेति* । बहूनि चर्माण्यस्यामिति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप् । तत्पुरुषे त्वस्मिन्, नात्र सुबन्तात्परष्टाब् भवति; कपा व्यवहितत्वात् ।

*मामिकेति* । ममेयमित्यण्, 'तवकममकावेकवचने' इति ममकादेशः । *दाक्षिणात्यिकेति* । 'दक्षिणादाच्', दक्षिणा, ततो भवादौ 'दक्षिणापश्चात्पुरसस्त्यक्' । *इहत्यिकेति* । 'अव्ययात्त्यप्' ॥

## न्यासः

द्यमानः सुब् यस्मिन् सोऽयमसुबित्ययमपि नाश्रीयत इति । बहुव्रीहिरपि नाश्रीयत इत्यर्थः । कः पुनस्तदाश्रयणे दोषो यतः स नाश्रीयते ? इत्याह—तथा हीत्यादि । एवं तर्हीत्यर्थः । बहुव्रीहौ पूर्वोत्तरपदयोः प्रत्ययलक्षणेन सुबन्तव्यपदेशोऽस्तीति नासावसुप्, अपि तु विद्यमानसुबेव । तेन बहुचर्मिकेत्यत्र नासुपः पर आबितीत्त्वं न स्यात् । बहूनि चर्माण्यस्यां विद्यन्त इति बहुव्रीहिः । 'शेषाद्विभाषा' इति कप्, टाप् ।

मामिकेति । ममेयमिति 'तस्येदम्' इत्यण्, 'तवकममकौ' इति ममकादेशः । नन्वणन्तान्ममकशब्दात् 'टिड्ढाणञ्' इति ङीपा भवितव्यम्, तत् कथं टाब् भवति ? केवलमामकेति नियमादित्यादि । नरिकेति । 'कै गै शब्दे' । 'आदेच उपदेशेऽशिति' इत्यात्त्वम्, 'आतोऽनुपसर्गे कः', ततष्टाप् ।

दाक्षिणात्यिका, इहत्यिकेति । दक्षिणस्यां दिशि भवेति 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक् । इह भवेति 'अव्ययात्त्यप्' । उभयत्राज्ञातादिष्वर्थेषु 'प्रागिवात्कः' ।

उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—'उदीचामातः स्थाने' इत्यत्र व्यवस्थितविभाषाविज्ञानात् त्यक्त्यपोर्नित्यं भविष्यतीति ॥

## न यासयोः ॥ ४५ ॥

'या', 'सा'–इत्येतयोरिकारादेशो न भवति । यका । सका ।

'यासा' इति निर्देशोऽतन्त्रम्, यत्तदोरुपलक्षणमेतत् । इहापि प्रतिषेध इष्यते–यकांयकामधीमहे, तकांतकां पचामहे इति ।

### पदमञ्जरी

*न यासयोः* ॥ पूर्वेण नित्यमित्त्वे प्राप्ते निषेधोऽयमुच्यते, प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । यदा यत्तदोरकज्भवति तदा प्रतिषेधः । *यका, सकेति* । यत्तदोरकच्, सौ त्यदाद्यत्वे टाप् । या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधो न स्यादित्यत आह–*यासेति निर्देशो न तन्त्रमिति* । *यत्तदोरुपलक्षणमिति* । यद्येवम्, यत्तदोरित्येव वक्तव्यम् ? सत्यम्; तथा तु न कृतं किं कुर्मः ! *यकांयकामधीमह इति* । ऋचं गाथां च । *तकांतकाम्पचामह इति* । ओषधिं शाकिनीं वा, द्वावेतौ प्रयोगौ ।

*उपत्यकेति* । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' । अत्र कश्चिदाह–'स्त्रीविषयोऽयं त्यकन्प्रत्ययान्तः; ततश्च प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्यकारोच्चारणसामर्थ्यादित्त्वाभावः' इति, तदयुक्तम्; पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादावार्हीयस्य ठकः 'अध्यर्धपूर्व' इति लुकि कृते 'लुक् तद्धितलुकि' इति टापो लुकि निमित्ताभावादित्त्वं न स्यादिति तद्धितलुगर्थमेतत्स्यात्, बहिरङ्गो लुक्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' । ननु च 'सुपो धातुप्रातिपदिकयोः' इत्येतद्विषयमेतत् ? नेत्याह; यश्च यावाँश्च लुग्प्रामः, सर्वोऽप्यन्तरङ्गान्विधीन्बाधते, यथा–'सनीस्रंस' इत्यादौ नलोपो न भवति । पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति; यदि स्यात्, आदिवद्भावादाब्ग्रहणेन ग्रहणाल्लुकि सति अकारोऽत्र न श्रूयेत ।

### न्यासः

न यासयोः ॥ येत्येतस्य 'उदीचामातः स्थाने' इत्यादिना विकल्पे प्राप्ते, सेत्यस्य पूर्वेण नित्ये प्राप्ते प्रतिषेधोऽयमारभ्यते; प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । यदा तयोरकज् भवति तदायं प्रतिषेधो विज्ञायते । यका, सकेति । यत्तदोः पूर्ववदकच्, सुः, त्यदाद्यत्वञ्च । यासेति निर्देशोऽतन्त्रमिति । अप्रधानमित्यर्थः । किं कारणम् ? इत्याह–यत्तदोरुपलक्षणार्थमेतदिति । किं कारणमेवं व्याख्यायते ? इत्याह–इहापीत्यादि । यासेति प्रथमैकवचनान्तरूपम् । तत्र यद्ययं निर्देशस्तन्त्रं स्यात्, प्रथमैकवचनान्तयोर्ग्रहणाद् विभक्त्यन्तरे यकाम्, तकामित्यत्र न स्यात्, इष्यते च तत्रापि । तस्मादतन्त्रमयं निर्देशो यत्तदोः प्रातिपदिकयोरुपलक्षणार्थमेतद्–इत्युच्यते ।

❀ यासयोरित्त्वप्रतिषेधे त्यकन उपसंख्यानम् ❀। उपत्यका। अधित्यका।

❀ पावकादीनां छन्दस्युपसंख्यानम् ❀। हिरण्यवर्णाः शुचयः पावकाः। यासु अलोमकाः। छन्दसीति किम्? पाविका।

❀ आशिषि चोपसंख्यानम् ❀। जीवताद् जीवका। नन्दताद् नन्दका। भवताद् भवका।

❀ उत्तरपदलोपे चोपसंख्यानम् ❀। देवदत्तिका, देवका। यज्ञदत्तिका, यज्ञका।

❀ क्षिपकादीनां चोपसंख्यानम् ❀। क्षिपका। ध्रुवका।

पदमञ्जरी

*पावका इति*। पुनन्ति पावयन्तीति वा पावकाः। *अलोमका इति*। बहुव्रीहेः कप्।

*जीवकेति*। 'आशिषि च' इति वुन्।

*देवकेति*। देवदत्तशब्दात् 'अनुकम्पायां कन्', 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दस्य लोपः।

*क्षिपकेति*। क्षिपेरिगुपधात्कः। 'ध्रु गतिस्थैर्ययोः', पचाद्यचि कुटादित्वाद् गुणाभावे उवङ्, उभाभ्यामज्ञातादिषु 'प्रागिवात्कः'।

न्यासः

यासयोरित्त्वप्रतिषेध इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तदेतदुक्तं भवति—यत्तदोः प्रतिषेध इत्यस्मिन् क्रियमाणे त्यकन्प्रत्ययान्तस्य प्रतिषेधप्रतिपादनं कर्त्तव्यमिति। तत्रेदं प्रतिपादनम्—नेति योगविभागोऽत्र क्रियते, तेन त्यकन्प्रत्ययान्तस्य प्रतिषेधो भविष्यतीति। एवमुत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनार्थो वेदितव्यः। प्रतिपादनमप्येतदेव योगविभागकरणमाश्रित्य कर्त्तव्यम्। उपत्यका, अधित्यकेति। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्। पावकेति। ण्वुल्। अलोमकेति। नास्या लोमानि सन्तीति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्।

जीवका, नन्दकेति। 'आशिषि' च इति वुन्। देवका, यज्ञकेति। देवदत्तयज्ञदत्तशब्दाभ्याम् 'अनुकम्पायां कन्' इति कनि कृते 'अनजादौ च विभाषा लोपो वक्तव्यः' इत्युत्तरपदलोपः।

क्षिपका, ध्रुवकेति। 'क्षिप प्रेरणे', 'ध्रुव स्थैर्ये', 'इगुपधज्ञाप्रीकिरः कः'। तदन्तादज्ञाताद्यर्थे 'प्रागिवात् कः'।

❀ तारका ज्योतिष्युपसंख्यानम् ❀। तारका । ज्योतिषीति किम् ? तारिका दासी ।

❀ वर्णका तान्तव उपसंख्यानम् ❀। वर्णका=प्रावरणभेदः । तान्तव इति किम् ? वर्णिका भागुरी लौकायते ।

❀ वर्तका शकुनौ प्राचामुपसंख्यानम् ❀। वर्तका शकुनिः । प्राचामन्यत्र उदीचां तु—वर्तिका । शकुनाविति किम् ? वर्तिका भागुरी लौकायतस्य ।

❀ अष्टका पितृदैवत्ये ❀। अष्टका । पितृदैवत्य इति किम् ? अष्टिका खारी ।

❀ वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम् ❀। सूतिका,

पदमञ्जरी

तरतेर्ण्वुल्—*तारका* । वर्णयति महत्त्वादिकं गुणमिति *वर्णका*=प्रावारविशेषः, तन्तूनां विकारस्तान्तवम् 'ओरञ्' । *वर्णिकेति* । *भागुरी* व्याख्या, टीकाविशेषः । वृतेर्ण्यन्तात् ण्वुल्—*वर्त्तिका* ।

*अष्टकेति* । अश्नन्ति ब्राह्मणा ओदनमस्यामित्यष्टका, 'इष्यशिभ्यां तकन्' इति तकन् । पितरश्च ता देवताश्च पितृदेवताः, तदर्थं कर्म *पितृदैवत्यम्* 'देवतान्तात्तादर्थ्ये यत्' इति यत् । *अष्टिकेति* । अष्टौ परिमाणमस्याः, 'संख्याया अतिशदन्तायाः कन्' ।

*सूतकेति* । 'न सामिवचने' इति प्रतिषेधेन ज्ञापितः स्वार्थे कन् । *पुत्रिकेति* । शार्ङ्गरवादित्वान्ङीनि कृते स्वार्थिकः कन्, 'केऽणः' इति ह्रस्व इकारः, तस्य

न्यासः

तारकेति । तरतेर्ण्वुल् ।

वर्णका तान्तव इति । तन्तूनां विकार इति 'ओरञ्', 'ओर्गुणः' । तान्तवः=प्रावरणविशेषः । तत्र वर्णकेत्युपसंख्यातव्या । 'वर्ण क्रियाविस्तारगुणवचनेषु' इति चौरादिको धातुः, ततो ण्वुल्—वर्णिकेति । व्याख्यात्रीत्यर्थः ।

वर्तकेति । 'वृतु वर्त्तने', ण्वुल् । वर्तिकेति । अध्येत्रीत्यर्थः । अष्टका पितृदैवत्य इति । पितृदैवत्यम्=वैदिककर्मविशेषः, तत्राष्टकेत्युपसंख्यायते । 'अशू व्याप्तौ'—इत्यस्मात् 'इष्यशिभ्यां तकन्' इति तकन् प्रत्ययः, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । अष्टकेति । अष्टौ परिमाणमस्या इति 'तदस्य परिमाणम्' इति 'संख्याया अतिशदन्तायाः कन्' ।

वा सूतकेत्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—सूतका, सूतिका—इत्यादयः शब्दाः पृषोदरान्तःपातिनः, तेन पृषोदरादित्वादेवायं विकल्पः सिद्धः ॥

सूतका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका ॥

उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥

उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्चातः स्थाने योऽकारस्तस्यातः स्थाने इकारादेशो भवति । 'उदीचाम्'-ग्रहणं विकल्पार्थम् । इभ्यिका, इभ्यका । क्षत्रियिका, क्षत्रियका । ककार-पूर्वायाः—चटकिका, चटकका । मूषिकिका, मूषिकका ।

आत इति किम् ? सांकाश्ये भवा सांकाश्यिका ।

स्थानग्रहणमनुवादेऽपि स्थानसम्बन्धप्रतिपत्त्यर्थम् । 'आत' इत्यनेन ह्यत इति विशिष्यते ।

पदमञ्जरी

पक्षेऽत्वं विधीयते । *वृन्दारिकेति* । 'शृङ्गवृन्दाभ्यामारकन् वक्तव्यः' इत्यारकन् ॥

*उदीचामातः स्थाने यकपूर्वायाः* ॥ यकौ पूर्वौ यस्याः सा यकपूर्वा, कोऽन्यपदार्थः ? आकारः । अर्थगतं स्त्रीत्वं शब्दे समारोप्य स्त्रीलिङ्गनिर्देशः, पूर्वशब्दो व्यवस्थावचनः । *इभ्यिकेति* । इभमर्हतीति 'दण्डादिभ्यो यः'–इभ्या, ततः पूर्ववत्कः, ह्रस्वत्वं च । चटक-मूषकशब्दाभ्यामजादित्वाट्टाप् । *साङ्काश्यिकेति* । सङ्काशैः निर्वृत्तं साङ्काश्यम्, 'सङ्काशादिभ्यो ण्यः', ततो भवार्थे 'धन्वयोपधाद्वुञ्' इति वुञ् ।

स्थानग्रहणमनर्थकम्, 'षष्ठी स्थानेयोगा' इति सिद्धत्वादिति ? अत आह–*स्थानग्रहणमित्यादि* । परिभाषाया विधिशेषत्वादनुवादे उपस्थानं न स्यादिति

न्यासः

उदीचामातः स्थाने यकपूर्वायाः ॥ पूर्वेण नित्यमित्वे प्राप्ते विकल्पार्थं वचनम् । यकौ पूर्वौ यस्याः सा यकपूर्वा । कोऽन्यपदार्थः ? समुदायः । तथा हि पूर्वशब्दोऽवयवे वर्त्तते । स चावयवः समुदायस्य भवति, नावयवान्तरस्य । न हि वर्णो वर्णस्यावयवो भवति । अवयवान्तरापेक्षस्तु तस्य पूर्वत्वव्यपदेशः । तत् पुनरवयवान्तरं प्रकृतत्वात् स्थान्यकार एव विज्ञायते । स्त्रीलिङ्गनिर्देशस्तु तस्य वक्ष्यते । आतः स्थान इति । योऽकार इति व्यवहितेन सम्बन्धः । इभ्यिकेत्यादि । इभ्यादिशब्देभ्यः 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वः ।

सांकाश्यिकेति । 'धन्वयोपधाद्वुञ्' । नात्रातः स्थानेऽकार इति नित्यमेवेत्त्वम् ।

अथ स्थानग्रहणं किमर्थम्, यावतात इत्येषैव षष्ठी स्थानेयोगं प्रतिपादयिष्यति, 'षष्ठी स्थानेयोगा' इति वचनात् ? इत्यत आह—स्थानग्रहणमित्यादि । आकारस्य स्थाने लक्षणान्तरेण विहितस्याकारस्य संकीर्त्तनम्=अनुवादः । अत्रापि स्थाने सम्बन्धप्रतिपत्तिर्यथा स्यात्–इत्येवमर्थं स्थानग्रहणम् । किं पुनः कारणम्—असति

यकपूर्वाया इति किम् ? अश्वा, अश्विका । 'यकपूर्वायाः' इति स्त्रीलिङ्गनिर्देशः—आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम् । इह न भवति—शुभं यातीति शुभंयाः, शुभंयिका । भद्रं यातीति भद्रंयाः, भद्रंयिका ।

**पदमञ्जरी**

भावः । अनुवादत्वमेव स्पष्टयति—*आत इत्यनेन हीति* । अतो योऽकारस्तस्येत्त्वं भवतीति वचनव्यक्तौ नाकारस्य विधिस्पर्शः कश्चिदस्तीत्यर्थः ।

*स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थमिति* । यः 'स्त्रियाम्' इत्यधिकृत्य विहितष्टाबादिः स स्त्रीप्रत्ययः, तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । असति हि स्त्रीलिङ्गे यः कश्चनाकारो गृह्येत ।

*शुभं याति, भद्रं यातीति* । क्विप् । शुभम्, भद्रमिति मकारान्तौ निपातितौ, पूर्ववत्कः, ह्रस्वत्वं च ।

**न्यासः**

स्थानग्रहणेऽनुवादे सम्बन्धप्रतिपत्तिर्न स्यात् ? इत्याह—आत इत्यनेनेत्यादि । आदेशविधौ 'अस्तेर्भूः' इत्येवमादौ 'षष्ठी स्थानेयोगा' इत्येषा परिभाषोपतिष्ठते, न त्वनुवादे; विधिवाक्यशेषभूतत्वादस्याः । न चात्राकारस्य स्थानेऽकारोऽनेन विधीयते, किं तर्हि ? लक्षणान्तरेणाभिनिर्वृत्तोऽनेन विशिष्यते—आतः स्थाने योऽकार इति । तेन नात्र तस्याः परिभाषाया उपस्थानमिति तत्र यदि स्थानग्रहणं न क्रियेत, तदातः समीपो योऽकार इति सामीप्यसम्बन्धप्रतिपत्तिः स्यात् । अथ वा पूर्ववत् प्रश्ने कृत इत्याह—आत इत्यनेनेत्यादि । इकारस्य यः स्थानित्वेनोपात्तोऽकारः स आत इत्यनेन विशिष्यते । एवञ्च विशेष्यत्वादकारस्य प्राधान्यम्, आकारस्य विशेषणत्वादप्राधान्यम् । तत्रासति स्थानग्रहणे यद्यपि सा परिभाषानुवाद उपतिष्ठेत, तथापि प्रधाने कार्यसम्प्रत्ययादात इत्यस्या एव षष्ठ्याः स्थानसम्बन्धो विज्ञायेत, न त्वात इत्यस्याः । स्थानग्रहणे तु सत्यस्या अपि विज्ञायते—एतदर्थं स्थानग्रहणम् । अश्विकेति । पूर्ववत् कः, ह्रस्वत्वञ्च । अथ 'यकपूर्वायाः' इति स्त्रीलिङ्गेन निर्देशः किमर्थः ? इत्याह—स्त्रीलिङ्गनिर्देश इत्यादि । स्त्र्यधिकारविहितः प्रत्ययः स्त्रीप्रत्ययः । तस्यैव प्रतिपत्तिर्यथा स्यादित्येवमर्थः स्त्रीलिङ्गेन निर्देशः । असति तस्मिन्नाकारमात्रस्थाने योऽकारस्तस्य स्थानित्वं विज्ञायेत, ततश्च यातेः शुभम्भद्रंशब्दयोरुपपदतः 'विजुपेच्छन्दसि' इति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच् । तदन्तात् कप्रत्यये शुभंयिका, भद्रंयिकेत्यत्रापि विकल्पः प्रसज्येत । तस्मात् तन्निवृत्त्यर्थं स्त्रीलिङ्गनिर्देशः । शुभम्भद्रंशब्दौ मकारान्तौ निपातौ ।

यकपूर्वाया इत्यादि । ग्रहणवाक्यम् । तस्य धात्वन्तयोर्यकारककारयोरित्यादि । विवरणम् । वक्तव्यमिति । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—व्यवस्थितविभाषाविज्ञानाद्धात्वन्तयोरपि यकारवकारयोरनन्तरस्याकारस्येत्त्वप्रतिषेधः प्राप्नोति, स न

❀ यकपूर्वाया धात्वन्तप्रतिषेधः ❀। धात्वन्तयोर्यकारककारयो-रस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः। सुनयिका। सुशयिका। सुपाकिका। सुशोकिका ॥

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४७ ॥

एषामातः स्थाने योऽकारस्तस्य इत्त्वं न भवति उदीचामाचा-र्याणां मतेन। भस्त्रा—भस्त्रका, भस्त्रिका; अभस्त्रका, अभस्त्रिका। एषका, एषिका। अजा—अजका, अजिका; अनजका, अनजिका। ज्ञा—ज्ञका, ज्ञिका, अज्ञका, अज्ञिका। द्वा—द्वके, द्विके। स्वा—स्वका, स्विका; अस्वका, अस्विका।

एषाद्वे नञ्पूर्वे न प्रयोजयतः, किं कारणम्? अत्र हि सति यदि

पदमञ्जरी

*प्रतिषेध इति*। तेन विधिरेव भवति। *सुनयिका, सुशयिकेति*। नीशीभ्याम् 'एरच्', सुशब्देन बहुव्रीहिः, टाबादि पूर्ववत्। *सुपाकिका, सुशोकिकेति*। पचि-शुचिभ्यां घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। शेषं पूर्ववत् ॥

*भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि* ॥ 'स्वा' इति षष्ठ्याः स्थाने प्रथमा। एषेति कृतषत्वनिर्देशस्तन्त्रम्। तथा च—एतिकाश्चरन्तीति जसि नित्यमित्त्व-मुदाहृतम् ॥

अत्रातः स्थान इत्येतत् स्वशब्दस्य विशेषणम्।
सम्भवव्यभिचारौ हि तत्र स्तः काकचोः सतोः ॥
ह्येतदोः सम्भवो नास्ति, नान्यत्र व्यभिचारिता।
सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत् ॥

*द्वके इति*। द्वकिशब्दाद् द्विवचने त्यदाद्यत्वे टापि औङः शीभावः।

न्यासः

भविष्यतीति। सुनयिका, सुशयिकेति। णीञ्शीङ्भ्याम् 'एरच्' इत्यच्। शोभनो नयो-ऽस्याः, शोभनः शयोऽस्याः—सुनया, सुशया, ततः 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वत्वम्। सुपाकिका, अशोकिकेति। 'डुपचष् पाके', 'शुच शोके', भावे घञ्। शोभनः पाकोऽस्याः, अविद्यमानः शोकोऽस्या इति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्, 'आपोऽन्यतरस्याम्' इति ह्रस्वत्वम् ॥

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ भस्त्रका, भस्त्रिकेति। पूर्ववत् कः। अभ-स्त्रका, अभस्त्रिकेति। पूर्ववत् कप्रत्ययः, बहुव्रीहिः, तत्पुरुषो वा।

अथ कस्मादेषा-द्वे नञ्पूर्वे नोदाह्रियेते? इत्याह—एषाद्वे नञ्पूर्वे न प्रयोजयत इति। प्रकृतत्वादित्त्वप्रतिषेधविकल्प इति विज्ञेयम्। किं कारणमिति। अनेन नञ्पूर्व-

साकच्काभ्यां नञ्समासः, अथापि कृते नञ्समासे पश्चादकच्—उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां सत्यां त्यदाद्यत्वे सति टापा भवितव्यम्, सोऽन्तर्वर्त्तिन्या विभक्त्या सुबन्तात्पर इति इत्वस्य प्राप्तिरेव नास्ति। तेन अनेषका, अद्वके—इत्येव नित्यं भवितव्यम्।

स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति।

'भस्त्रा'—इत्ययमभाषितपुंस्कः, तस्य 'अभाषितपुंस्काच्च' इत्येव

**पदमञ्जरी**

*तस्यां सत्यामिति*। समासार्थात्तु या विभक्तिस्तस्यां त्यदाद्यत्वं न भवति; 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति वचनात्। *सोऽन्तर्वर्त्तिन्या विभक्त्या सुबन्तात्पर इति*। प्रत्ययलक्षणेन सुबन्तत्वम्।

स्वशब्दोऽपि तर्ह्यनयैव युक्त्या नञ्पूर्वो न प्रयोजयेदित्यत आह—*स्वशब्दस्त्विति*। स्वशब्दो हि 'स्वमज्ञातिधनाख्यायाम्' इति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकः, तेन तस्मात्कप्रत्ययेनैव भवितव्यम्, नाकचा। तत्र यदा नञ्समासे कप्रत्ययः क्रियते तदन्ताच्च टाप्, तदासौ सुपः परो न भवति; केन व्यवहितत्वात्। तेनासर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोऽपि भवत्येव प्रयोजकः।

**न्यासः**

योरप्रयोजकत्वे कारणं पृच्छति। अत्र हीत्यादिना तत्कारणं दर्शयति। सोऽन्तर्वर्त्तिन्या विभक्त्येति। यासौ समासार्था विभक्तिस्तया लुप्तयापि प्रत्ययलक्षणेन स आप्सुबन्तादेवैतच्छब्दाद् द्विशब्दाच्च परः सम्पद्यते, तेनेत्वस्य प्राप्तिरेव नास्ति; 'असुपः' इति प्रतिषेधात्, तत् किं प्रतिषेधविकल्पेन! तस्मादेषाद्वे नञ्पूर्वे न प्रयोजयतः।

यद्येवम्, अनयैव युक्त्या स्वशब्दोऽपि न प्रयोजयेत्? इत्यत आह—स्वशब्दस्त्वित्यादि। युक्तं यदेषाद्वे नञ्पूर्वे न प्रयोजयतः, अत्र व्यवधानाभावात् सुबन्तात् पर आब् भवतीति कृत्वा, न हि प्राक् टेर्भवन्नकज् व्यवधायको भवितुमर्हति; स्वशब्दस्तु 'स्वमज्ञातिधनाख्यायाम्' इति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकः, तेन तस्मात् कप्रत्ययेनैव भवितव्यम्, नाकचा, तत्र यदि नञ्समासं कृत्वा कप्रत्ययः क्रियते, तदन्ताच्च टाप्, तदासौ सुबन्तात् परो न भवति; कप्रत्ययेन व्यवधानादिति असर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोऽपि विकल्पं प्रयोजयति।

भस्त्रेत्ययमभाषितपुंस्क इति। स्त्रियामेव सर्वदा वृत्तेः। यद्येवम्, 'अभाषितपुंस्काच्च' इत्यनेनैव विकल्पः सिद्धः, तत् किमर्थमिहोपादीयते? इत्यत आह—तस्येत्यादि। उपसर्जनमर्थः प्रयोजनं यस्य तत् तथोक्तम्। यदानुपसर्जनं भस्त्राशब्दो भवति, तदायमभाषितपुंस्क इति सत्यमुत्तरसूत्रेण सिद्धो विकल्पः; तत्रापि नञ्पूर्वाणा-

सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम् । अविद्यमाना भस्त्रा यस्या अभस्त्रा, सात्पा अभस्त्रका, अभस्त्रिका । अत्रोपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद् यष्टाबुत्पद्यते तस्य 'केऽणः' इति यो ह्रस्वः, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति ।

'नञ्पूर्वाणामपि' इत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते । निर्भस्त्रिका, निर्भस्त्रका । बहुभस्त्रिका, बहुभस्त्रका—इत्येवमनयोरपीष्यते ।

पदमञ्जरी

*अभस्त्रका, अभस्त्रिकेति* । 'अल्पे' इति 'प्रागिवात्कः' । असति तु भस्त्राग्रहणे यथा न सिध्यति तथा दर्शयति-*अत्रेति* । बहुव्रीहिः पुंस्यपि वर्त्तते-अभस्त्रः पुरुष इति । विहितग्रहणेनैतद्दर्शयति—यद्यप्यभाषितपुंस्काद्भस्त्राशब्दात्परो भवति, तथापि तस्माद्विहितो न भवति । विहितविशेषणं चोत्तरत्रापि भाषितपुंस्कग्रहणम्, अन्यथा न विद्यते खट्वा यस्याः साऽखट्वा, ततोऽखट्विका—इत्यादावपि प्रसङ्गादिति ।

अपिग्रहणेन केवलानामेव भस्त्रादीनां समुच्चयः, नान्यपूर्वाणामिति शङ्कमानं प्रत्याह—*नञ्पूर्वाणामपीत्यपिशब्दादिति* । *इष्यते इति* । अनेन नेयं स्वतः

न्यासः

मित्यनुवृत्तेः । यदा तूपसर्जनं भवति, तदा भाषितपुंस्कत्वं प्रतिपद्यत इति न सिध्यति । तस्मादुपसर्जनस्य भाषितपुंस्कस्यापि यथा स्यादित्येवमर्थमिह भस्त्राशब्दस्य ग्रहणम् । **अभस्त्रका, अभस्त्रिकेति** । 'अल्पे' इत्यर्थे 'प्रागिवात् कः' । **अत्रेति** । उपन्यस्त उदाहरणे । **उपसर्जनह्रस्वत्वे कृते इति** । अविद्यमाना भस्त्राऽस्या इति बहुव्रीहौ कृते 'गोस्त्रियोरुपसर्जनस्य' इत्यनेन । **पुनरित्यादि** । अभस्त्रशब्दो हि बहुव्रीहिः, स पुंस्यपि वर्त्तत इति भाषितपुंस्को भवति । तस्माद् यदा टाप् स भाषितपुंस्कशब्दादुत्पद्यते । तस्य भाषितपुंस्कादुत्पन्नस्यापि टापो यः 'केऽणः' इति ह्रस्वो भवति, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति । तस्मादभाषितपुंस्कादित्यनेन न सिध्यति—इत्यभिप्रायः ।

**नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानाञ्च विधिरयमिष्यत इति** । तत्रोदाहरणमाह—**निर्भस्त्रिकेत्यादि** । निर्गता भस्त्रा यस्याः सा निर्भस्त्रिका । बह्व्यो भस्त्रा यस्याः सा बहुभस्त्रिका । आदिशब्देन सुभस्त्रका, सुभस्त्रिका; भस्त्रका, भस्त्रिका—इत्येवमादीनां ग्रहणम् । यदि तर्ह्यन्यपूर्वाणां केवलानाञ्च विधिरिष्यते, तदा 'नञ्पूर्वाणाम्' इति वचनमनर्थकं स्यात् । नञादिपूर्वाणां तदन्तविधिना भविष्यति, केवलानाञ्च

अत्र 'नञ्पूर्वाणाम्' इति वचनमनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थः ॥

अभाषितपुंस्काच्च ॥ ४८ ॥

अभाषितपुंस्काद्विहितस्यातः स्थाने योऽकारस्तस्योदीचामाचार्याणां मतेन इकारादेशो न भवति । खट्वका, खट्विका । अखट्वका, अखट्विका । परमखट्वका, परमखट्विका ।

बहुव्रीहौ यदा कपि ह्रस्वः क्रियते तदा भवितव्यमनेन विधिना । अत्राप्यभाषितपुंस्काद्विहितस्यातः स्थाने भवत्यकार इति ।

पदमञ्जरी

प्राप्तिरिति दर्शयति । यदि तर्हि सर्वत्रेष्येत, नञ्पूर्वाणामपीति न वक्तव्यम् 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इत्येव सर्वत्र भविष्यत्यत आह—*तत्रेति* ॥

*अभाषितपुंस्काच्च* ॥ अभाषितपुंस्कादिति विहितविशेषणमित्याह—*अभाषितपुंस्काद्विहितस्येति* । खट्वाशब्दः स्त्रियामेव नियत इत्यभाषितपुंस्कः, बहुव्रीहेरभिधेयलिङ्गत्वादभाषितपुंस्कत्वाभावादनेन विकल्पेन न भवितव्यमिति मन्यमानं प्रत्याह—*बहुव्रीहाविति* । कथं भवतीत्यत आह—*तत्रापीति* । इतिकरणो हेतौ ।

न्यासः

व्यपदेशिवद्भावेन; 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति वचनान्न सिध्यतीत्येतच्च नाशङ्कनीयम्, उभे अपि ह्येते परिभाषे प्रत्ययविधिविषये एवेत्यत आह—अत्रेत्यादि । तदन्तविधिना व्यपदेशिवद्भावेनात्र सिद्धस्यैव प्रकारविधेर्नञ्पूर्वाणामपीति वचनानुवादः । किमर्थः ? मन्दबुद्धिप्रतिपत्त्यर्थः । नञ्पूर्वाणामपीति वचनमन्तरेण यः प्रतिपत्तुर्यथा स्यादित्येवमर्थम् ॥

अभाषितपुंस्काच्च ॥ नञ्पूर्वाणामपीत्यनुकर्षणार्थश्चकारः । खट्वका, खट्विकेति । पूर्ववत् कः । खट्वाशब्दोऽयमाविष्टलिङ्गो नित्यं स्त्रियामेव वर्तत इति भाषितपुंस्को न भवति । अखट्विकेति । न खट्वा, अखट्वेति नञ्समासः । परमखट्वकेत्यादि । 'सन्महत्' इत्यादिना समासः । सर्वत्र 'केऽणः' इति ह्रस्व ः।

बहुव्रीहेर्भाषितपुंस्कत्वादत्र न भवितव्यमनेन विकल्पेनेति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—बहुव्रीहावित्यादि। कथं पुनरभाषितपुंस्कादित्युच्यमाने बहुव्रीहौ भाषितपुंस्कादपि भवति ? इत्याह—अत्राप्यभाषितपुंस्कादित्यादि । इतिकरणो हेतौ । यद्यपि बहुव्रीहेर्भाषितपुंस्को भवति, तथापि यदा कपि 'आपोऽन्यतरस्याम्' इति ह्रस्वः क्रियते, तदाऽभाषितपुंस्कादेव विहितस्याकारस्य स्थाने यः स्यादकारस्तस्माद् भवत्येव विकल्पः । अविद्यमाना खट्वास्या इति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्, ततो ह्रस्वः । स चाभाषितपुंस्कादेव विहितस्याकारस्य भवति । तेनाखट्वका, अखटविकेति विकल्पो भवत्येव ।

यदा तु अविद्यमाना खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विकेति, तदा न भवति। तथा अतिक्रान्ता खट्वामतिखट्वा, अल्पा अतिखट्वा अतिखट्विका ॥

आदाचार्याणाम् ॥ ४९ ॥

अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामाकारादेशो भवति। खट्वाका, अखट्वाका, परमखट्वाका ॥

ठस्येकः ॥ ५० ॥

पदमञ्जरी

*यदा त्विति* । कबभावपक्ष एतत् । अखट्वा इति स्थिते उपसर्जनह्रस्वत्वम्, टाप्, पुनः 'केऽणः' इति ह्रस्वः । स च समासाद्भाषितपुंसकादुत्पन्नस्य टाप इति न भवत्ययं विकल्पः । 'अभाषितपुंस्कात्परस्यातः' इति विज्ञायमाने स्यादेवात्र विकल्पः । *अतिखट्विकेति* । अत्रापि समासाद्भाषितपुंस्काट्टाबुत्पन्नः ॥

*आदाचार्याणाम्* ॥ इत्त्वापवादोऽयं योगः । 'केऽणः' इति ह्रस्वापवादश्च । *आचार्याणामिति* । उदीचामित्युक्तम्, ततोऽन्येषामाचार्याणामित्यर्थः । अपर आह–आचार्यस्य पाणिनेर्य आचार्यः स इहाचार्यः, गुरुत्वात्तु बहुवचनमिति । सर्वथा अभाषितपुंस्केषु त्रैरूप्यम्–अखट्वका, अखट्विका, अखट्वाकेति ॥

*ठस्येकः* ॥ अत्र द्वौ पक्षौ–ठेति व्यञ्जनमात्रं स्थानित्वेन निर्दिश्यते, अकार-

न्यासः

यदा त्वित्यादि । अविद्यमाना खट्वास्या इति बहुव्रीहौ कृत उपसर्जनह्रस्वत्वम्, ततष्टाप् । अल्पा अखट्वेति 'प्रागिवात् कः'—अखट्विकेति । अत्र विकल्पो न भविष्यति; भाषितपुंस्कत्वाद् बहुव्रीहेर्विहितस्यातः स्थानेऽकारस्य विहितत्वात् । प्रादिसमासेऽपि न भवतीति दर्शयन्नाह–तथेत्यादि । अतिखट्विकेति । अत्रापि प्रादिसमासे कृते, उपसर्जनह्रस्वत्वे च, पुनस्तत्पुरुषाद्भाषितपुंस्काद् विहितस्यातः स्थाने विहितोऽकार इति न प्रवर्त्तते विकल्पः ॥

आदाचार्याणाम् ॥ नञ्पूर्वाणामपीति निवृत्तम्; पूर्वसूत्रे चानुकृष्टत्वात् । इत्त्वापवादोऽयं योगः । 'केऽणः' इति ह्रस्वापवादश्च ।

आचार्यग्रहणं नित्यार्थम् । असति हि तस्मिन्, 'उदीचाम्' इत्यधिकाराद् विकल्पः स्यात् । आचार्यग्रहणे तु सति तेन 'उदीचाम्' इत्येतस्मिन्निवर्त्तिते नित्य एष विधिर्भवतीति ॥

ठस्येकः ॥ अत्र यद्यविशेषेण ठस्य ग्रहणं स्यात्, पठिता, पठितुमित्यादौ धात्वन्तस्यापि स्यात् । अत एतद्दोषपरिजिहीर्षया प्रत्ययस्य ठस्य ग्रहणम्, न तु ठमात्रस्येति

अङ्गस्य निमित्तं यष्ठः, कश्चाङ्गस्य निमित्तम् ? प्रत्ययः, तस्य प्रत्ययठस्य इक इत्ययमादेशो भवति। 'प्राग्वहतेष्ठक्', आक्षिकः, शालाकिकः। 'लवणाट्ठञ्', लावणिकः।

ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः; तदा इहप्यकार उच्चारणार्थः, वर्णमात्रं तु स्थानित्वेनोपादीयते। सङ्घात-

**पदमञ्जरी**

स्तूच्चारणार्थः, एवं ढगादिष्वपीत्येकः पक्षः; सङ्घातः प्रत्ययः, स्थान्यप्यत्र स एवेति द्वितीयः। तत्राद्ये पक्षे पठिता, पठितुमित्यादौ धात्वन्तस्यापि प्रसङ्गः; द्वितीये तु अठचि कर्मठ इत्यत्रापि प्राप्नोति। तत्र द्वयोरपि पक्षयोर्यथा दोषो न भवति तथा दर्शयन्नाह—*अङ्गस्य निमित्तं यष्ठ इति*। सम्बन्धस्तत्र नावयवावयविभावलक्षणः, पठितेत्यादावपि प्रसङ्गात्; किं तर्हि ? निमित्तनिमित्तिभावलक्षणः। अङ्गस्य सम्बन्धीत्युक्ते तद्रूपसम्बन्ध्येव प्रतीयते; प्रत्ययश्च तद्रूपसम्बन्धी, तदायत्तत्वादङ्गव्यपदेशस्य। तदेवमङ्गव्यपदेशनिमित्तस्य प्रत्ययस्य ग्रहणादुभयोरपि पक्षयोर्दोषाभावः। किञ्च—सङ्घातपक्षे अर्थवतष्ठशब्दस्य ग्रहणान्न भवति कर्मठः—

**न्यासः**

दर्शयितुमाह—अङ्गस्य निमित्तं यष्ठ इति। अङ्गस्येति सम्बन्धलक्षणा षष्ठी। अत्र यद्यपि धात्ववयवो ह्यङ्गस्य सम्बन्धी भवति, तथापि यदा यतो ह्यङ्गस्यात्मलाभो यस्मिन्नङ्गमित्येतद् भवति, स एव प्रत्यासत्तेरङ्गस्य निमित्तीभूतः सम्बन्धी गृह्यते, न त्ववयवोऽपि। कश्चाङ्गस्य निमित्तं भवतीति। एवं मन्यते—यदि सामान्येनाङ्गस्य निमित्तं यत्तदिह गृह्यते धात्वन्तस्य ठस्य स्यादेव, भवन्ति हि अवयवा अङ्गस्यावयविनो निमित्तम्, तैस्तस्यारभ्यमाणत्वादित्याह—प्रत्यय इति। अस्यायमभिप्रायः—सत्स्वप्यवयवेषु यावत्प्रत्ययो नोत्पद्यते तावत्तस्यावयविनोऽङ्गात्मलाभो न भवति, तस्मिंस्तूत्पन्ने सति भवति; तस्मात्प्रत्यय एवाङ्गस्य निमित्तम्, नावयव इति। आक्षिकः, शालाकिक इति। अक्षैर्दीव्यतीत्यर्थे ठक्। लावणिक इति। अत्रापि लवणं पण्यमस्येति 'लवणाट्ठञ्'।

इह ठस्येति वर्णमात्रस्य ग्रहणं वा स्यात् ? सङ्घातस्य वा ? तत्र पूर्वस्मिन् पक्षे ठस्येति निर्देशो नोपपद्यते; इतरस्मिंस्त्वौणादिकेऽतिप्रसङ्गः—'कणेष्ठः' कण्ठ इत्यादौ। इह तु मथितं पण्यमस्येति माथितिक इति ठस्येकादेशे कृते प्रकृतेश्च 'यस्येति च' इत्यकारलोपे सति तान्ततायामुपजातायामिकादेशस्य स्थानिवद्भावाट्ठग्रहणेन ग्रहणाद् 'इसुसुक्तान्तात् कः' इति कादेशः प्रसज्येतेति यश्चोदयेत्, तं प्रत्याह—ठगादिष्वित्यादि। आदिशब्देन ठञादीनां ग्रहणम्, यदि तेषु वर्णमात्रमनच्कप्रत्ययोऽकारस्तूच्चारणार्थः, तदा 'ठस्येकः' इत्यत्राप्यकार उच्चारणार्थः। एवं वर्णमात्रं स्थानित्वेनोपादीयते। इहाप्यकार उच्चारणार्थ एवेति वर्णमात्रग्रहणेन यो दोषः परस्य चोदयिष्यतः स निरा-

ग्रहणे तु प्रत्ययेऽत्रापि सङ्घातग्रहणमेव। तत्र 'कणेष्ठः', कण्ठः— इत्येवमादीनामुणादीनाम् 'उणादयो बहुलम्' इति न भवति।

मथितं पण्यमस्य माथितिकः—इत्यत्र तु यस्येतिलोपे कृते 'इसुसुक्तान्तात्कः' इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति; 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न भवति। 'यस्येति च' इति लोपस्य स्थानिवद्भावाद्वा। पूर्वस्मादपि हि विधौ स्थानिवद्भावः॥

पदमञ्जरी

इत्यत्र प्रसङ्गः। वर्णग्रहणे त्वर्थवत्परिभाषा न प्रवर्तते। तत्र सङ्घातपक्षे दोषान्तरमाशङ्क्य परिहरति–*तत्रेति*। पुनरपि तस्मिन्नेव पक्षे चोदयति–*मथितं पण्यमस्येति*। वर्णग्रहणे तु 'अनल्विधौ' इति स्थानिवत्त्वनिषेधादिकस्य कादेशाप्रसङ्गः। *कादेशः प्राप्नोतीति*। ननु तान्तादङ्गादित्युच्यते, न चात्र तान्तमङ्गम्, ततः प्रत्ययस्याविधानात्? नैतदस्ति; एकदेशविकृतस्यानन्यत्वादङ्गं भवति, तान्तं च; ततश्च यथा—अनुकम्पितो भानुदत्त इति ठचि द्वितीयादचः ऊर्ध्वस्य लोपे कादेशो भवति–भानुक इति, तथात्रापि प्रसङ्गः? परिहरति–*सन्निपातेति*। अजादिसन्निपातेन तान्तत्वमुपजायते, ततश्च तद्विघातस्य निमित्तं नोपपद्यते। परिहारान्तरमाह—*यस्येतिलोपस्येति*। स्थानिवद्भावस्तु 'अचः परस्मिन्पूर्वविधौ' इत्यनेन। ननु पूर्वस्य विधावित्युच्यते, परस्यायम्? तत्राह—*पूर्वस्मादपि*

न्यासः

कृतः। सत्यपि वर्णमात्रस्य ग्रहणे, आगन्तुकेनोच्चारणार्थेनाकारेण ठस्येति निर्देशस्योपादानात्। सङ्घातग्रहणे त्वित्यादि। अथ ठगादिषु सङ्घातः साच्कष्ठशब्दः प्रत्ययः, एवं सत्यत्रापि सूत्रे सङ्घातस्येति स्थानित्वेन ग्रहणं युक्तम्। यस्त्वस्मिन् पक्षे प्रथमो दोषश्चोदयितुमिष्टः परस्य, तं जिहीर्षुराह—तत्रेत्यादि।

योऽप्यस्मिन् पक्षे द्वितीयो दोषस्तं मथितं पण्यमस्येत्यादिनाविष्कृत्य—सन्निपातलक्षणो विधिरित्यादिना परिहरति। अजादिसन्निपातेन तकारान्ततोपजाता, सा नोत्सहतेऽजादित्वं विहन्तुमिति न भवति कादेशः। यस्येतिचेति लोपस्य स्थानिवद्भावाद्वेति। न भवति कादेश इति प्रकृतेन सम्बन्धः; स्थानिवद्भावेन तकारान्तताया विहतत्वात्। स्थानिवद्भावः पुनः 'अचः परस्मिन्' इत्यादिना। पूर्वविधौ कर्त्तव्ये स्थानिवद्भवति, न चात्र पूर्वस्य विधिः, किं तर्हि? पूर्वस्मादुत्तरस्य, तत्कुतः स्थानिवद्भावः? इत्याह–पूर्वस्मादपीत्यादि। न केवलं पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासोऽभिमतः, अपि तु पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासोऽपीत्यभिप्रायः॥

## इसुसुक्तान्तात् कः ॥ ५१ ॥

इस्, उस्—इत्येवमन्तानामुगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य 'क' इत्ययमादेशो भवति। इस्—सार्पिष्कः। उस्—धानुष्कः। याजुष्कः। उक्—नैषादकर्षुकः। शाबरजम्बुकः। मातृकम्। पैतृकम्। तान्तात्—औदश्वित्कः। शाक्तत्कः। याक्तत्कः।

इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति—आशिषा चरति आशिषिकः। उषा चरति औषिकः।

पदमञ्जरी

हीति। पञ्चमीसमासोऽपि तत्राश्रीयत इत्यर्थः। अन्ये त्वाहुः—वर्णग्रहणादेव तदन्तविधौ सिद्धे, अन्तग्रहणं प्रत्ययोपदेशकाले तान्तप्रतिपत्त्यर्थमिति॥

इसुसुक्तान्तात्कः॥ *सार्पिष्क इति*। 'तदस्य पण्यम्' इति ठक्, 'इणः षः' इति विसर्जनीयस्य षत्वम्। *धानुष्क इति*। प्रहरणमिति ठक्। *याजुष्क इति*। दीव्यत्यर्थे ठक्। *नैषादकर्षुकः, शाबरजम्बुक इति*। भवादावर्थे 'ओर्देशे ठञ्,' कादेशे कृते 'केऽणः' इति ह्रस्वत्वम्। *मातृकम्, पैतृकमिति*। तत आगतः, 'ऋतष्ठञ्'। *औदश्वित्क इति*। 'संस्कृत भक्षाः', 'दध्नष्ठक्', 'उदश्वितोऽन्यतरस्याम्' इति सप्तम्यन्ताट्ठक्। *शाक्तत्कः, याक्तत्क इति*। 'संसृष्टे' इति ठञ्। *आशिषेति*। 'आङः शासु इच्छायाम्' इत्यस्मादाशासनमाशीरिति सम्पदादित्वाद् भावे क्विप्,

न्यासः

इसुसुक्तान्तात् कः॥ पूर्वेणैकादेशे प्राप्त इसाद्यन्तात् कादेश उच्यते। सार्पिष्क इति। 'तदस्य पण्यम्' इति प्राग्वहतीयष्ठक्, रुत्वविसर्जनीयौ, विसर्जनीयस्य 'इसुसोः सामर्थ्ये' इति षत्वम्। धानुष्क इति। 'तदस्य प्रहरणम्' इति ठक्। याजुष्क इति। 'तेन दीव्यति' इति ठक्। नैषादकर्षुकः, शाबरजम्बूक इति। निषादकर्ष्वां जातः, शाबरजम्बां जात इति 'ओर्देशे ठञ्', 'केऽणः' इति ह्रस्वः। मातृकम्, पैतृकमिति। मातुरागतम्, पितुरागतमिति—'ऋतष्ठञ्'। औदश्वित्क इति। 'उदश्वितोऽन्यतरस्याम्' इति ठक्। शाक्तत्कः, याक्तत्क इति। शक्तुता यक्तुता संसृष्टे इति ठक्।

अथेह कस्मान्न भवति—आशिषा चरतीत्याशिषिकः, उषा चरतीत्यौषिकः? इत्याह—इसुसोरित्यादि। 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः', 'जनेरुसिः', 'अर्त्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यादिना प्रकरणेन यौ विहितौ तयोर्लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तयोरिसुसोर्ग्रहणम्। तेनाशिषिकः, औषिक इत्यत्रापि न भवति; लाक्षणिकत्वादिसुसोः। तथा ह्याङ्पूर्वात् 'शासु इच्छायाम्' इत्यस्माद्, 'वस निवासे' इत्येतस्माच्च केवलात् क्विपि कृते 'शास इदङ्हलोः' इत्यङ्, 'शासः क्वावुपसंख्यानम्' इति शास

❀ दोष उपसंख्यानम् ❀। दोर्भ्यां चरति दौष्कः ॥

## चजोः कु घिण्ण्यतोः ॥ ५२ ॥

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः । घिति—पाकः । त्यागः । रागः । ण्यति—पाक्यम् । वाक्यम् । रेक्यम् ॥

## न्यङ्क्वादीनां च ॥ ५३ ॥

### पदमञ्जरी

'आशासः क्वावुपसंख्यानम्' इतीत्वम् । *उषेति* । वसेः क्विप्, यजादित्वात्सम्प्रसारणे लाक्षणिकं रूपमिति । सर्पिरादौ तु 'अर्चिशुचिहुसृपिच्छादिभ्य इसिः', 'जनेरुसिः', 'अर्तिवपियजित्रपिधनिभ्यो नित्' इति प्रतिपदोक्तमिसुसो रूपम् ।

दोष *उपसंख्यानमिति* । वर्णैकदेशानां वर्णग्रहणेनाग्रहणादोकारे य उकारः, तस्य उकारग्रहणेनाग्रहणादुपसंख्यानम् ॥

*चजोः कु घिण्ण्यतोः* ॥ *पाक* इत्यादौ भावे घञ् । *पाक्यमित्यादौ* कर्मणि 'ऋहलोर्ण्यत्' । यथासंख्यमत्र न भवति—घिति चकारस्य, ण्यति जकारस्येति; 'भुजन्युब्जौ पाण्युपतापयोः', 'प्रयाजानुयाजौ यज्ञाङ्गे', 'वचोऽशब्दसंज्ञायाम्' इत्यादेर्लिङ्गात् ।

क्वचित्तु पठ्यते—*यथासंख्यमत्र नेष्यते, तेन रक्तं रागादिति लिङ्गादिति* ॥

### न्यासः

इत्वम् । वसेरपि वच्यादिसूत्रेण सम्प्रसारणे परपूर्वत्वे च कृत इसुसिति रूपं प्रतिपद्यते । आशिषिकः, औषिक इति । 'शासिवसिघसीनाञ्च' इति षत्वम् । तस्य त्वसिद्धत्वात् कादेशप्राप्तिराशङ्किता ।

**दोष उपसंख्यानमिति** । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—'नञ्पूर्वाणामपि' इत्यतोऽपिग्रहणमनुवर्त्तते; स चानुक्तसमुच्चयार्थः, तेन दोषोऽपि भविष्यति ॥

**चजोः कु घिण्ण्यतोः** ॥ पाकः, त्याग इति । भावे घञ् । पाक्यम्, वाक्यमिति । 'ऋहलोर्ण्यत्' । ननु चात्र घिण्ण्यतोः कार्यिणोश्चजोः साम्याद् यथासंख्यं प्राप्नोति—चकारस्य घिति, जकारस्य ण्यति; तत् कथं त्यागः, राग इति घिति जकारस्य कुत्वं प्राप्नोति ? नैतदस्ति; ज्ञापकादत्र यथासंख्यं न भवति । यद् 'भुजन्युब्जौ पाण्युपतापयोः', 'प्रयाजानुयाजौ यज्ञाङ्गे' इति घञि जकारस्य कुत्वाभावं निपातयति, 'तेन रक्तं रागात्' इति च निर्देशं करोति, तज्ज्ञापयति—यथासंख्यमिह न भवतीति ॥

'न्यङ्कु'—इत्येवमादीनां कवर्गादेशो भवति। न्यङ्कुः—'नावञ्चतेः' इति उप्रत्ययः। मद्गुः—'मिमस्जिभ्य उः' इति मस्जेरुप्रत्ययः। भृगुः—'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इत्युप्रत्ययः।

दूरेपाकः। फलेपाकः। दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव—पचाद्यच्, निपातनाद्वृद्धिः, 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। क्षणेपाकः—इत्यपि हि केचित् पठन्ति। दूरेपाकाः, फलेपाकाः—इति टाबन्तमपरेऽधीयते। उकारान्तावपरे—दूरेपाकुः, फलेपाकुरिति। तेषामुप्रत्ययो निपातनादेव।

तक्रम्, वक्रमिति—तञ्चतेः, वञ्चतेश्च 'स्फायितञ्चिवञ्चि' इत्यादिना सूत्रेण रक्। व्यतिषङ्गः। व्यतिषजतीति पचाद्यच्। अनुषङ्गः। अवसर्गः। उपसर्गः। मेघः। श्वपाकः, मांसपाकः, कपोतपाकः, उलूकपाक इति—कर्मोपपदादण्प्रत्ययः।

पदमञ्जरी

*न्यङ्क्वादीनां च॥ न्यङ्कु इत्येवमादीनां चेति।* 'सिद्धये' इति शेषः, कृतकुत्वानामेव गणे पाठात्। किमर्थं तर्हि सूत्रम्, यावता यथैव कुत्वादन्यदपि घत्वगुणदीर्घत्वादिकं निपातनाद्भवति, तथा कुत्वमपि भविष्यति? सत्यम्; असति तस्मिन्, अनुवादे गणस्य क्वचिदप्यनुपयोगात्प्रमादपाठः शङ्क्येत। *पचाद्यचीति।* घञि कुत्वस्यासिद्धत्वात्।

न्यासः

**न्यङ्क्वादीनाञ्च॥** अघिण्यर्थोऽयमारम्भः। नावञ्चेरित्युप्रत्यय इति। तत्र 'भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः' इत्यनुवृत्तेः। मद्गुरिति। 'टुमस्जो शुद्धौ', 'झलां जश् झशि' इति सकारस्य दकारः। मिमस्जिभ्य उरिति। अनेन 'भृमृशीतॄचरि' इत्यादिकमुपलक्षयति। भृगुरिति। 'भ्रस्ज पाके'। 'प्रथिम्रदि' इत्यादिके सूत्रेऽत एव सूत्रादुप्रत्ययोऽनुवर्त्तते।

दूरेपाका इति। कर्मकर्त्तरि पचाद्यच्। उकारान्तावपर इति। अधीयत इत्यपेक्ष्यते।

तञ्चतेरिति। 'तन्चु त्वन्चु गतौ' इति, 'वन्चु प्रलम्भने'। 'स्फायितञ्चिवञ्चि' इति सूत्रैकदेशः 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्'—इत्येतत् सूत्रमुपलक्षयति। व्यतिषङ्ग इति। 'षन्ज सङ्गे'। अवसर्ग इति। 'सृज विसर्गे'। पचाद्यच्।

संज्ञायम्--मेघः । अवदाघः । निदाघः । अर्हतेर्घञ्--अर्घः । अवपूर्वस्य निपूर्वस्य च दहेः--अवदाघः । निदाघः ।

संज्ञाया अन्यत्र--अर्हः । अवदाहः । निदाहः । न्यग्रोधः, वीरुत्--इत्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि विपूर्वस्य क्विपि धकारो विधीयते । न्यग्रोहयतीति न्यग्रोधः । विरोहयतीति वीरुत् ॥

ह्रो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हन्तेर्हकारस्य कवर्गादेशो भवति ञिति, णिति प्रत्यये परतो नकारे च । घातयति । घातकः । साधुघाती । घातङ्घातम् । घातो वर्तते । नकारे---घ्नन्ति । घ्नन्तु । अघ्नन् ।

पदमञ्जरी

*संज्ञायां मेघ इत्यादि । मेघः--पयोधरः, निदाघः=घर्मः, अवदाघोऽपि स एव । अर्घः=विक्रीयमाणस्य धान्यादेरियत्ता, मूल्यमित्यन्ये । वीरुदिति ।* निपातनादुपसर्गस्य दीर्घत्वम् ॥

*हो हन्तेर्ञ्णिन्नेषु ॥* ञश्च णश्च ञ्णौ, ताविती ययोस्तौ ञ्णितौ, तौ च नश्च ञ्णिन्नाः, तेषु ञ्णिन्नेषु । नकारेऽकार उच्चारणार्थः, तेन वृत्रघ्नि, वृत्रघ्नोरित्यादावपि भवति । घ्नन्तीत्यादौ 'गमहन' इत्युपधालोपः ।

किमिदं ञ्णिन्नग्रहणं हन्तिविशेषणम्--ञ्णिन्नपरस्य हन्तेर्यो हकार इति ? आहोस्विद्धकारविशेषणम्--ञ्णिन्नपरस्य हकारस्य स चेद्धन्तेरिति ? तत्राद्ये पक्षे ह्यत्रासिद्धिः--घ्नन्ति, घ्नन्तु; न हि स्वावयव एव स्वस्मात्परो भवति । द्वितीये तु न क्वचित् स्यात्, न हि ञ्णिन्नकारपरता हकारस्य क्वापि सम्भवति--घातयतीत्यादौ तावदकारेण तकारेण च व्यवधानम्, घ्नन्तीत्यादावुपधा-

न्यासः

मेघ इति । 'मिह सेचने' । अजेव । श्वपाक इति । कर्मोपपदादण्प्रत्ययः 'कर्मण्यण्' इत्यनेन । अर्हतेरिति । 'अर्ह पूजायाम्' । दहेरिति । 'दह भस्मीकरणे' । रुहेरिति । 'रुह बीजजन्मनि प्रादुर्भावे' ।

ननु च न्यङ्क्वादयः कृतकुत्वाः प्रातिपदिकगणे पठ्यन्ते, तत् किमर्थमिदम्, यथैव हि कुत्वादन्यत् कार्यं भवति निपातनात् तथा कुत्वमपि भविष्यति ? तस्यैव प्रातिपदिकपाठस्याभ्यनुज्ञानार्थमिदमुच्यते । असति ह्येतस्मिन् प्रमादपाठो विज्ञायेत ॥

हो हन्तेर्ञ्णिन्नेषु ॥ घातयतीत्याद्युदाहरणानि 'हनस्तोऽचिण्णलोः' इत्यत्र व्युत्पादितानि । घ्नन्तीति । लट्, झेरन्तादेशः, 'गमहन' इत्यादिनोपधालोपः । घ्नन्त्विति । लोट् । अघ्नन्निति । लङ्, 'इतश्च' इतीकारलोपः ।

ह इति किम् ? अलोऽन्त्यस्य मा भूत् । हन्तेरिति किम् ? प्रहारः । प्रहारकः ।

ञ्णित्प्रत्ययो[1] हन्तेर्विशेषणम् । नकारो हकारस्य—नकारे अनन्त-

पदमञ्जरी

लोपस्य स्थानिवद्भावाद् व्यवधानमेव । अथ वचनाद्व्यवधानेऽपि भविष्यति ? इहापि तर्हि प्राप्नोति—हतमिच्छति हतीयति, हतीयतेर्ण्वुल्, हतायक इति, नकारेऽपि हन्ता, हननमित्यादावपि प्रसङ्गः । नकारग्रहणमिदानीं किमर्थं स्यात ? यत्र नकारः श्रूयते तत्र यथा स्यात्, इह मा भूत्—हतः, हथ इति । तदेवं द्वयोरपि पक्षयोर्दोषं दृष्ट्वा पक्षान्तरं दर्शयति—*ञ्णित्प्रत्यय इत्यादि* । यद्यपि द्वन्द्वनिर्दिष्टानामेकयोगक्षेमता न्याय्या, तथापि सम्भवव्यभिचारौ हि विशेषण-विशेष्यभावस्याङ्गमित्ययमेव प्रकार आश्रीयते । ननु च 'स्थानिवद्भावादानन्तर्यं

न्यासः

प्रहारः, प्रहारक इति । हरतेर्घञ्ण्वुलौ ।

इह ञ्णिन्नग्रहणं हन्तिविशेषणं वा स्यात्—ञ्णिन्नकारपरस्य हन्तेर्यो हकार इति, हकारविशेषणं वा—ञ्णिन्नकारपरस्य हकारस्येति स चेद्धन्तेरिति ? तत्र यदि पूर्वकः पक्ष आश्रीयेत, घ्नन्त्यादौ न स्यात्, न ह्यत्र नकारपरो हन्तिः; अवयवेन समुदायस्य पौर्वापर्यानुपपत्तेः, अन्यस्य नकारस्याभावात् । अथेतरः पक्ष आश्रीयेत, न क्वचित् स्यात्, न हि हकारस्य ञ्णिन्नकारपरता सम्भवति । असम्भवस्तु घ्नन्तीत्यादावकार-लोपस्य पूर्वविधौ स्थानिवद्भावे सत्यकारेण व्यवधानात्, घातयतीत्यादावपि हकारात् परेण हन्त्यवयवेनानशब्देन व्यवधानात् । अथ वचनसामर्थ्याद्व्यवधानेऽपि कुत्वं स्यात्, एवमपि हननमिच्छतीति 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम्, क्यज-न्ताण्ण्वुल्, 'अतो लोपः' इत्यकारलोपो हननीयक इत्यत्रापि स्यादिति यश्चोदयेत्, तं प्रति पक्षान्तरमाश्रित्याह—ञ्णित्प्रत्ययोऽत्र हन्तेर्विशेषणमित्यादि । न हि सर्वेषां ञ्णिन्न-काराणां हन्तिं प्रति विशेषणत्वमुपपद्यते, नापि हकारं प्रति । तस्माद् यथासम्भवं किञ्चिदेव कस्यचिद्विशेषणम् । ञ्णित्प्रत्ययस्तु हन्तेः परतः उपपद्यत इति तस्यासौ विशेषणम्—ञ्णिति प्रत्यये परतोऽनन्तरस्य हन्तेरिति । नकारस्तु हन्तेर्विशेषणं नोप-पद्यते; पूर्वोक्तात् कारणात् । हकारस्य तूपपद्यत इति तस्यैव विशेषणम्—नकारे परतोऽनन्तरस्य हन्तिहकारस्यानन्तर इति । अयं तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति निर्दिष्टग्रहणस्यानानन्तर्यार्थत्वाल्लभ्यते । आनन्तर्याश्रयणे तु—हन्ता, हन्तुमित्यत्राप्य-तिप्रसङ्गो निरस्तः । ननु चानन्तर्यमेव हकारस्य णकारेण न सम्भवति, अकारलोपस्य

1. 'ञिति णिति'—इति क्वचित्पाठः ।

रस्य हन्तिहकारस्येति। तच्चानन्तर्यं श्रुतिकृतं सन्निपातकृतमाश्रीयते। स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्; वचनसामर्थ्यात्।

यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते, तथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति ञ्णिति धात्ववयवेन व्यवहितेऽपि सति भवति। इह तु न भवति—हननमिच्छति हननीयति, हननीयतेर्ण्वुल्, हननीयक इति॥

## अभ्यासाच्च ॥ ५५ ॥

### पदमञ्जरी

नकारस्य न सम्भवति' इत्युक्तम्? अत आह—*तच्चेति*। *सन्निपातकृतमिति*। श्रुतिकृतमित्यर्थः।

अथ वा—पुनरस्तु द्वितीयः पक्षः, तत्रापि दोषः सुप्रतिविधानः? इत्याह—*यदापीति*। धात्ववयवेन नकारेण व्यवधानमव्यभिचारीति तदेवाश्रीयते, न शब्दान्तरेणेति ञ्णित्ययं परिहारः। नकारे तूक्त एव॥

### न्यासः

स्थानिवद्भावे सत्यकारेण व्यवधानात्? इत्यत आह—तच्चेत्यादि। सन्निपातकृतमिति। श्रुतिकृतमित्यर्थः। ननु चाश्रितेऽपि सन्निपातकृतानन्तर्ये स्थानिवद्भावशास्त्रेण यत् कृतमनानन्तर्यं तद्विहन्यादेव कुत्वम्? इत्यत आह—स्थानिवद्भावशास्त्रकृतं त्वित्यादि। किं कारणमविघातकम्? इत्याह—वचनसामर्थ्यादिति। यदि स्थानिवद्भावशास्त्रकृतमनानन्तर्यं व्यवधायकं बाधकं स्यान्नकारवचनमनर्थकं स्यात्; निरवकाशत्वात्। तस्माद् वचनसामर्थ्यान्न विघातकम्।

यद्यपीत्यादिना यौ द्वौ पक्षावुपन्यस्तौ, तत्र द्वितीये पक्षे यो दोषस्तस्य परीहारः। तत्र नकारेण हकारे विशेष्यमाणे यो दोषः स पूर्वमेव परिहृतः। सम्प्रति तु ञ्णित्प्रत्ययेन हकारे विशेष्यमाणे यो दोषस्तं परिहरति। योऽयं हन्तेरवयवो हकारात् परोऽकारादिर्नकारान्तः, तेन सर्वत्र ञ्णित्प्रत्ययस्य व्यवधानम्। अननीयशब्देन तु व्यवधानं सम्भवति, न सम्भवति च 'तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति घातयतीत्यादौ कुत्वं भवति। येन त्वननीयशब्देन व्यवधानं न सम्भवति, सम्भवति च तेन व्यवधाने हननीयक इत्यत्र न भविष्यति। आद्ये तु पक्षे यो दोष उक्तः, स तस्यानभ्युपगमादेवानवसरः। हन्तेः श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः। तत्र हि 'अभ्यासाच्च' इति भवितव्यमेव कुत्वेन॥

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति । जिघांसति । जङ्घन्यते । अहं जघन ।

अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत् कुत्वम् । इह न भवति—हननीयितुमिच्छति जिहननीयिषति ॥

हेरचङि ॥ ५६ ॥

हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि । प्रजिघीषति । प्रजेघीयते । प्रजिघाय ।

पदमञ्जरी

*अभ्यासाच्च* ॥ *अहं जघनेति* । णित्त्वाभावे उदाहरणम् । णित्त्वपक्षे पूर्वेणैव सिद्धम् । एवं जघनिथ, जघन्थ, जघन्वानित्युदाहरणम् ।

*अभ्यासनिमित्ते प्रत्यय इत्यादि* । अङ्गाधिकारेणाभ्यासेन च प्रत्ययस्याक्षेपादयमर्थो लभ्यते । *जिहननीयिषतीति* । अत्र यस्मिन्हनिरङ्गं ल्युटि न तस्याभ्यासनिमित्तत्वम्, यश्चाभ्यासस्य निमित्तं सन् न तस्मिन् हन्तिरङ्गम् ॥

*हेरचङि* ॥ *प्राजीहयदिति* । ण्यन्ताल्लुङ्, चङ्, णिलोपः, उपधाह्रस्वत्वम्, 'चङि' इति द्विर्वचनम्, 'कुहोश्चुः' इति कुत्वम्, 'दीर्घो लघोः' इति दीर्घः ।

न्यासः

अभ्यासाच्च ॥ जिघांसतीति । सन्, 'अज्झनगमां सनि' इति दीर्घः, द्विर्वचनम्, 'कुहोश्चुः' इति चुत्वम्—झकारः, 'अभ्यासे चर्च' इति जश्त्वम्—जकारः, 'सन्यतः' इतीत्त्वम् । जङ्घन्यत इति । 'नुगतोऽनुनासिकान्तस्य' इति नुक् । जघनेति । उत्तमपुरुषे णलि यदा णित्त्वं नास्ति तदेतदुदाहरणम् । णित्त्वपक्षे तु पूर्वेणैव सिद्धम् । अथ हननशब्दात् क्यचि कृते तदन्तात् सनि जिहननीयिषतीत्यत्र कस्मान्न भवतीति, भवति ह्यत्राभ्यासात् परो हन्ति हकारः ? इत्याह—इहाभ्यासनिमित्तप्रत्यय इत्यादि । इह 'हन्तेः' इत्यनुवर्तते, अङ्गस्येति च । अभ्यासेनाभ्यासनिमित्तं प्रत्ययः सन्निधापितः, तस्य प्रत्ययः विशेषनिमित्तत्वात्, तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन हन्तेरङ्गं विशिष्यते । अभ्यासनिमित्ते प्रत्यये यदङ्गं हन्तिरिति । तेनाप्येवंविधेन हन्तिनाभ्यासो विशिष्यते । यथोक्तविशेषणविशिष्टस्य हन्तेरङ्गस्य योऽभ्यासः—इत्येवं विशेषणविशेष्यभावे सत्यभ्यासनिमित्ते सनादौ प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेव कुत्वेन भवितव्यम् । तेनेह न भवति—जिहननीयिषतीति । न ह्यत्राभ्यासनिमित्ते प्रत्यये सनि हन्तिरङ्गम्, किं तर्हि ? हननीयशब्दः । यस्मिंस्तु हन्तिरङ्गम्, ल्युटि स नाभ्यासनिमित्तम् ।

हेरचङि ॥ प्रजिघीषतीति । 'हि गतौ', सन्, पूर्ववद्दीर्घत्वम् । प्रजेघीयते इति 'अकृत्सार्वधातुकयोः' इति दीर्घः, द्विर्वचनम्, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । प्रजिघायेति । णल्, वृद्धयायादेशौ ।

अचङीति किम् ? प्राजीहयद् दूतम् ।

अचङीति शक्यमकर्त्तुम् । कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति विज्ञायमाने प्राप्तिरेव नास्ति ? तत्क्रियते[1] ज्ञापकार्थम् । एतज्ज्ञाप्यते—'हेरचङि' इति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धं भवति ॥

## सन्लिटोर्जेः ॥ ५७ ॥

सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति । जिगीसति । जिगाय । सन्लिटोरिति किम् ? जेजीयते ।

### पदमञ्जरी

'अचङि' इत्येतत्प्रत्याचष्टे—*अचङीति शक्यमकर्त्तुमिति* । कथम् ? इत्यत आह—*चङ्यभ्यासेति* । यथा पूर्वसूत्रे जिहननीयिषतीत्यत्र न भवति, एवं प्राजीहयदित्यत्रापि न भविष्यति, किमचङीत्यनेनेत्यर्थः । *तत्क्रियत* इत्यादिपरिहारः । किमेतस्य ज्ञापने प्रयोजनम् ? इत्यत आह—*तेनेति* ॥

*सन्लिटोर्जेः* ॥ 'ज्या वयोहानौ'—इत्यस्य किति ग्रहिज्यादिसूत्रेण सम्प्रसारणे

### न्यासः

प्राजीहयदिति । हेतुमण्णिच्, 'णिश्रि' इत्यादिना चङादेशः, 'णौ चङ्युपधायाः' इति ह्रस्वः, 'चङि' इति द्विर्वचनम् । तच्च 'णौ कृतं स्थानिवद्भवति' इति हिशब्दस्य 'दीर्घो लघोः' इति दीर्घः ।

चङ्यभ्यासनिमित्त इत्यादि । प्राजीहयदित्यत्र चङ्यभ्यासनिमित्ते परतो यो णिच् तस्मिन् हिनोतिरङ्गम्, न तु तस्मिन्नेव चङ्यभ्यासनिमित्ते; इह सूत्रेऽभ्यासाधिकारात् । अभ्यासेनाक्षिप्तेऽभ्यासनिमित्ते प्रत्यये यदङ्गं हिनोतिरित्येवं विज्ञायते, एवञ्च विज्ञायमाने कः प्रसङ्गो यो ण्यधिकस्य चङि स्यात् ? नैवं प्राप्नोतीत्यतो नार्थोऽचङीति प्रतिषेधेन । एवं प्रत्याख्याय चङ्ग्रहणम्, तस्य प्रयोजनमाह—तत् क्रियत इत्यादि । किं पुनरनेन ज्ञाप्यते ? इत्याह—हेरचङीत्यादि । 'हेरचङि' इत्यनेन चङोऽन्यत्र सनादौ ण्यधिकस्यापि हिनोतेः कुत्वं भवतीत्येषोऽर्थो ज्ञाप्यते । तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति । प्रजिघाययिषतीति । प्रहाययितुमिच्छतीति ण्यन्तात् सन् ॥

सन्लिटोर्जेः ॥ जिगीषति, जिगायेति । 'आदेः परस्य' इति परस्यादेर्जकारस्य कुत्वम्, 'ज्या वयोहानौ' इत्यस्य लिट् ।

1. 'तर्हि तत्'—इति मुद्रितः पाठः ।

जिनातेः सम्प्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात्तस्य ग्रहणं न भवति । जिज्यतुः, जिज्युः—इत्येव भवति ॥

**विभाषा चेः ॥ ५८ ॥**

चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति । चिचीषति, चिकीषति । चिकाय, चिचाय ।

'सन्लिटोः' इत्येव—चेचीयते ।

**न क्वादेः ॥ ५९ ॥**

कवर्गादिर्धातोश्चजोः कवर्गादेशो न भवति । कूजो वर्त्तते । खर्जः । गर्जः । कूज्यं भवता, खर्ज्यं गर्ज्यं भवता ॥

**पदमञ्जरी**

कृते पूर्वत्वे च जिरूपस्य भावाद् 'हलः' इति दीर्घत्वं बाधित्वा कुत्वं प्राप्नोति, कृतेऽपि वा दीर्घत्वे एकदेशविकृतस्यानन्यत्वात्कुत्वप्रसङ्गः, यथा—जिगीषतीत्यत्र, इत्यत आह—*जिनातेरित्यादि* । 'एरनेकाचः' इति यणादेशः ॥

*न क्वादेः ॥ कूज इत्यादि ।* 'कूज अव्यक्ते शब्दे', 'खर्ज व्यथने', 'गर्ज शब्दे' । अत्र वार्त्तिकम्—'क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' इति । अस्यार्थः—'चजोः कु घिण्ण्यतोर्निष्ठायामनिड्' इति सूत्रं कर्त्तव्यम्, तेनैव क्वाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वान्नार्थः प्रतिषेधवचनेनेति । नन्वेवं म्रुचुग्लुचुकुजुखुजूनां निष्ठायामनिट्त्वात्कुत्वं प्राप्नोति, तथा अजिसजि-

**न्यासः**

ग्रहिज्यादिसूत्रेण सम्प्रसारणे कृते परपूर्वत्वे च जिरित्येव रूपविशेषो भवति । अतस्तस्यापि कुत्वं प्राप्नोति, जिग्रहणेन ग्रहणात् । न च शक्यते वक्तुम् 'हलः' इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति, एकदेशविकृतस्यानन्यत्वात्; अन्यथा हि जिगीषतीत्यत्रापि 'अज्झनगमां सनि' इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति । अथ वा—प्रागेव दीर्घात् परत्वात् कुत्वेन भवितव्यमिति यश्चोदयेत्, तं प्रत्याह—जिनातेरित्यादि । लक्षणप्रतिपदोक्तपरिभाषया 'जि जये' इति यः पठ्यते, तस्यैवेदं प्रतिपदोक्तस्य ग्रहणम्, न जिनातेः । सम्प्रसारणे कृते यज्जीरूपं सम्पद्यते, तस्य लाक्षणिकत्वात् । जिज्यतुः, जिज्युरिति । लिट्, अतुस्, उस्, 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः ॥

विभाषा चेः ॥ न क्वादेः ॥ 'चजोः कु घिण्ण्यतोः' इति कुत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते । कूजः, खर्जः, गर्ज इति । 'कूज अव्यक्त शब्दे', 'खर्ज व्यथने', 'गर्ज शब्दे' ॥

## अजिव्रज्योश्च ॥ ६० ॥

अजि, व्रजि—इत्येतयोश्च कवर्गादेशो न भवति। समाजः। उदाजः। व्रजि—परिव्राजः। परिव्राज्यम्।

'अजेस्तु—'अजेर्व्यघञपोः' इति वीभावस्य विधानात् ण्यति नास्त्युदाहरणम् ॥

## भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥

भुज, न्युब्ज—इत्येतौ शब्दौ निपात्येते पाणौ, उपतापे च। भुज्यतेऽनेनेति भुजः=पाणिः। 'हलश्च' इति घञ्। तत्र कुत्वाभावः

### पदमञ्जरी

तर्जीनां निष्ठायां सेट्त्वात् कुत्वाप्रसङ्गः, यथा तु सूत्रं तथा विपर्ययः? उच्यते; 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वार्त्तिकानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्यौ। नन्वसत्यजेः प्रतिषेधे निवीत इति निष्ठायामनिट्त्वात् समाज इति कुत्वप्रसङ्गः? नैतदस्ति; व्यादेशो निष्ठायामनिट्, न त्वजिः, स तु वलाद्यार्धधातुके विकल्पेनेष्यते इति वीभावाभावपक्षे अजित इति सेडेव।

कथं शोकः, समुद्ग इति, यावता शुच्युब्जी निष्ठायां सेटौ? एवं तर्हि 'शुच्युब्ज्योर्घञि' इति वक्ष्यामि, तच्च यथान्यासेऽपि वक्तव्यम्—घञ्येव यथा स्याद् ण्यति मा भूदिति—अशोच्यानन्वशोच्यस्त्वमिति। तदेव वार्त्तिककारपक्षे विध्यर्थं भविष्यति ॥

*अजिव्रज्योश्च* ॥ *समाजः, उदाज इति*। पशुभ्योऽन्यत्र 'हलश्च' इति घञ्, पशुषु तु 'समुदोरजःपशुषु' इत्यब्भवति ॥

*भुजन्युब्जौ पाण्युपतापयोः* ॥ पाणिशब्देन तद्वान्बाहुर्लक्ष्यते, न तु मणिबन्धस्याधः पञ्चशाखाप्रदेश उच्यते। लोकेऽपि बाहुपर्यायो भुजशब्दः। *भुज्यते इति*।

### न्यासः

**अजिव्रज्योश्च** ॥ समाजः, उदाज इति। 'अज गतिक्षेपणयोः'। 'समुदोरजःपशुषु' इति घञ्। परिव्राजः, परिव्राज्यमिति। 'वज व्रज गतौ'।

अथाजेर्ण्यति कस्मादुदाहरणं नोपन्यस्तम्? इत्याह—वीभावस्येत्यादि। तत्र 'अजेर्व्यघञपोः' इति वीभावस्य विधानमिति तेन तस्योदाहरणं नोपपद्यते, ततो न दर्शितमित्यभिप्रायः। चकारोऽनुक्तसमुच्चयार्थः, तेन वजेरपि प्रतिषेधो भवति—वाजः, वाज्यमिति ॥

**भुजन्युब्जौ पाण्युपतापयोः** ॥ भुज इति। 'भुज पालनाभ्यवहारयोः', 'हलश्च' इति घञ्। अत्र 'अवे तस्त्रोर्घञ्' इत्यतो घञनुवर्त्तते। न्युब्ज इति। यदा दकारोपध इष्यते 'उद्ज आर्जवे' इति, तदा दकारस्य बकारो निपात्यते। अथ वा—'असिद्धेभ

गुणाभावश्च निपात्यते । 'उब्ज आर्जवे', न्युब्जिताः शेरतेऽस्मिन्निति न्युब्जः । उपतापः=रोगः, तथैव घञि कुत्वाभावो निपात्यते ।

पाण्युपतापयोरिति किम् ? भोगः, समुद्गः ॥

**प्रयाजानुयाजौ यज्ञाङ्गे ॥ ६२ ॥**

प्रयाज, अनुयाज--इत्येतौ निपात्येते यज्ञाङ्गे । पञ्च प्रयाजाः । पञ्चानुयाजाः । त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात् ।

यज्ञाङ्गे इति किम् ? प्रयागः । अनुयागः ।

प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्--अन्यत्राप्येवम्प्रकारे कुत्वं न

**पदमञ्जरी**

'भुज पालनाभ्यवहारयोः' । *न्युब्जिता इति* । अधोमुखाः, निश्चेष्टाः । वस्तुकथनं चैतत्, विग्रहस्तु न्युब्जन्त्यस्मिन्निति दर्शयितव्यः ।

न्युब्जोपतापग्रहणं शक्यमकर्त्तुम् । कथम् ? यस्मिन्व्याधौ न्युब्जिताः शेरते स तान् न्युब्जयति, तत्र ण्यन्तात्पचाद्यचि न्युब्ज इति सिद्धम्; न चात्र घञचोः स्वरे विशेषः, थाथादिसूत्रेण घञ्यण्यन्तोदात्तत्वविधानात् । भुजशब्दस्तु घञ्याद्युदात्तो भवति, इगुपधलक्षणे तु केऽन्तोदात्तः ।

*प्रयाजानुयाजौ यज्ञाङ्गे ॥ पञ्चानुयाजा इति* । दर्शपूर्णमासयोस्त्रयोऽनुयाजाः, चातुर्मास्येषु नव, पशुष्वेकादश, पञ्चत्वं न क्वापि दृष्टम् , तस्मात् *त्रयोऽनुयाजा* इति पाठः ।

*प्रदर्शनार्थमिति* । एतच्च यज्ञग्रहणाल्लभ्यते, उपात्तयोर्हि यज्ञाङ्गविषयत्वं निपातनादेव सिद्धम्, उपांशुयागस्य ऋतुयाजानां च यज्ञसमुदायं प्रत्यवयवत्वाद् यज्ञाङ्गत्वम् । प्रधानयागा ह्येते; इतरेषां तु फलवत्सन्निधावफलं तदङ्गमित्यङ्गत्वम् ॥

**न्यासः**

उद्जेः[1] इत्यनयेष्टया दकारस्य भकारे कृते जश्त्वेन बकारो भवति । यदा तु बकारोपधः 'उब्ज आर्जवे' इति, तदा समुद्ग इत्यत्र बकारस्य दकारो वक्तव्यः ॥

प्रयाजानुयाजौ यज्ञाङ्गे ॥ प्रयाजः, अनुयाज इति । प्रपूर्वादनुपूर्वाच्च यजेः 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ्, तस्मिन्नकुत्वं निपात्यते ।

प्रदर्शनार्थमिति । अन्यस्याप्येवम्प्रकारस्योपलक्षणमित्यर्थः । तेनान्यत्रापि प्रयाजानुयाजप्रकारे यज्ञाङ्गे कुत्वं न भवति । प्रदर्शनार्थता पुनः प्रयाजानुयाजशब्दयोर्यज्ञाङ्गग्रहणाद् वेदितव्या, तद्धयेवमर्थं क्रियते । कथं नाम प्रयाजानुयाजग्रहणस्योपलक्ष-

1. पञ्चम( हयवरट् )प्रत्याहारसूत्रस्थं भाष्यवचनमिदम् ।

भवति । एकादशोपयाजाः, उपांशुयाजमन्तरा यजति, अष्टौ पत्नीसंयाजा भवन्ति, ऋतुयाजैश्चरन्ति—इत्येवमादि सिद्धं भवति ॥

वञ्चेर्गतौ ॥ ६३ ॥

वञ्चेरङ्गस्य गतौ वर्त्तमानस्य कवर्गादेशो न भवति । वञ्च्यं वञ्चन्ति वणिजः ।

गताविति किम् ? वङ्कं[1] काष्ठम् । कुटिलमित्यर्थः ॥

ओक उचः के ॥ ६४ ॥

उचेर्धातोः के प्रत्यये 'ओकः' इति निपात्यते । किं पुनरत्र निपात्यते ? कुत्वम्, गुणश्च । न्योकः शकुन्तः । न्योको गृहम्[2] ।

कर्त्तरि इगुपधलक्षणः कः प्रत्ययः । अधिकरणादौ तु कारकान्तरे 'घञर्थे कविधानम्' इति ।

किमर्थं पुनरयं घञ्येव न व्युत्पाद्यते ? स्वरार्थमन्तोदात्तोऽय-

पदमञ्जरी

*वञ्चेर्गतौ* ॥ *वञ्च्यं वञ्चन्तीति* । गन्तव्यं गच्छन्तीत्यर्थः । *वङ्कमिति* । गुणशब्दोऽयम्भावे घञ्, अभेदोपचाराद् गुणिनि वृत्तिः ॥

*ओक उचः के* ॥ 'उच समवाये' । *न्योकः शकुन्त इति* । न्युचति समवैति नीडादाविति कृत्वा । *न्योको गृहमिति* । न्युचन्ति समवयन्ति वसन्ति तस्मिन् इति कृत्वा ।

न्यासः

णार्थता प्रतीयेत ! अन्यथा हि निपातनसामर्थ्यादेव यज्ञाङ्गविषयता विज्ञायत इति तन्न कर्त्तव्यमेव स्यात् ॥

**वञ्चेर्गतौ** ॥ **वङ्कमिति** । 'वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु म्लुन्चु म्रुचु म्लुचु गत्यर्थाः' । कर्मणि घञ् । वञ्च्यं वञ्चन्ति गन्तव्यं गच्छन्तीत्यर्थः । **वङ्कमिति** । 'हलश्च' इति घञ् ॥

**ओक उचः के** ॥ **न्योक इति** । निपूर्वात् 'उच समवाये' इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः'—न्युचतीति न्योकः, निवसतीत्यर्थः । न्युचन्त्यस्मिन्निति 'घञर्थे कविधानम्' इति वा कः—न्योकः, निवसन्त्यस्मिन्नित्यर्थः ।

**किमर्थं पुनरित्यादि** । एवं मन्यते—रूढिशब्दोऽयम्, नात्र कश्चिदवयवार्थोऽस्ति, व्युत्पत्तिः केवलं कर्त्तव्या, सा च 'हलश्च' इति घञ्यपि कृते भवत्येव, ततो नार्थोऽनेन

---

१. 'वङ्क्यम्' इति मुद्रितः पाठः ।　　२. 'वृक्षः' इति मुद्रितः पाठः ।

मिष्यते, घञि सत्याद्युदात्तः स्यात् ।

दिवौकसः, जलौकसः—इत्येवमादावप्यसुनि प्रत्यये 'उणादयो बहुलम्' इति कुत्वं द्रष्टव्यम् ॥

**ण्य आवश्यके ॥ ६५ ॥**

ण्ये परतः आवश्यकेऽर्थे कवर्गो न भवति । अवश्यपाच्यम् । अवश्यवाच्यम् । अवश्यरेच्यम् ।

आवश्यके इति किम् ? पाक्यम् । वाक्यम् । रेक्यम् ॥

**यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥**

यज, याच, रुच, प्रवच, ऋच—इत्येतेषां ण्ये परतः कवर्गादेशो न भवति । यज—याज्यम् । याच—याच्यम् । रुच—रोच्यम् । प्रवच–प्रवाच्यम् । ऋच–अर्च्यम् । ऋदुपधादपि ऋचेरत एव निपातनाद् ण्यद्भवति ।

पदमञ्जरी

*असुनि प्रत्यय इति* । अयमेव लोके साधीयः प्रयुज्यते ॥

*ण्य आवश्यके* ॥ उदाहरणेषु 'आवश्यकाधमर्ण्ययोर्णिनिः', 'कृत्याश्च' इति ण्यत्, मयूरव्यंसकादित्वात् समासः, 'लुम्पेदवश्यमः कृत्ये' इति मलोपः ॥

*यजयाचरुचप्रवचर्चश्च* ॥ *अर्च्यमिति* । 'ऋच स्तुतौ' । *प्रवाच्यो नामेति* । प्रकर्षेणोच्यत इति प्रवाच्यः=पाठविशेषोपलक्षितो ग्रन्थविशेषः । *अपरे पुनरिति* । ते मन्यन्ते-प्रपूर्वो वचिरशब्दसंज्ञायामेव वर्त्तते, तत्र विधेयासम्भवान्नियम इति ।

न्यासः

योगेनेति । घञि सत्याद्युदात्तः स्यादिति । 'ञ्नित्यादेर्नित्यम्' इत्यनेन ।

अथ दिवौकसः, जलौकस इत्यादौ कथं कुत्वम्, यावता नात्र कप्रत्ययोऽस्ति, नापि घिण्ण्यतौ, किं तर्हि ? असुन्निति ? अत आह–दिवौकस इत्यादि । गतार्थम् ।

**ण्य आवश्यके** ॥ अवश्यपाच्यमित्यादि । 'डुपचष् पाके', 'वच परिभाषणे', 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यनुवृत्तौ 'कृत्याश्च' इत्यावश्यके ण्यत् । मयूरव्यंसकादित्वात् समासः, 'लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि' इत्यनयेष्ट्याऽवश्यमो मकारलोपः ॥

**यजयाचरुचप्रवचर्चश्च** ॥ 'ण्ये' इत्येव । अनावश्यकार्थमिदम् । याज्यमित्यादि । 'यज देवपूजादौ', 'टुयाचृ याच्ञायाम्', 'रुच दीप्तौ', 'वच परिभाषणे' प्रपूर्वः, 'ऋच स्तुतौ' । कथं पुनर्ऋचेर्ण्यत्, यावता 'ऋदुपधाच्चाक्लृपि चृतेः' इति ण्यदपवादेन क्यपा भवितव्यम् ? इत्याह— ऋदुपधादित्यादि ।

प्रवचग्रहणं शब्दसंज्ञार्थम् । प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति ।

अपरे पुनराहुः--उपसर्गपूर्वस्य नियमार्थम्---प्रपूर्वस्यैव वचेर-शब्दसंज्ञायां कुत्वप्रतिषेधो यथा स्यात्, अन्योपसर्गपूर्वस्य मा भूदिति । 'अविवाक्यमहः' इति पठन्ति, एतत्तु विशेष एवेष्यते--दशरात्रस्य यद् दशममहः । अन्यत्राविवाच्यमेव भवति ।

❀ ण्यति प्रतिषेधे त्यजेरुपसंख्यानम् ❀ । त्याज्यम् ॥

वचोऽशब्दसंज्ञायाम् ॥ ६७ ॥

पदमञ्जरी

*एतच्चेति* । अविवाक्यमित्येतावच्छब्दरूपम् । कः पुनरसौ विशेषः ? इत्यत आह—*दशरात्रस्येति* । द्वादशाहेऽभितो द्विरात्रो मध्ये दशरात्रः, तस्य दशममहः= अविवाक्यम् । *अन्यत्रेति* । तथा च नास्मिन्नहनि केनचित् कस्यचिद्विवाच्यम्, अविवाक्यमित्येतदाचक्षते । संशये बहिर्वेदिस्वाध्यायप्रयोगोऽन्तर्वेदीत्येके इत्यह-र्विशेषे कुत्वम्, अन्यत्र तदभावः प्रयुक्त *आश्वलायनेन* । एवमन्योपसर्गपूर्वस्यापि प्रतिषेध एवेष्यते, न नियमः ।

एवञ्च कृत्वा प्रवचिग्रहणं शक्यमकर्त्तुम्; अहर्विशेषे पृषोदरादित्वात्कुत्वम्, अन्यत्र प्रतिषेध इति सिद्धमिष्टम्; अन्यथा नियमे हि बहु प्रतिविधेयं स्यात् ॥

न्यासः

अथ प्रवचिग्रहणं किमर्थम्, यावता 'वचोऽशब्दसंज्ञायाम्' इत्यनेनैव प्रतिषेधो भविष्यति ? इत्याह–प्रवचिग्रहणं शब्दसंज्ञार्थमिति । स्यादेतत् । नास्त्येत्र कश्चिच्छब्दो यस्य प्रवाच्यमिति नामधेयम् ? इत्याह—प्रवाच्यो नामेत्यादि ।

अपरे पुनरित्यादिना मतान्तरं दर्शयति—एतत्त्विति । अविवाक्यमेतद्रूपम् । कः पुनरसौ विशेषः ? इत्याह—दशरात्रस्येत्यादि । यस्मिन् याज्ञिका न विब्रुवते, तस्य दशरात्रस्य यद्दशममहस्तत्रैवैतच्छब्दरूपमिष्यते, नान्यत्र । यद्येवम्, अनर्थकं नियमार्थं प्रवचिग्रहणम्, अवश्यं तस्य विशिष्टविषये वृत्तिर्यथा स्यादित्येवमर्थो यत्नः कर्त्तव्यः, तत एव यत्नात् तत्र कुत्वमपि भविष्यति ? नैतदस्ति; नियमाद्धयन्योपसर्गस्य कुत्व-प्रतिषेधो निवर्त्तते । अभिधेयव्यवस्था तु प्रसिद्धिवशादेव विज्ञास्यते ।

ण्यति प्रतिषेध इत्यादि । ण्यति प्रतिषेधेऽस्मिन् क्रियमाणे 'त्यज हानौ' इत्यस्योप-संख्यानं कर्त्तव्यम् । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—चकारोऽनुक्तसमुच्चयार्थः, तेन त्यजेरपि प्रतिषेधो भविष्यतीति ॥

वचोऽशब्दसंज्ञायां ण्यति परतः कवर्गो न भवति । वाच्यमाह । अवाच्यमाह ।

अशब्दसंज्ञायामिति किम् ? अवघुषितं वाक्यमाह ॥

**प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥**

प्रयोज्य, नियोज्य——इत्येतौ शब्दौ शक्यार्थे निपात्येते । शक्यः प्रयोक्तुं प्रयोज्यः । शक्यो नियोक्तुं नियोज्यः ।

शक्यार्थं इति किम् ? प्रयोग्यः, नियोग्यः ॥

**भोज्यं भक्ष्ये ॥ ६९ ॥**

भोज्यं निपात्यते भक्ष्येऽभिधेये । भोज्य ओदनः । भोज्या यवागूः । इह भक्ष्यमभ्यवहार्यमात्रम् ।

पदमञ्जरी

*प्रयोज्यनियोज्यौ शक्यार्थे* ॥ इह 'प्रयुजनियुजः शक्यार्थे' इति वक्तव्यम्, 'ण्ये' इत्येव, एवं सिद्धे निपातनाश्रयणं रूढ्यर्थम्—गुणभूत एवैतयोः प्रयोगो यथा स्यात्—प्रयोज्यो भृत्यः, नियोज्यो दास इति । स्वामिनि प्रयोज्यनियोज्यशब्दौ न भवतः ॥

*भोज्यं भक्ष्ये* ॥ *भोज्या यवागूरिति* । ननु भक्षिरयं खरविशदेऽभ्यवहार्ये वर्तत इति 'संस्कृतं भक्षाः' इत्यत्रोक्तम्, तत्कथं द्रवद्रव्ये भवति ? इत्यत आह—*इहेति* । एवं मन्यते——नात्र भक्षिः खरविशद एव वर्त्तते; अब्भक्षः, वायुभक्ष

न्यासः

वचोऽशब्दसंज्ञायाम् ॥ प्रयोज्यनियोज्यौ शक्यार्थे ॥ प्रपूर्वस्य निपूर्वस्य च 'युजिर् योगे' इत्यस्य ण्यति कुत्वाभावो निपात्यते, स चेण्ण्यच्छक्यार्थे भवति । शक्यार्थे पुनर्ण्यत् 'शकि लिङ् च' इत्यनेन वेदितव्यः । तत्र हि 'कृत्याश्च' इत्यनुवर्त्तते । अथ किमर्थं पुनर्निपातनम्, यावता 'ण्ये' इत्यनुवर्त्तत एव ? तत्र 'प्रयुजनियुजोः शक्यार्थे' इति वक्तव्ये निपातनं रूढ्यर्थम् । अगुणभूता यत्र शक्यार्थता तत्र यथा स्यात्—प्रयोज्यो भृत्यः, नियोज्यो दास इति । स्वामिनि प्रयोज्यो नियोज्य इति न भवति । न हि तत्र प्रयोज्यनियोज्यशब्दौ रूढौ, किं तर्हि ? गुणभूतावेव ।

भोज्यं भक्ष्ये ॥ भोज्यमिति । 'भुज पालनाभ्यवहारयोः' इत्यस्य ण्यति भक्ष्येऽभिधेये कुत्वाभावो निपात्यते । भोज्या यवागूरिति । ननु च भक्षिरयं खरविशदेऽभ्यवहार्ये वर्त्तते, न तु द्रवद्रव्ये, यथा—'संस्कृतं भक्षाः' इत्यत्र, तत् कथम् 'भक्ष्ये' इत्युच्यमाने यवाग्वां भवति ? इत्याह—इह भक्ष्यमित्यादि । नावश्यं भक्षिः खरविशदे वर्त्तते ।

भक्ष्य इति किम् ? भोग्यः कम्बलः ॥

## घोर्लोपो लेटि वा ॥ ७० ॥

घुसंज्ञकानां लेटि परतो वा लोपो भवति । [1]दधद्रत्नानि दाशुषे । सोमो ददद् गन्धर्वाय । न च भवति—यदग्निरग्नये ददात् ।

आडागमे सति लोपेऽपि ददादिति सिद्धं भवति । तत्र वावचनं विस्पष्टार्थम् । एषा हि कस्यचिदाशङ्का स्याद्--ददादित्येव नित्ये

पदमञ्जरी

इत्यत्रापि दर्शनादिति शब्दान्तरसन्निधिबलादेतदेवं भवति । 'स्वभावतस्तु भक्षिः खरविशद एव वर्त्तते' इति *वार्तिककारस्य* पक्षः, यदाह–'भोज्यमभ्यवहार्ये इति वक्तव्यम्' इति ॥

*घोर्लोपो लेटि वा* ॥ *दधदिति* । दधातेर्लेट्, तिप् 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः । दाशुषे यजमानाय रत्नानि, दद्यादित्यर्थः । अन्ये त्वाहुः—दधदिति शत्रन्तमेतत्, ददिति दाञो रूपम् ।

वावचनं प्रत्याचिख्यासुराह—*आडागमे सतीति* । अस्त्वत्र लोपः; आटः श्रवणं भविष्यतीत्यर्थः ।

किमर्थं तर्हि वावचनम् ? इत्यत आह--*तत्रेति* । किमत्र विस्पष्टनीयम् ? अत आह—*एषा हीति* । अन्ये त्वाहुः-ज्ञापकार्थं वाग्रहणम्, एतज्ज्ञापयति—

न्यासः

तथा हि—द्रवद्रव्येऽप्यस्य प्रयोगो दृश्यते । यथा—अब्भक्षः, वायुभक्ष इति । तस्मादभ्यवहार्यसामान्ये भक्षिर्वर्तत इति यवाग्वामपि भवति । 'भुजो भक्ष्ये' इति वक्तव्ये निपातनं रूढ्यर्थम् । अभ्यवहार्ये भक्ष्ये कर्मणि यथा स्यात्, परिपालनीये मा भूत्—भोग्या अपूपाः । पालनीया इत्यर्थः ।

घोर्लोपो लेटि वा ॥ ददन्निति 'डुदाञ् दाने', लिङर्थे लेट्, झेरन्तादेशः, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः, 'लेटोऽडाटौ' इत्यट्, शप्, तस्य जुहोत्यादित्वात्श्लुः, 'श्लौ' इति द्विर्वचनम्, संयोगान्तलोपः, 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति ङमुडागमः । सोमो ददद् गन्धर्वायेति । ददातेस्तिप्, शेषं पूर्ववत् । यदग्निरग्नये ददादिति । ददा + आदिति स्थितेऽकः सवर्णे दीर्घत्वम्, शेषं पूर्ववत् ।

यद्याडागमे कृते सत्यपि लोपे च ददादिति सिध्यति, किमर्थं तर्हि वेत्युच्यते ? इत्याह—तत्रेत्यादि । स्यादेतत्—विस्पष्टार्थं तर्हि वाग्रहणमयुक्तम्; ददादित्यस्य रूपस्यासिद्धि प्रत्याशङ्काया अभावात् ? इत्यत आह—एषा हीत्यादि । सुबोधम् ॥

---

१. 'दधद्' इति सर्वसम्मतः पाठः; न्यासश्च भाष्यविसंवादाच्चिन्त्यः, ङमुट्प्रयोगस्तु चिन्त्यतमः ।





प्राप्ते लोपे आरभ्यमाणो बाधत एवैतद्रूपमिति ॥

## ओतः श्यनि ॥ ७१ ॥

ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति । शो--निश्यति । छो--अवच्छयति । दो--अवद्यति । सो--अवस्यति ॥

## क्सस्याचि ॥ ७२ ॥

क्सस्याजादौ प्रत्यये लोपो भवति । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि ।

### पदमञ्जरी

अनित्यमागमशासनमिति । अनित्यत्वे त्वाट्यसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं कर्त्तव्यमिति ॥

*ओतः श्यनि ॥ श्यतीत्यादि ।* 'शो तनूकरणे', 'छो छेदने,' 'दो अवखण्डने,' 'षो अन्तकर्मणि' ।

इह 'ओतः शिति' इति वक्तव्यम्, न च ओकारान्तानां श्यनोऽन्यः शित् सम्भवति, अर्धमात्रया च लाघवं भवति; तत्रायमप्यर्थः--'ष्ठिवुक्लमुचमां शिति' इति शिद्ग्रहणं न कर्त्तव्यं भवति, इदमेवानुवर्तिष्यते । ननु श्यन्ग्रहणमुत्तरार्थं कर्त्तव्यम्--'शमामष्टानाम्' इति ? तत्राप्यस्तु शितीत्येव; यदि शितीत्युच्यते, भ्रमे 'वा भ्राश' इति पक्षे शब् भ्रमति--अत्रापि प्राप्नोति ? शमादिभिः शितं विशेषयिष्यामः--शमादिभ्यो यो विहितः शिदिति, श्यन्नेव च सर्वेभ्यः शमादिभ्यो विहितः, एवमपि शिद्विशेषणत्वेन शमादीनामुपयोगात्कार्यनिर्देशाभावात् नश्यतीत्यादावपि प्रसङ्गः ? नैष दोषः; 'अष्टानाम्' इत्यनेन संख्येयाः कार्यिणो निर्दिश्यन्ते, ते च सन्निधानात् शमादय एव विज्ञास्यन्ते ॥

*क्सस्याचि ॥ अधुक्षातामिति ।* दुहेः स्वरितेत्त्वेनात्मनेपदम्, आताम्, अत्रा-

### न्यासः

**ओतः श्यनि ॥** निश्यतीत्यादि । 'शो तनूकरणे', 'दो अवखण्डने', 'षो अन्तकर्मणि' । अथ किमर्थं श्यनीत्युच्यते, न 'शिति' इत्येवोच्येत, एवं ह्युच्यमाने श्यन्येव लोपो भविष्यति, न ह्योकारान्ताच्छ्यनोऽन्यच्छित् सम्भवति, लघु चैवं सूत्रं भवति, तत्रायमप्यर्थः--'ष्ठिवुक्लमुचमां शिति' इत्यत्र शिद्ग्रहणं न कर्त्तव्यं भवतीत्येतदेव तत्रानुवर्तिष्यते ? सत्यं सिद्ध्यत्येव, किन्तु प्रतिपत्तिगौरवं स्यात् । तस्मात् प्रतिपत्तिगौरवपरीहारार्थं श्यनीत्युक्तम् ।

'ओतः' इति तपरकरणं मुखसुखार्थम् । न ह्यन्यदस्य निवर्त्त्यं विधेयं वा सम्भवति ॥

**क्सस्याचि ॥** अधुक्षाताम्, अधुक्षाथामिति । दुहेर्लुङ्, च्लिः, 'स्वरितञितः'

अचीति किम् ? अधुक्षत् । अधुक्षताम् । ककारवत उपादानं किम् ? इह मा भूत्—उत्सौ, उत्साः । वत्सौ, वत्साः ॥

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

दुह, दिह, लिह, गुह—इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवति । अदुग्ध, अधुक्षत । अदुग्धाः, अधुक्षथाः । अदुग्ध्वम्, अधुक्षध्वम् । अदुह्वहि, अधुक्षावहि । दिह—अदिग्ध, अधिक्षत । लिह—अलीढ, अलिक्षत । गुह—न्यगूढ, न्यघुक्षत ।

दुहादीनामिति किम् ? व्यत्यपुक्षत[1] ।

पदमञ्जरी

सति लोपे 'आतो ङितः' इति इयादेशः प्राप्नोति । *अधुक्षीति* । इटि लोपः ।

ककारवतः सशब्दस्य ग्रहणादिह न भवति—वत्सौ; 'तृणादिभ्यः सः'; तृणसौ, तृणसः ॥

*लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये* ॥ *एतेषामङ्गानां क्सस्येति* । एतेषां सम्बन्धी यो निमित्तत्वेन क्सः, तस्येत्यर्थः ।

न्यासः

इत्यात्मनेपदम्, आतामाथाम्, 'शल इगुपधादनिटः क्सः' इति क्सादेशश्च्लेः, तस्यानेन 'अलोऽन्त्यस्य' लोपः, 'दादेर्धातोर्घः' इति हकारस्य घकारः, 'एकाचो बशो भष्' इत्यादिना भष्—धकारः, 'खरि च' इति चर्त्वम्—घकारस्य ककारः, 'इण्कोः' इति षत्वम् । अधुक्षीति । उत्तमपुरुषैकवचनमिट् । अधुक्षदिति । तिप्, 'इतश्च' इतीकारलोपः । अधुक्षतामिति । 'तस्थस्थमिपाम्' इत्यादिना तसस्ताम् । ककारवत उपादानम्, इह मा भूत्—हंसौ हंसाः, वत्सौ वत्सा इति ॥

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ 'दुह प्रपूरणे', दिह उपचये', 'लिह आस्वादने', 'गुहू संवरणे'—सर्व एते स्वरितेतः । स्वरितेत्त्वात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यात्मनेपदिनः । अदुग्धेति । पूर्ववद् घकारः, 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, 'झलां जश् झशि' इति घकारस्य गकारः । अदुग्धामिति । थास, पूर्ववद् घत्वादि । अधुग्ध्वमिति । ध्वम् । अदुह्वहीति । वहिः । अदिग्धेति । पूर्ववद् घत्वादि । अलीढेति । हकारस्य 'हो ढः' इति ढकारः पूर्ववत्, तकारस्य धत्वं ष्टुत्वञ्च, 'ढो ढे लोपः', 'ढ्रलोपः पूर्वस्य' इत्यादिना दीर्घः । न्यगूढेति । एतदपि पूर्वेण तुल्यम् ।

व्यत्यपुक्षतेति । 'पुष पुष्टौ' व्यतिपूर्वः । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्, 'षढोः कः सि' इति षकारस्य ककारः ।

---

1. व्यत्यरुक्षत' इति मुद्रितः पाठः ।

आत्मनेपदे इति किम्? अधुक्षत् । दन्त्ये इति किम्? अधुक्षामहि ।

लोप इति वर्त्तमाने लुग्ग्रहणं सर्वादेशार्थम्, तच्च वह्यर्थम् । अन्यत्र त्वन्त्यस्यैव लोपे कृते 'झलो झलि' इति सकारलोपेन सिद्ध्यति । स्थानिवद्भावोऽपि अकारलोपस्य नास्ति; 'पूर्वत्रासिद्धे न स्थानिवत्' इति ।

दन्त्योष्ठ्योऽपि वकारो दन्त्य इति गृह्यते । यदि स न गृह्येत,

पदमञ्जरी

*सर्वादेशार्थमिति* । लुक्सर्वापहारीति संज्ञाविधावुक्तम् । *वह्यर्थमिति* । उत्तमपुरुषद्विवचनार्थमित्यर्थः । अथान्यार्थं कस्मान्न भवति? तत्राह—*अन्यत्रेति* । *अलोऽन्त्यस्येति* । 'आदेः परस्य' इत्येतत्तु न भवति; पञ्चमीनिर्देशाभावात् । *झलो झलीति लोपेनेति* । 'धि सकारे सिचो लोपः' इति नाश्रीयते । चल्यादेशोपलक्षणं वा तत्र सिज्ग्रहणमिति भावः । *अकारस्येति* । अकारलोपस्येत्यर्थः । तथैव वा पाठः ।

ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव, अदन्तत्वात्, दन्त्यौष्ठ्यो ह्यसौ? अत आह—*दन्त्योष्ठ्योऽपीत्यादि* । दन्तान्वयोऽत्र विवक्षितः,

न्यासः

अधुक्षामहीति । महिङ् ।

अथ लुग्ग्रहणं किमर्थम्, यावता लोप इत्यनुवर्तत एव? इत्याह—लोप इति वर्त्तमान इत्यादि । यदि लोपग्रहणमनुवर्त्त्य लोपो विधीयते तद् 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात् । लुकि तु सर्वस्यैव भवति, प्रत्ययादर्शनस्य लुक्संज्ञाविधानात् । तस्मात् सर्वस्य क्सस्य लोपो यथा स्यादित्येवमर्थं लुग्ग्रहणं कृतम् । वह्यर्थमिति । उत्तमपुरुषद्विवचनार्थमित्यर्थः । वहिरर्थः प्रयोजनं यस्य तत् तथोक्तम् । अथान्यार्थं कस्मान्न भवति? इत्याह—अन्यत्र त्वित्यादि । यदात्मनेपदं दन्त्यादि तत् सर्वं झलाद्येव । तत्रान्त्यस्यैवाकारस्य लोपे कृते 'झलो झलि' इति सकारस्य लोपेनेष्टं सिध्यत्येव । स्यादेतत्—अन्यत्रापि लुका विना न सिध्यति, अकारलोपस्य सकारलोपे कर्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावादिति? अत आह—स्थानिवद्भावोऽप्यकारलोपस्य नास्तीति । कस्मान्नास्ति? इत्याह—पूर्वत्रासिद्धे न स्थानिवदिति । तस्मान्नान्यार्थं लुग्ग्रहणम्, अपि तु वह्यर्थमेव । अत्र ह्यझलादित्वात् 'झलो झलि' इति सकारलोपो नास्तीति न सिध्यति ।

ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव, अदन्त्यादित्वात्, न हि दन्त्योष्ठ्यो वकारो दन्त्यग्रहणेन गृह्यते? इत्याह—दन्त्योष्ठ्योऽपीत्यादि । अत्रैव हेतुमाह—यदीत्यादि । यदि दन्त्योष्ठ्यो वकारो दन्त्यग्रहणेन न गृह्येत, तदा तावित्येवं ब्रूयात्, न दन्त्य इति । तावप्युच्यमाने सर्वमिष्टं सिध्यत्येव । न हि तवर्गादन्यद्

ततस्तौग्रहणमेवात्र कृतं स्यात् ॥

**शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥**

शमादीमष्टानां दीर्घो भवति श्यनि परतः। शम्—शाम्यति। तम्—ताम्यति। दम्—दाम्यति। श्रम्—श्राम्यति। क्षम्—क्षाम्यति। क्लम्—क्लाम्यति। मदी—माद्यति।

अष्टानामिति किम्? अस्यति। श्यनीति किम्? भ्रमति। 'वा भ्राश' इति श्यनो विकल्पः। बभ्राम ॥

**छिवुक्लम्याचमां शिति ॥ ७५ ॥**

**पदमञ्जरी**

नेतरव्यावृत्तिरिति भावः। एवं न्यायसिद्धेऽप्यर्थे वचनसामर्थ्यमपि दर्शयति—*यदि चेति। ताविति।* तवर्गादावित्यर्थः। वहेरन्यानि हि दन्त्यादीनि सर्वाण्यात्मनेपदानि तवर्गादीनि ॥

*शमामष्टानां दीर्घः श्यनि ॥*

शमुस्तमुः श्रमुदमू भ्रमुक्षमुमदक्लमः।
शमादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥

**न्यासः**

दन्त्यमात्मनेपदस्यास्ति। तस्माद् दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते। तत्रेदं चोद्यते—"यदुक्तम्—अन्यत्र ह्यन्त्यस्यैव लोपे कृते 'झलो झलि' इति सकारलोपेनेष्टं सिद्ध्यत्येवेति, तदयुक्तम्; न हि 'झलो झलि' इत्यनेन सकारमात्रस्य लोपो विधीयते, किं तर्हि? सिचः, तथा हि तत्रैवं वक्ष्यति—अयमपि सिच एव लोपः" इति? नैतदस्ति; सिज्ग्रहणस्य च्ल्यादेशस्योपलक्षणार्थत्वाच्च्लेर्य आदेशस्तत्सम्बन्धिन एव सकारस्य लोपो भवतीत्ययं तत्रार्थो वेदितव्यः ॥

शमामष्टानां दीर्घः श्यनि ॥ बहुवचननिर्देशादष्टग्रहणाच्चाद्यर्थो गम्यत इत्याह—शमादीनामित्यादि। 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', 'श्रमु तपसि खेदे च', 'क्षमु सहने', 'भ्रमु अनवस्थाने', 'क्लमु ग्लानौ', 'मदी हर्षे'—इत्येतेऽष्टौ शमादयः।

अस्यतीति। 'असु क्षेपणे'। अष्टाभ्यः परेणायं पठ्यते। भ्रमतीति। 'वा भ्राश' इत्यादिना श्यन् यस्मिन् पक्षे नास्ति तत्रेदं प्रत्युदाहरणम्।

श्यन्ग्रहणं स्पष्टार्थम्। शक्यते हि 'ओतः श्यनि' इति यत् प्रकृतं श्यन्ग्रहणं तल्लुग्ग्रहणेन व्यवहितमपि मण्डूकप्लुतिन्यायेनेहानुवर्त्तयितुम् ॥

ष्ठिवु, क्लमि, आचम्—इत्येतेषां दीर्घो भवति शिति परतः। ष्ठीवति। क्लमु—क्लामति। आचामति।

क्लमिग्रहणं शबर्थम्।

चमेराङ्पूर्वस्य ग्रहणम्, इह मा भूत्—चमति, विचमति॥

**क्रमः परस्मैपदेषु॥ ७६॥**

क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति। क्रामति, क्रामतः, क्रामन्ति।

परस्मैपदेष्विति किम्? आक्रमते आदित्यः।

इह उत्क्राम, संक्राम—इति हेर्लुकि कृते 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधाद्दीर्घो न प्राप्नोति? नैष दोषः; लुमता शब्देन

**पदमञ्जरी**

*ष्ठिवुक्लम्याचमां शिति॥ क्रामतीति।* 'वा भ्राश' इत्यादिना शप्।

*क्लमिग्रहणं शबर्थमिति।* श्यनि पूर्वेणैव सिद्धत्वात्। शमादिषु पाठश्चिन्त्यप्रयोजनः; श्यन्यप्यनेनैव सिद्धत्वात्।

तत्र सप्तग्रहणमेवास्तु, चमेराङ्पूर्वस्य ग्रहणं तन्त्रम्, न तूपेयिवानित्यादिवदविवक्षितम्? इत्याह—*चमेराङिति।* 'दीर्घत्वमाङि चमः' इति वार्त्तिकस्याप्ययमेवार्थः॥

*क्रमः परस्मैपदेषु॥ इहेत्यादि।* चोद्यम्। *हेर्लुकि कृत इति।* 'अतो हेः' इत्यनेन। नैष दोष इत्यादि परिहारः। 'न लुमताङ्गस्य' इत्यत्र हि प्रत्यासत्ते-

**न्यासः**

ष्ठिवुक्लम्याचमां शिति॥ 'ष्ठिवु निरसने', 'क्लमु ग्लानौ', 'चमु छमु जमु झमु अदने' आङ्पूर्वः। क्लामतीति। 'वा भ्राश' इत्यादिना श्यनोऽभावे शप्। क्लमिग्रहणं शबर्थम्। न तु श्यनर्थम्, तत्र पूर्वेणैव सिद्धत्वात्।

चमेराङ्पूर्वस्येत्यादिना केवलस्यान्योपसर्गपूर्वस्य वा मा भूदित्येवमर्थं चमेराङ्पूर्वस्य ग्रहणमिति दर्शयति॥

क्रमः परस्मैपदेषु॥ क्रामतीति। 'क्रमु पादविक्षेपे'। आक्रमत इति। आङ्पूर्वः। 'आङ उद्गमने' इत्यात्मनेपदम्।

इहोत्क्राम संक्रामेत्यादिना चोद्यम्। उत्पूर्वात् सम्पूर्वाच्च क्रमेर्लोट्, 'सेर्ह्यपिच्च' इति हिरादेशः, तस्य 'अतो हेः' इति हेर्लुकि कृते 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद् उत्क्राम, संक्रामेत्यत्र दीर्घत्वं न प्राप्नोति; न ह्यसति प्रत्ययलक्षणे हौ लुप्ते क्रमः परस्मैपदपरता सम्भवति। नैष दोष इत्यादि परीहारः। स्यादेतत्—लुमता लुप्ते क्रमः प्रत्यये

लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः। न च हौ क्रमिरङ्गम्, किं तर्हि ? शपि ॥

**इषुगमियमां छः ॥ ७७ ॥**

इषु, गमि, यम—इत्येतेषां शिति परतश्छकारादेशो भवति। इच्छति। गच्छति। यच्छति।

इषेरुदितो ग्रहणम्, इह मा भूत्—इष्यति, इष्णातीति।

ये इषिमुदितं नाधीयते, इह च सूत्रे 'अचि'—इत्यनुवर्त्तयन्ति। तच्च प्रधानमज्ग्रहणं शितीत्यनेन विशेष्यते इति वर्णयन्ति। तथा च

**पदमञ्जरी**

रयमर्थो व्यवस्थापितः,—लुमता लुप्ते प्रत्यये यदङ्गं तन्निबन्धनं कार्यं न भवतीति। ततः किम्? इत्यत्राह—*न चेति* ॥

इषुगमियमां छः ॥ *इच्छतीति*। तुदादित्वाच्छः। *इष्यतीति*। 'इष गतौ'। *इष्णातीति*। 'इष आभीक्ष्ण्ये'। *ये पुनरुदितमिषिं नाधीयत इति*। धातुपाठे। *इह च सूत्रे अचीत्यनुवर्त्तयन्तीति*। 'क्सस्याचि' इत्यतः। नन्वचीत्यनुवृत्तावपि 'हलः श्नः शानज्झौ' इति शानजादेशे इषाणेत्यत्र छत्वं स्यादेव, अजादित्वात्? इत्यत आह—*तत्रेति*। स्यादेतदेवं यद्यचीत्येन शिद्विशेष्येत—शितिच्छो भवति, किंविशिष्टे? अचि—अजादाविति; इह तु शिता अज्विशेष्यते—अचि छो भवति,

**न्यासः**

हावेव क्रमिरत्राङ्गमित्याह—न च क्रमिरङ्गमिति। शपा व्यवहितत्वात्। किं तर्हि? शपीति। शप एव ततो व्यवहितस्य विद्यमानत्वात् ॥

इषुगमियमां छः ॥ इच्छतीति 'तुदादिभ्यः शः'। गच्छति, यच्छतीति। 'कर्त्तरि शप्'।

अथ किमर्थम् 'इषु इच्छायाम्' इत्येतस्योदितो ग्रहणम्? इत्याह—इषेरित्यादि। 'इष गतौ' इत्यस्य दैवादिकस्येष्यतीत्यत्र मा भूत्। 'इष आभीक्ष्ये' इत्यस्य क्रैयादिकस्य इष्णातीत्यत्र च मा भूदित्येवमर्थमुकारानुबन्ध इषिरिह गृह्यते।

ये तर्हीषिमुदितमिह न पठन्ति, तेषामिष्यति, इष्णातीत्यत्रापि प्राप्नोति? इत्यत आह—ये त्विषिमुदितमित्यादि। य इषिमुकारानुबन्धविशिष्टमिह न पठन्ति; त इष्यति, इष्णातीत्यत्र च्छत्वं मा भूदित्येवमर्थम् 'क्सस्याचि' इत्यतोऽज्ग्रहणमनुवर्त्तयन्ति। अनुवर्त्तमानेऽप्यस्मिन् यदि तेन शितीत्येतद् विशिष्यते—शितिच्छो भवति, किंविशिष्टे? अजादाविति, तदेष्णातेर्लोट्सिपो हीत्यादेशे कृते 'हलः श्नः शानज्झौ' इति श्नाप्रत्ययस्य शानजादेशे कृते सति इषाणेत्यत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिना छत्वं स्यादेवेति मन्यमान आह—तच्च प्रधानमज्ग्रहणं शितीत्यनेन

सति तदादिविधिर्न भवति । 'यस्मिन्विधिस्तदादावल्ग्रहणे'—इत्येतदपि विशेषणेनैवेष्यते, तेन इषाणेत्यत्र छत्वं न भवति । न ह्ययमजेव शिदिति ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठ-मनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

पा, घ्रा, ध्मा, स्था, म्ना, दाण्, दृशि, अर्ति, सर्त्ति, शद, सद—इत्येतेषां पिब, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद—इत्येते आदेशा भवन्ति शिति परतः । पा—पिबति । घ्रा—

पदमञ्जरी

किंविशिष्टे ? शितीति, तेन तदादिविधिर्न भवति । किं कारणम् ? इत्यत आह—*यस्मिन्विधिरिति* । न केवलं तदन्तविधौ विशेषणत्वापेक्षा, अपि तर्हि तदादिविधावपीत्यपिशब्दस्यार्थः । *इषाणेत्यत्रापीति* । न केवलमिष्यतीत्यत्रैव—इत्यपिशब्दस्यार्थः । न *ह्ययमजेवेति* । अज्मात्रस्यात्र शित्त्वं नास्तीत्यर्थः । इतिकरणो हेतौ ॥

*पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः* ॥ 'पा पाने' । 'पा रक्षणे' इत्यस्य तु ग्रहणं न भवति; लुग्विकरणत्वात् शितश्चासम्भवात् । 'घ्रा गन्धोपादाने', 'ध्मा शब्दाग्निसंयोगयोः', 'ष्ठा गतिनिवृत्तौ', 'म्ना अभ्यासे', 'दाण् दाने', 'दृशिर् प्रेक्षणे', 'ऋ गतिप्रापणयोः', 'सृ

न्यासः

विशिष्यत इति वर्णयन्तीति । अचि च्छो भवति स चेच्छिद् भवति । प्राधान्यं पुनरज्ग्रहणस्य विशिष्यमाणत्वादेव । तथा च सतीत्यादि । एवमचीत्यस्मिन् प्रधाने शितीत्यनेन विशिष्यमाणे तदादिविधिर्न भवति । किं कारण ? इत्याह—यस्मिन् विधिरित्यादि । न केवलं 'येन विधिस्तदन्तस्य' इत्येतदेव तदन्तविधानं विशेषणेनेष्यते, अपि तु 'यस्मिन्विधिस्तदादावल्ग्रहणे' इत्येतदेव तदादिविधानं विशेषणेनैवेष्यते । तेन च तदादिविधेरभावादिषाणेत्यत्र छत्वं न भवति । असत्यपि तदादिविधौ शानजादेशस्य योऽयमादिराकारस्तत्र शिति परतश्छत्वं कस्मान्न भवति ? इत्याह—न ह्ययमित्यादि । शकारः समुदायानुबन्धः, नाकारस्याचः । तस्मान्नाजेव शिद्, अपि तु समुदाय एवेति न भवति च्छत्वम् ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ 'पा पाने', 'घ्रा गन्धोपादाने', 'ध्मा शब्दाग्निसंयोगयोः', 'ष्ठा गतिनिवृत्तौ', 'म्ना अभ्यासे', 'दाण् दाने', दृशिर् प्रेक्षणे'; 'ऋ गतिप्रापणयोः', 'ऋ सृ गतौ' च; 'शद्लृ शातने', 'षद्लृ विशरणे' तौदादिकः, षद्लृ विशरणगत्यवसादनेषु' भौवादिकः—एषां धातूनां स्थाने यथासंख्यं पिबादय आदेशा भवन्ति । ननु च द्वौ सदी,

जिघ्रति । ध्मा—धमति । स्था—तिष्ठति । म्ना—मनति । दाण्—यच्छति । दृशि—पश्यति । अर्त्ति—ऋच्छति । सर्त्ति—धावति । शद—शीयते । सद्--सीदति ।

पिबतेर्लघूपधगुणः प्राप्नोति, सः 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति न भवति । अथ वा—अकारान्तोऽयमादेश आद्युदात्तो निपात्यते ।

सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति । अन्यत्र—सरति, अनुसरतीत्येव भवति ॥

पदमञ्जरी

गतौ', भौवादिकौ । 'ऋ सृ गतौ' इति जौहोत्यादिकयोस्तु ग्रहणं न भवति; शितोऽसम्भवात् । नन्वेशः सम्भव इति चेत् ? उक्तमत्र—'वर्णे यत्स्यात्तच्च विद्यात्तदादौ' इति । शितीति हि कर्मधारयः-शश्चासाविच्चेति । 'शद्लृ शातने' भूवादिः, 'शद्लृ विशरणे' तुदादिः, 'षद्लृ विशरणगत्यवसादनेषु' ।

*आद्युदात्तो निपात्यत इति* । यदि न निपात्येत, ततः 'धातोः' इत्यन्तोदात्तत्वे सति शपा सहैकादेशे कृते 'एकादेश उदात्तेनोदात्तः' इति पिबतीति पदं मध्योदात्तमापद्येत, आद्युदात्तं चेष्यते ।

*वेगितायामिति* । सञ्जातवेगयायामित्यर्थः । यद्वा—वेगिनो भावो वेगिता, तस्यां च सत्यां गतौ वर्त्तमानस्येत्यर्थः ॥

न्यासः

तत्र वैषम्याद् यथासंख्यं न प्राप्नोति ? नैष दोषः; एक एव हि सदिर्विकरणद्वयार्थं द्विरुपदिश्यते । शीयत इति । 'शदेः शितः' इत्यात्मनेपदम् ।

अथ वेत्यादि । 'पिबतेर्लघूपधगुणः प्राप्नोति' इत्यत्र परिहारान्तरम् । यद्याद्युदात्तो न निपात्येत, ततो धातुस्वरेणान्तोदात्तत्वे सति 'एकादेश उदात्तेनोदात्तः' इति शपा सहैकादेशे सति 'अतो गुणे' पररूपत्वे उदात्ते कृते पिबतीति मध्योदात्तं पदं स्यात्, आद्युदात्तञ्चेष्यते, तस्मादाद्युदात्तो निपात्यते । स निपातनस्वरो धातुस्वरस्य बाधको यथा स्यात् । सर्तेरित्यादि । वेगः=जवः; स यस्यास्ति स वेगी, तस्य भावो वेगिता, तस्यां गतौ सर्तेर्धावादेशमिच्छन्ति । स च 'लुग्वा दुहदिह' इत्यादेः सूत्राद्वाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यत इति वेदितव्यम् । अर्तिसर्तीति—श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः । न हि यङ्लुकि श्तिपरः सम्भवति; अदादित्वात् ततो विहितस्य शपो लुग्विधानात् । 'बहुलं छन्दसि' इति शपो लुग्न भविष्यतीति

## ज्ञाजनोर्जा ॥ ७९ ॥

ज्ञा, जन--इत्येतयोर्जादिशो भवति शिति परतः । जानाति । जायते । जनेर्दैवादिकस्य ग्रहणम् ॥

## प्वादीनां ह्रस्वः ॥ ८० ॥

'पू'--इत्येवमादीनां ह्रस्वो भवति शिति परतः ।

प्वादयः क्र्यादिषु पठ्यन्ते । 'पूञ् पवने'--इत्यतः प्रभृति 'ल्वी गतौ वृत्' इति यावत्केचिदिच्छन्ति, वृत्करणमेतल्ल्वादीनां प्वादीनां च परिसमाप्त्यर्थमिति । अपरे तु--ल्वादीनामेव परिसमाप्त्यर्थं वृत्करण-मेतदिच्छन्ति, आगणान्ताः प्वादय इति ।

### पदमञ्जरी

*ज्ञाजनोर्जा* ॥ *दैवादिकस्य ग्रहणमिति* । न जौहोत्यादिकस्य, शितोऽसम्भवात् । दीर्घोच्चरणस्य प्रयोजनमुत्तरसूत्रे वक्ष्यते ॥

*प्वादीनां ह्रस्वः* ॥ *प्वादयः क्र्यादौ पठ्यन्त इति* । ये तु भूवादौ पठ्यन्ते–'पूङ् पवने' इत्यादयः, तेषां ग्रहणं न भवति, कतिपये हि तत्र ह्रस्वभाविनः, तेषामपि शपि गुणेन भवितव्यम् । किञ्च—क्रैयादिकस्य जानातेर्ह्रस्वनिवृत्त्यर्थं पूर्वसूत्रे दीर्घोच्चारणम्, तदपि क्रैयादिकानां ग्रहणे प्रमाणम् ।

*वृत्करणमित्यादि* । न ह्युभयार्थत्वे वृत्करणस्य कश्चिद्द्वार इति भावः । *अपरे त्विति* । ल्वादीनामनन्तरत्वादिति भावः । तथा 'दॄ पूरणे', 'दॄ भये'—

### न्यासः

चेत् ? न; छन्दसि यथादृष्टानुविधानात् । अर्तिप्रभृतेश्छन्दसि यङ्लुकि श्नन्तस्य प्रयोगादर्शनात् ॥

ज्ञाजनोर्जा ॥ जनेर्दैवादिकस्य ग्रहणमिति । द्वौ जनी—दैवादिकः 'जनी प्रादुर्भावे', जौहोत्यादिकः 'जन जनने' इति । तत्रेह दैवादिकस्य ग्रहणम्, नेतरस्य । न हि ततः परः शित् सम्भवति, श्लुविधानात् । दीर्घोच्चारणस्य प्रयोजनमुत्तरत्र वक्ष्यति ॥

प्वादीनां ह्रस्वः ॥ ल्वी गतौ वृदिति यावत् केचिदिच्छन्तीति । तेषां ततः परेण पठितयोः 'व्री वरणे', 'भ्री भये'–इत्येतयोर्ह्रस्वत्वेन न भवितव्यम्—व्रीणाति, भ्रीणातीति । ननु ल्वादीनां परिसमाप्त्यर्थं तद्वृत्करणम्, अन्यथा आ गणान्तात् तेभ्यो निष्ठानत्वं स्यात्, ल्वादिपरिसमाप्त्यर्थे च तस्मिन्नागणान्ताः प्वादयो युक्ताः ? इत्यत आह—वृत्करणमित्यादि । न ह्युभयगणपरिसमाप्त्यर्थता केनचिद् विरुध्यत इत्यभिप्रायः ।

पूञ्--पुनाति । लूञ्--लुनाति । स्तॄञ्--स्तृणाति ।

येषामागणान्ताः प्वादयः, तेषां जानातीत्यत्र ह्रस्वः प्राप्नोति, 'ज्ञाजनोर्जा' इति दीर्घकरणसामर्थ्यान्न भवति । जनेरपि हि ज आदेशे सति 'अतो दीर्घो यञि' इति दीर्घत्वेन--जायते इति सिद्ध्यति ॥

मीनातेर्निगमे ॥ ८१ ॥

मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये । प्रमिणन्ति व्रतानि ।

निगम इति किम् ? प्रमीणाति ॥

पदमञ्जरी

इत्येतयोरपि वृत्करणात् परस्तात्पठितयोरपि ह्रस्वो भवति—यः पृणाति स ह देवेषु गच्छति, पृणीयादिन्नाधमानाय, पृणन्तं च पपुरिं श्रवस्यव, आदृणातीति । पूर्वस्मिन्पक्षे ह्रस्वान्तावेतौ पठन्ति ।

चोदयति—*येषामिति* । आगता गणान्तमागणान्ताः, परिहरति-*ज्ञाजनोर्जा इति* । यदि जानातीत्यत्र ह्रस्वत्वं स्यात्, ह्रस्वान्तमेवादेशं विदध्यात् । ननु चान्यार्थं दीर्घान्तादेशविधानं स्यात्, न ह्यन्यथा—जायते इति सिद्ध्यति ? अत आह—*ज इत्यपीति* । ह्रस्वान्तादेशविधानेऽपि 'अतो दीर्घो यञि' इति दीर्घत्वे—जायते इति सिद्धम्, तत्र हि 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहण-मनुवर्त्तते, न पुनः 'तङि' इति । अत एव 'आने मुक्' पूर्वान्तः कृतो न परादिः; दीर्घप्रसङ्गात् । ये तर्हि वृत्करणमुभयव्यावृत्त्यर्थं वर्णयन्ति, तेषां दीर्घोच्चारणं किमर्थम् ? जानातीत्यत्र दीर्घो यथा स्यात् । 'अतो दीर्घो यञि' इत्येव दीर्घो

न्यासः

अपर इत्यादि । ल्वादेर्गणस्यानन्तरत्वात् तत्परिसमाप्त्यर्थतैव वृत्करणस्य युक्तेति भावः । तेषामेवमिच्छतां व्री वरणे, भ्री भये-इत्येतयोरपि भवितव्यं ह्रस्वत्वेन व्रिणाति, भ्रिणातीति; प्वादिषूभयोरन्तर्भावात् । जानातीत्यत्र ह्रस्वः प्राप्नोतीति । तस्यापि प्वाद्यन्तर्भावादित्याह-ज्ञाजनोर्जेत्यादि । यदि 'जा' इत्यादेशे कृते ह्रस्वः स्यात् तदा दीर्घोच्चरणमनर्थकं स्यात्, 'ज' इत्येवं ब्रूयात् । तस्माद् दीर्घोच्चारणसामर्थ्याज् जाना-तीत्यत्र ह्रस्वो न भविष्यति । ननु च दीर्घोच्चारणं जन्यर्थं स्यात्, न हि जनेर्ज इत्या-देशे कृते जायत इति रूपं सिध्यति ? इत्यत आह-ज इत्यपि ह्यादेशे कृत इत्यादि । येषा-न्तूभयगणपरिसमाप्त्यर्थं वृत्करणं तेषां किमर्थं जा इति दीर्घोच्चारणम् ? जानातीत्यत्र दीर्घो यथा स्यात् ? नैतदस्ति; 'अतो दीर्घो यञि' इति दीर्घो भविष्यति ? ननु च

## मिदेर्गुणः ॥ ८२ ॥

मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः । मेद्यति, मेद्यतः, मेद्यन्ति । शितीत्येव--मिद्यते ॥

## जुसि च ॥ ८३ ॥

जुसि च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । अजुहवुः । अबिभयुः । अबिभरुः ।

अथ चिनुयुः, सुनुयुरित्यत्र कस्मान्न भवति ? अत्र द्वे ङित्त्वे—सार्वधातुकाश्रयम्, यासुडाश्रयं च । तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्व-

पदमञ्जरी

भविष्यति ? न सिध्यति; 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' न जादेशमात्रेण निष्ठितमङ्गं भवति । तत्रेदं दीर्घोच्चारणमेव लिङ्गम्—आगणान्ताः प्वादय इति ॥

*मिदेर्गुणः* ॥ *मेद्यतीति* । श्यन् । *मिद्यत इति* । भावे यक् ॥

*जुसि च* ॥ उदाहरणेषु लङि शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ।

*अथेत्यादि* । जुस्भक्तस्य यासुटस्तद्ग्रहणेन ग्रहणात्प्रसङ्गः । *सार्वधातु-*

न्यासः

'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति न प्राप्नोति ? नैतदस्ति; 'निष्ठितस्य' इत्युच्यते, न च ज इत्यादेशे कृते निष्ठितमङ्गं भवति; अप्रयोगार्हत्वात् । प्रतिपत्तिलाघवार्थं दीर्घोच्चारणम् ॥

**मीनातेर्निगमे** ॥ प्रमिणन्तीति । 'हिनुमीना' इति णत्वम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । मीनातेरिह विकरणनिर्देशः 'मीञ् हिंसायाम्'—इत्यस्य क्रैयादिकस्य ग्रहणं यथा स्यात्, 'मीङ् हिंसायाम्'—इत्यस्य दैवादिकस्य ग्रहणं मा भूदित्येवमर्थम् 'मीञः' इति निर्देशो न कृतो वैचित्र्यार्थः ॥

**मिदेर्गुणः** ॥ 'ञिमिदा स्नेहने' इति भौवादिको दैवादिकश्च, तत्र दिवादेरिह ग्रहणम्; इतरस्य ह्यङित्त्वाच्छपः 'पुगन्तलघूपधस्य च' इत्येवं गुणः सिद्धः । मिद्यत इति । 'भावकर्मणोः' इत्यात्मनेपदम्, 'सार्वधातुके यक्' ॥

**जुसि च** ॥ इकात्र सन्निहितेन प्रकृतमङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्यत आह—इगन्तस्येत्यादि । अजुहवुरिति । लङ्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्, शपः श्लुः, 'श्लौ' इति द्विर्वचनम् । अबिभयुरिति । 'ञिभी भये' । अबिभरुरिति । 'डुभृञ् धारणपोषणयोः', 'भृञामित्' इत्यभ्यासस्येत्त्वम् ।

**चिनुयुः, सुनुयुरिति** । लिङ्, यासुट्, झेर्जुस्, 'स्वादिभ्यः श्नुः', 'उत्यपदान्तात्'

निमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते। यासुडाश्रय-ङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति ॥

## सार्वधातुकार्धधातुकयोः ॥ ८४ ॥

सार्वधातुके आर्धधातुके च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति। तरति। नयति। भवति। आर्धधातुके--कर्ता, चेता, स्तोता।

सार्वधातुकार्धधातुकयोरिति किम्? अग्नित्वम्। अग्निकाम्यति। यदि हि प्रत्यये, सङीति वोच्येत, इहापि स्यात् ॥

### पदमञ्जरी

*काश्रयङित्त्वनिमित्त इति*। सार्वधातुकमाश्रयो यस्य तत्सार्वधातुकाश्रयं तत् ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः। एतेन *यासुडाश्रयङित्त्वनिमित्तमिति* व्याख्यातम्। *तत्र हि प्राप्ते चाप्राप्ते चेति*। चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते। *क्सस्याचीत्यनुवर्त्तते इति*। परिहारान्तरम्, जकारोच्चारणं तु चक्रुः-इत्यादौ लिटि मा भूत् ॥

*सार्वधातुकार्धधातुकयोः* ॥ *सार्वधातुकार्धधातुकयोरिति किमिति*। एवं मन्यते—प्रत्यय इति वक्तव्यम्, एवमपि हीष्टे विषये सिद्ध्यतीति। सङिति प्रत्याहारः;

### न्यासः

इति पररूपत्वम्। तत्र नाप्राप्ते इत्यादि। सार्वधातुकमाश्रयो यस्य तत् सार्वधातुकाश्रयम्। ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः। स सर्वत्रैव जुसि प्राप्नोतीति तस्मिन्नाप्राप्तेऽयं गुण आरभ्यमाणस्तस्यैव बाधको भविष्यति; न तु यस्य यासुडाश्रयं ङित्त्वं निमित्तम्, तस्यापि। अत्र हि प्राप्ते चाप्राप्तेऽयमारभ्यते। चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते। चकारः समुच्चये। नान्यत् समुच्चेतव्यमस्तीत्यस्यैव लक्षणस्य पुनरावृत्तिमाचष्टे। तेन प्रकृतलक्षणस्यापि प्रतिषेधविषये भवति। अदीधयुरिति। 'दीधीङ् दीप्तिदेवनयोः', लङ्, व्यत्ययेन परस्मैपदम्, झिः, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्, अदादित्वाच्छपो लुक्। ततः 'सार्वधातुकार्धधातुकयोः' इति गुणः प्राप्तः, स 'क्ङिति च' इति प्रतिषिद्धः, सोऽप्यनेन पुनः प्राप्तौ 'दीधीवेवीटाम्' इति प्रतिषिद्धः समुच्चयार्थत्वाच्चकारस्य भवति ॥

सार्वधातुकार्धधातुकयोः ॥ चेता, स्तोतेति। तृच्। 'ऋदुशनस्पुरुदंसोऽनेहसाञ्च' इत्यनङ्, 'सर्वनामस्थाने' इत्यादिना दीर्घः।

सार्वधातुकार्धधातुकयोरिति किमिति। एवं मन्यते—प्रत्यय इति वक्तव्यम्, सङीति वा, एवं ह्युच्यमाने भवतीत्यादौ गुणः सिद्ध एव, सङीति प्रत्याहारग्रहणं सनः सकारादारभ्य महिङो ङकारेण। अग्नित्वमिति। 'तस्य भावस्त्वतलौ' इति त्वप्रत्ययः।

## जाग्रोऽविचिण्णल्ङित्सु ।। ८५ ।।

'जागृ'–इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः । जागरयति । जागरकः । साधुजागरी । जागरंजागरम् । जागरो वर्त्तते । जागरितः । जागरितवान् ।

वृद्धिविषये, प्रतिषेधविषये च यथा स्यात्–इति जागर्त्तेरयं गुण आरभ्यते । तस्मिन् कृते या 'अत उपधायाः' वृद्धिः प्राप्नोति, सा न

पदमञ्जरी

सनः सशब्दादारभ्या महिङो ङकारात् । *अग्नित्वमिति* । प्रत्यय इत्युच्यमाने, अत्रापि प्राप्नोति । *अग्निकाम्यतीति* । सङीत्युच्यमाने अत्रापि प्राप्नोति ॥

*जाग्रोऽविचिण्णल्ङित्सु* ॥ *अविचिण्णल्ङित्सु परत इति* । विचिण्णल्ङिद्भ्योऽन्ये ये प्रत्ययास्तेषु परत इत्यर्थः । *जागरयतीत्यादीनि* वृद्धिविषये उदाहरणानि । *जागरितः, जागरितवानिति* प्रतिषेधविषये ।

किं पुनः कारणं वृद्धिप्रतिषेधविषयाण्येवोदाहरणानि उपन्यस्तानि ? तत्राह–*वृद्धिविषये, प्रतिषेधविषये चेति* । अन्यत्र पूर्वेणैव गुणस्य सिद्धत्वादेतद्विषय एवायं गुणः, तत्राप्युभयविषयः, कथम् ? चिण्णलोः प्रतिषेधात् वृद्धिविषये तावद्भवति, ङित्प्रतिषेधात् प्रतिषेधविषयेऽपीति । *तस्मिन्कृत इति* । 'अङ्गवृत्ते पुनर्वृत्तौ' इत्येतदनाश्रित्योच्यते । *सा न भवतीति* । किं कारणम् ? इत्याह—*यदि हीति* । यद्यपि जागरितः, जागरितवानित्यत्र गुणविधिश्चरितार्थः, तथापि

न्यासः

अग्निकाम्यतीति । 'काम्यच्च' इति काम्यच् । यदीत्यादि । यदि प्रत्यय इत्युच्येत, त्वकाम्यचोरपि स्यात् । अथापि सङीत्युच्येत, काम्यचि स्यात्; तस्यापि प्रत्याहारेऽन्तर्भावात् ॥

जाग्रोऽविचिण्णल्ङित्सु ।। जागरयतीति । णिच् । जागरक इति । ण्वुल् । साधु जागरीति । ताच्छील्ये णिनिः । जागरञ्जागरमिति । 'आभीक्ष्ण्ये णमुल्', आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । जागरो वर्त्तत इति । भावे घञ् । एतानि वृद्धिविषय उदाहरणानि । जागरिता, जागरितवानिति प्रतिषेधविषये ।

किं पुनः कारणं वृद्धिविषये प्रतिषेधविषये चैवोपन्यस्तान्युदाहरणानि ? इत्यत आह–वृद्धिविषये प्रतिषेधविषये चेत्यादि । वृद्धिप्रतिषेधविषयादन्यत्र पूर्वसूत्रेण गुणः सिद्धो भवति । तस्माद्वृद्धिप्रतिषेधविषयेऽयं गुण आरभ्यते, तेन तद्विषयाणामेवोदाहरणानामुपन्यासः । जागरयतीत्यादौ गुणे कृते रपरत्वे च 'अत उपधायाः' इति वृद्धया भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—तस्मिन् कृते इत्यादि । किं पुनः कारणं तस्मिन् कृते न भवति ? इत्याह–यदि ह्रीत्यादि । यद्य-

भवति । यदि हि स्याद्, अनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमनर्थकम् ।

अविचिण्णल्ङित्स्विति किम् ? 'जॄशॄस्तजागृभ्यः क्विन्'—जागृविः । चिण्--अजागारि । णल्--जजागार । ङित्--जागृतः, जागृथः ।

'वि' इति केचिदिकारमुच्चारणार्थं वर्णयन्ति । क्वसावपि वकारादौ गुणो न भवति--जजागृवान् । कथमजागरुः, अहं जजागर इति,

पदमञ्जरी

वृद्धिविषयेऽप्येतद्विधानमित्युक्तम्, तत्रास्यानर्थक्यमुच्यते । किञ्चेत्याह—*चिण्णलोश्चेति* । यदि गुणे कृते 'अत उपधाया' इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात् । अस्तु तत्रापि गुणः; वृद्धौ सत्यामजागारि, जजागारेति सिद्धम् ।

*जागृत इति* । लट्, तस्, अदादित्वाच्छपो लुक्, 'सार्वधातुकमपित्' इति ङित्त्वम् ।

*अत्र वीति केचिदिति* । 'अविचिण्णल्ङित्सु' इत्यत्र यो वकारात्पर इकारस्तमुच्चारणार्थं वर्णयन्ति, तत्र 'यस्मिन्विधिः' इति वकारादौ प्रतिषेधः । किमर्थं पुनस्त एवं वर्णयन्ति ? इत्यत आह—*क्वसावपीति* । *जजागृवानिति* । 'नेड्वशि कृति'

न्यासः

स्मिन् कृतेऽपि गुणे 'अत उपधायाः' इति वृद्धिः स्यात्, जागरयतीत्यादिकं रूपं न स्यात्, तथा चानर्थको गुणः स्यात्; 'अचो ञ्णिति' इत्यनयैव वृद्ध्या सिद्धत्वात् । चिण्णलोश्चेत्यादि । चिण्णलोः प्रतिषेधस्यैतत् प्रयोजनम्—वृद्धेः श्रवणं यथा स्यात् । यदि तु कृतेऽपि गुणे 'अत उपधायाः' इति स्यात्, चिण्णलोः प्रतिषेधोऽनर्थकः स्यात्; अस्त्वत्र गुणः, सत्यपि तस्मिन् पुनरुपधाया इति वृद्ध्या भवितव्यम्, ततश्च वृद्धेः श्रवणं भविष्यतीति ।

अजागारीति । लुङ्, च्लिः, 'चिण्भावकर्मणोः' इति च्लेश्चिण्, 'चिणो लुक्' इति तकारस्य लुक् । जागृतः, जागृथ इति । लट्, तस्थसौ, तयोः 'सार्वधातुकमपित्' इति ङित्त्वम्, अदादित्वाच्छपो लुक् ।

वीति केचिदिकारमुच्चारणार्थं वर्णयन्तीति । किं पुनरेवं सतीष्टं सिध्यति, यत एवं व्याचक्षते ? इत्यत आह—क्वसावपीत्यादि । यदि समुदायस्य वेः प्रत्ययस्येदं ग्रहणं स्यात्, क्वसौ गुणप्रतिषेधो न स्यात् । यदि त्विकार उच्चारणार्थो वर्णमात्रस्यैवेदं ग्रहणम्, तदा 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिना क्वसावपि गुणप्रतिषेधः सिद्धो भवति । जजागृवानिति । 'लिटः क्वसुश्च' इति क्वसुरादेशः, 'उगिदचाम्' इति

अत्र प्रतिषेधः प्राप्नोति ? न; अप्रतिषेधात् । अविचिण्णल्ङित्स्विति पर्युदासोऽयम् ।

अथ वा--'जाग्रः' इति प्राप्तिरसावानन्तर्याद् विचिण्णल्ङित्सु

पदमञ्जरी

इति इट्प्रतिषेधः । तत्र क्रादिनियमादिट् प्राप्तः 'वस्वेकाजाद्घसाम्' इति नियमान्न भवति । ये तु क्विपो लोपाद्वर्णाश्रये प्रत्ययलक्षणप्रतिषेधाच्च पर्युदासं नेच्छन्ति, तेषां जागरिति गुणो भवत्येव । अन्ये त्वाहुः--यथा अतृणेडिति प्रत्ययलक्षणेनेमागमो भवति, वर्णस्य प्रत्ययविशेषणत्वात्; एवं क्विपोऽपि पर्युदासः, ततस्तु जागृदिति भवति ।

चोदयति—*कथमजागरुरिति* । एवं मन्यते—प्रसज्यप्रतिषेधोऽयं विचिण्णल्ङित्सु न भवतीति, ततश्च 'जुसि च' इत्यस्यापि गुणस्य प्रतिषेधः स्यात्, तथोत्तमे णलि णित्त्वाभावपक्षे गुण इष्यते—'सार्वधातुकार्धधातुकयोः' इति, तस्यापि प्रतिषेधः प्राप्नोतीति । परिहरति—*नाप्रतिषेधादिति* । नायं दोषः, कुतः? अप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः, कस्तर्ह्ययम् ? इत्याह—*अविचिण्णल्ङित्स्विति पर्युदासोऽयमिति* । पर्युदासे हि विचिण्णल्ङित्सु न विधिर्न प्रतिषेधः, ततोऽन्यत्र विधानम्, तेन जुसि णलि च लक्षणान्तरेण प्राप्तो गुणो भवत्येव ।

न्यासः

नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । केचिदिति वचनाद्—अपर उच्चारणार्थं न वर्णयन्तीत्युक्तं भवति । त एवं मन्यन्ते—छान्दसः क्वसुः, लिट् च छन्दसि सार्वधातुकमपि भवति; 'छन्दस्युभयथा' इति वचनात्, ततः 'सार्वधातुकमपित्' इति ङित्त्वादेव पर्युदासो भविष्यतीति । अजागरुरित्यादि । एवं मन्यते—'अविचिण्णल्ङित्सु' इति प्रसज्यप्रतिषेधोऽयम्—विचिण्णल्ङित्सु न भवतीति, ततश्चाजागरुरित्यत्रापि 'जुसि च' इत्यनेनापि प्राप्तस्य गुणस्य प्रतिषेधः प्राप्नोति । एवमहं जजागरेत्यत्र 'णलुत्तमो वा' इति वचनाण्णित्त्वं यदा नास्ति तदा 'सार्वधातुकार्धधातुकयोः' इति गुण इष्यते, सोऽस्मात् प्रतिषेधान्न प्राप्नोतीति । नाप्रतिषेधादिति परिहारः । नायं दोषः; कुतः ? अप्रतिषेधात् । अप्रसज्यप्रतिषेधादित्यर्थः । यदि प्रसज्यप्रतिषेधो न भवति, कस्तर्ह्ययम् ? इत्याह—अविचिण्णल्ङित्स्विति पर्युदासोऽयमिति । प्रसज्यप्रतिषेधे हि लक्षणान्तरेणापि प्रसक्तस्य प्रतिषेधः स्यात्, न पर्युदासे । तथाहि पर्युदासे विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते, न तु तेषु विचिण्णलादिषु प्रतिषिध्यते । पर्युदासश्चायम् । तस्माज्जुसि णलि च गुणो भवत्येव ।

अभ्युपेत्यापि प्रसज्यप्रतिषेधम्, परिहारान्तरमाह—अथ वेत्यादि । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यानन्तर्याद् जाग्र इति या प्राप्तिस्तस्या अयं प्रतिषेधः,

प्रतिषिध्यते; या तु 'जुसि च', 'सार्वधातुकार्धधातुकयोः' इति च प्राप्तिः, सा न प्रतिषिध्यते ॥

पुगन्तलघूपधस्य च ॥ ८६ ॥

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयोर्गुणो भवति। पुगन्तस्य—ब्लेपयति, ह्रेपयति, क्नोपयति । लघूपधस्य—भेदनम्, छेदनम्, भेत्ता, छेत्ता ।

प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्यते—इति ज्ञापितमेतत् क्नुसनोः कित्करणेन । 'त्रसिगृधिधृषिक्षिपेः क्नुः' । 'हलन्ताच्च' इति ।

पदमञ्जरी

प्रसज्यप्रतिषेधेऽप्याह—*अथ वेति* । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति भावः । केचिद्दर्विरित्यत्र गुणदर्शनादौणादिकं विच्प्रत्ययं वर्णयन्ति, तेषां जागृविरित्यत्र गुणः प्राप्नोति । न च वेः प्रतिषेधवैयर्थ्यम्; क्विपि क्वसौ च चरितार्थत्वात् । तस्माज्जागर्तेः किद्वक्तव्यः ॥

*पुगन्तलघूपधस्य च* ॥ *भेत्ता, छेत्तेति* । कथं पुनरत्र गुणः, यावता धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये 'संयोगे गुरु' इति गुरुसंज्ञया लघुसंज्ञाया बाधनान्न प्राप्नोति, भेदनमित्यादौ सावकाशो गुणः ? अत आह—*प्रत्ययादेरिति* । *क्नुसनोः कित्करणेनेति* । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नोः कित्करणस्यैतत्प्रयोजनम्—गृध्नुरित्यादौ गुणो मा भूदिति । यदि चैवंविधे विषये गुरूपधत्वाद् गुणो न स्यात्, क्नोः कित्करणमनर्थकं स्यात् । तथा 'हलन्ताच्च' इति सनः कित्त्वविधानस्यैतत्प्रयो-

न्यासः

या तु 'जुसि च' इत्यादिना लक्षणान्तरेण प्राप्तिः सा न प्रतिषिध्यते । अजागरुरिति । लङ्, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ।

पुगन्तलघूपधस्य च ॥ पुगन्तस्याङ्गस्य, लघूपधस्य चेत्युभावपि बहुव्रीही—पुगन्तो यस्य तत् तथोक्तम्, लघ्वी उपधा यस्य तल्लघूपधम् । भेत्ता, छेत्तेति ।

ननु च प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति 'संयोगे गुरु' इति गुरुसंज्ञया लघुसंज्ञायां बाधितायां गुणेनात्र न भवितव्यम् ? इत्यत आह—प्रत्ययादेरित्यादि । 'त्रसिगृधिधृषिक्षिपेः क्नुः', 'हलन्ताच्च' इति क्नुसनोः कित्करणस्यैतदेव प्रयोजनम्—गृध्नुः, बिभित्सतीत्यादौ गुणो मा भूदिति । यदि प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति लघूपधगुणो न स्यात् तयोः कित्त्वं न कुर्यात्, कृतञ्च, तस्मात् क्नुसनोः कित्त्वं

संयोगे[1] गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥
धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे[1] ॥

उपधा चात्र इगेव गृह्यते, ततो भिनत्तीति गुणो न भवति ।

अपरे--पुकि अन्तः पुगन्तः; लघ्वी उपधा लघूपधा; पुगन्तश्च

पदमञ्जरी

जनम्—पित्सतीत्यादौ गुणो मा भूदिति, तदपि ज्ञापकमुक्तार्थस्य । इदं तु ज्ञापकं नोपपद्यते; सिसृक्षति, दिदृक्षते इत्यत्र 'सृजिदृशोः' इत्यमागमो मा भूदित्येवमर्थमेतत्स्यात्, तथा धिप्सतीत्यत्र नलोपार्थं तत्स्यात् । तस्मात् क्नोरेव कित्करणं ज्ञापकम् । भिनत्ति,छिनत्तीत्यत्र श्नमोऽकारेण लघूपधमङ्गम्, तत्र धातोरिकारस्य गुणः प्राप्नोति, अत आह–*उपधात्रेति* । न ह्यत्र या काचिदुपधा गृह्यते, किं तर्हि ? 'इको गुणवृद्धी' इत्यस्योपस्थानात् स्थानित्वेन सन्निहित इगेव ।

*अपरे त्विति* । वर्णयन्तीति सम्बन्धः । *पुकि अन्त इति* । अन्तशब्दः समीप-

न्यासः

कुर्वता—प्रत्ययाङ्गावयवयोर्हलोरानन्तर्येऽपि लघूपधगुणो न व्यावर्त्त्यंत इति ज्ञापितमेतत् । ननु च सनः कित्त्वं सिसृक्षतीत्यत्रामागमो मा भूदित्येवमर्थं स्यात् ? नैतदस्ति; यदि ह्येतत् प्रयोजनमभिमतं स्यात् तत्रैवं प्रतिषेधं कुर्यात्—सृजिदृशोर्झल्यमकित्सनोरिति । तस्मात् सनः कित्करणं ज्ञापकमेव यदि लघूपधरयानेन गुणो विधीयते । एवं सति 'इको गुणवृद्धी' इत्यस्या उपस्थाने सति यत्र तत्र स्थितस्येको गुणः प्रसज्येत, ततश्चेहापि प्राप्नोति—भिनत्तीति, भवति ह्यत्र लघूपधमङ्गम् । न च शक्यते वक्तुम्–'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञायां सत्यां लघूपधमेतन्न भवतीति गुणो न भविष्यतीति । यज्ज्ञापितमेतदिदानीमेव—प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्त्यत इति ? अत आह–उपधा चात्रेत्यादि । इक्परिभाषया ह्यत्रेकः सन्निधापितत्वादिगेवोपधा गृह्यते, तेन भिनत्तीत्यत्र गुणो न भवति; न ह्यत्राङ्गस्येगुपधा, किं तर्हि ? अकारः ।

अपरे त्वित्यादि । सूत्रार्थं वर्णयन्तीति वक्ष्यमाणेन सम्बन्धः । पुकि अन्तः पुगन्तः–

---

१–१. भाष्यस्थ-संग्रहश्लोकत्रयमिदम्, न्यासकृता न व्याख्यातमिति, प्रक्षिप्तमत्र मन्यामहे । अत एव पदमञ्जरीकृतापि 'क्वचित्' इत्युक्त्वा व्याख्यातम् ।

लघूपधा च पुगन्तलघूपधमिति सूत्रार्थं वर्णयन्ति ॥

पदमञ्जरी

वचनः । यद्यपि 'पुगन्त' इत्यत्र बहुव्रीहावपि न दोषः, तथाप्यैकरूप्येण विशेषणार्थमयमपि तत्पुरुष एव व्याख्यातः । *लघ्वी उपधेति* । कर्मधारयः । अत्र पक्षे शब्द एवोपधाया इका सम्बन्धः—लघ्व्या उपधाया इक इति । *पुगन्तलघूपधमिति* । समाहारद्वन्द्वः ।

क्वचिद् 'उपधात्र' इत्यादेर्ग्रन्थस्य पुरस्तात् *संयोगे गुरुसंज्ञायामिति* श्लोकत्रयं पठ्यते । धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये सति गुरुसंज्ञायां सत्यां गुणो भेत्तुर्षेशब्दस्य न सिध्यति । परिहरति–*विध्यपेक्षमिति* । इदं विधानमिति शेषः । लघूपधाद्ये विहिते सार्वधातुकार्धधातुके, तयोरङ्गस्य गुण इत्यर्थः । ननु पञ्चम्यभावात् कथं विधानमुपपद्यते ? उच्यते; षष्ठीपक्षेऽपि विशेष्यत इति चेत्को दोषः–लघूपधस्य ये सार्वधातुकार्धधातुके । के च ते ? ये तस्माद्विहिते इत्युपपद्यते । *लघोश्चासाविति* पाठे लघूपधाच्चासौ तृज्विहित इत्यर्थः । उपधाशब्दस्तु वृत्तभङ्गभयान्न प्रयुक्तः । *कथं कुण्डिरिति* । अङ्गाधिकारे नुमो विधानादकृत एव नुमि प्रत्ययो लघूपधाद्विहितः, तत्र परतो निमित्ते स्थिते कुण्डितेत्यादौ गुणः प्राप्नोति, यदि विधानं विशेष्यत इत्यर्थः । परिहरति—*धातोर्नुम इति* । हेतौ पञ्चमी, यस्मात्तत्र धातोर्नुमङ्गस्य तस्मादित्यर्थः । उक्तं हि तत्र–'धातुग्रहणस्य प्रयोजनम्-धातूपदेशावस्थायामेव नुम् यथा स्यात्' इति, ततश्च प्रागेव नुम्, पश्चात्प्रत्ययः; न चासौ लघूपधाद्विहितो भवति । *कथं रञ्जेरिति* । यदि षष्ठीनिर्देशेऽपि विधानं विशेष्यते, तदान्यत्रापि प्रसङ्गः, ततश्च 'अत उपधायाः' इत्यकारोपधाद्विहिते प्रत्यये विधीयमाना वृद्धी रञ्जेर्न स्यात्; प्राक् प्रत्ययोत्पत्तेर्नकारोपधत्वात्—राग इति, 'घञि च भावकरणयोः' इति नकारलोपः । यद्यप्यु-

न्यासः

'सप्तमी' इति योगविभागात् समासः । अन्तशब्दोऽयमवयववचनः, पुकि परतोऽवयव इत्यर्थः । कस्यावयवः ? 'अङ्गस्य' इत्यनुवृत्तेः पुगिति वचनात् पुगागमवतोऽङ्गस्य । स पुनः पुगन्त इक्परिभाषोपस्थानादिगेव वेदितव्यः । लघ्वी उपधा लघूपधेति । विशेषणसमासः । पुगन्तलघूपधमिति । समाहारद्वन्द्वोऽयम् । सूत्रार्थमिति । सूत्रार्थैकदेशे सूत्रार्थशब्दो वर्त्तते, न ह्येतावानेव सूत्रार्थः, अपरिसमाप्तत्वात् । अपरिसमाप्तिस्तु तस्य पुगन्तस्य तस्याश्च लघूपधाया गुणो भवतीत्यस्य सूत्रार्थस्यैकदेशस्यानभिधानात् । वर्णयन्तीति । व्याचक्षत इति । भिनत्तीत्यत्र गुणो मा भूदित्येवमर्थम् । न ह्यत्र सूत्रार्थे भिनत्तीत्यत्र गुणः प्रसज्येत । बहुव्रीहौ ह्याश्रीयमाणेऽङ्गस्यान्यपदार्थस्य यो नाम कश्चिदिक् तस्य यत्र तत्रावस्थितस्य गुणः प्रसज्येत । तत्पुरुषे तु नायं दोषः, तत्र हि

## नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ८७ ॥

अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो

पदमञ्जरी

पधाया अकारस्य वृद्धिरुच्यते, न च ततः प्रत्ययस्य विधानं सम्भवति, तथाप्यकारोपधाद्यवृद्धिविधानं तदेवोपधाया विधानं मन्यते। *स्यन्दिश्रन्थ्योरिति*। यदयम् 'स्यद्रो जवे', 'अवोदैधोद्मप्रश्रथहिमश्रथाः' इति स्यन्दिश्रन्थ्योर्वृद्धयभावं निपातयति, तज्ज्ञापयति—भवत्येवञ्जातीयकानां वृद्धिरिति। तत्र हि नलोपार्थम्, वृद्धयभावार्थं च निपातनमाश्रयणीयम्। यदि च वृद्धिविषये विधानं विशेष्येत, ततो वृद्धिप्रसङ्गाभावान्निपातनाश्रयणमनर्थकं स्यात्। नलोपस्य सिद्धये विधिरेवाश्रयणीयः, अनेकप्रयोजनसिद्धये हि निपातनाश्रयणम्। *अनल्लोपेति*। अनन्तस्य योऽल्लोपः सोऽनल्लोपः; शौ दीर्घत्वम्, शिदीर्घत्वम्—तयोर्द्वन्द्वः, अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिद्धयतः। यदि च षष्ठीनिर्देशेऽपि विधानं विशेष्येत, अल्लोपो राज्ञ इत्यादावेव स्यात्; अस्थ्ना, अस्थ्ने, दध्ना, दध्ने—इत्यादौ न स्यात्। शौ दीर्घत्वं च सामानि इत्यादावेव स्यात्, कुण्डानीत्यादौ तु न स्यात्। तस्मात्षष्ठीनिर्देशेषु विहितविशेषणग्रहणे दोषप्रसङ्गाद् गुणो भेत्तुं सिद्धयतीति। एवं तर्हि ज्ञापकात्सिद्धम्, यदयम् 'नाभ्यस्तस्याचि' इत्यच्ग्रहणं करोति, तज्ज्ञापयति-भवत्येवञ्जातीयके विषये गुण इति। तस्य हि प्रयोजनम्-नेनेक्तीत्यादौ हलादौ गुणप्रतिषेधो मा भूदिति। यदि च हलादावलघूपधत्वाद् गुणो न स्यात्, तदा गुणस्य प्राप्त्यभावात्किं तन्निवारणार्थेनाज्ग्रहणेन! नैतदस्ति ज्ञापकम्; *अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत्*। अभ्यस्तस्याजादौ प्रतिषेधमाहेति यत् तल्लङर्थं कृतं भवेत्, यत्र हलादिर्लुप्यते—अनेनेगिति, तस्मान्न ज्ञापकम्। एवं तर्हि—*क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे*। व्याख्यातमेतत् ॥

*नाभ्यस्तस्याचि पिति सार्वधातुके* ॥ नेनिजानीत्यादि। लोट्, 'मेर्निः', 'आडु-

न्यासः

लघूपधाभ्यामङ्गं विशिष्यते, अतस्तस्या एव गुणो विधीयते—अङ्गस्य या लघूपधा इक् तस्या गुणो भवतीति। भिनत्तीत्यत्र याङ्गस्य लघूपधा नासाविक्, यश्चेक् स यद्यपि लघुर्भवति न त्वस्योपधा। तस्मात् तत्पुरुष आश्रीयमाणे नेह गुणस्य प्रसङ्गः।

सार्वधातुकार्धधातुकयोरित्येव—अग्निचित्त्वम्, अग्निचित्काम्यति। पुगन्तग्रहणं लघूपधार्थम्।

नाभ्यस्तस्याचि पिति सार्वधातुके ॥ नेनिजानि, वेविजानि, परिवेविषाणीति। 'णिजिर् शौचपोषणयोः' 'विजिर् पृथग्भावे' 'विषु व्याप्तौ'—एभ्यो लोट्, मिप्, 'मेर्निः', 'आडुत्तमस्य पिच्च' इत्याट्, 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुः, 'श्लौ'

न भवति। नेनिजानि[1], वेविजानि, परिवेविषाणि। अनेनिजम्, अवेविजम्, पर्यवेविषम्[1]।

अभ्यस्तस्येति किम्? वेदानि। अचीति किम्? नेनेक्ति।

पिद्ग्रहणमुत्तरार्थम्। सार्वधातुक इति किम्? निनेज।

लघूपधस्येत्येव--जुहवानि। अजुहवम्।

❀ बहुलं छन्दसीति वक्तव्यम् ❀। जुजोषदिति यथा स्यात्।

### पदमञ्जरी

त्तमस्य पिच्च', शपः श्लुः, द्विर्वचनम्, 'णिजां त्रयाणां गुणः श्लौ'। *अनेनिजमि-त्यादि*। लङ्, मिपोऽम्भावः।

*वेदानीति*। 'विद ज्ञाने', लोडादि यथायोगं पूर्ववत्, शपो लुक्। *नेनेक्तीति*। लट्, तिप्, कुत्वम्। *पिद्ग्रहणमुत्तरार्थमिति*। 'तृणह इम्' पिति यथा स्यात्, इह तु पितोऽन्यत्रापि 'सार्वधातुकमपित्' इति ङित्त्वाद्भवितव्यमेव प्रतिषेधेन। *निनेजेति*। णल्, स च 'लिट् च' इत्यार्द्धधातुकसंज्ञः।

*जुजोषदिति*। 'जुषी प्रीतिसेवनयोः', लेट्, व्यत्ययेन परस्मैपदम्, तिप्, 'इतश्च लोपः परस्मैपदेषु', 'लेटोऽडाटौ' इत्यट्, व्यत्ययेन शपः श्लुः, द्विर्वच-

### न्यासः

इति द्विर्वचनम्, 'णिजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणः। अनेनिजम्, अवेविजम्, पर्यवेविषमिति। लङ्, 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽम्भावः।

वेदानीति। विद ज्ञाने'। पूर्ववल्लोडादि यथायोगम्, अदादित्वाच्छपो लुक्।

नेनेक्तीति। लट्, तिप्, 'चोः कुः' इति कुत्वम्।

अथ पिद्ग्रहणं किमर्थम्, यावताऽपिति सार्वधातुके 'सार्वधातुकमपित्' इति ङित्त्वे सति 'क्ङिति च' इति निषेधेन भवितव्यमिति, न चानयोः प्रतिषेधयोः कश्चिद् विशेषोऽस्ति? इत्यत आह—पिद्ग्रहणमित्यादि। 'तृणह इम्' इतीमं वक्ष्यति, स पिति यथा स्यात्, अपिति मा भूदित्येवमर्थं पिद्ग्रहणम्। निनेजेति। लिट्, स च 'लिट् च' इत्यार्धधातुकसंज्ञकः।

जुहवानीति। 'हु दाने'। पूर्ववल्लोडादि। अजुहवमिति। पूर्ववल्लङादि। अत्र 'लघूपधस्य' इत्यनुवृत्तेः 'सार्वधातुकार्धधातुकयोः' इतीगन्तस्य यो गुणो विहितस्तस्य प्रतिषेधो न भवति।

बहुलं छन्दसीति वक्तव्यमिति। छन्दसि विषये बहुलं गुणप्रतिषेधो भवतीत्येतदर्थ-रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इहेदं सूत्रं विभज्य द्वौ योगौ क्रियेते, तत्र

---

१—१. नेनिजानि, अनेनिजम्, परिवेविषाणि, पर्यवेविषम्—इति मुद्रितः पाठः।

पस्पशाते । चाकशीति । वावशीति । यङ्लुकि छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम् । पस्पशाते--इत्यत्राभ्यासह्रस्वत्वं च ।

प्रकृत्यन्तराणां वा स्पशिकशिवशीनामेतानि रूपाणि ॥

पदमञ्जरी

नम् । यद्यत्र गुणप्रतिषेध इष्यते, पस्पशाते इत्यादौ उपधाह्रस्वत्वमिष्यते, तन्न प्राप्नोति । तस्मादभ्यस्तानामुपधाया ह्रस्वत्वमेव विधेयम्, न गुणप्रतिषेधः । कथं नेनिजानीत्यादि, गुणे कृते उपधाह्रस्वत्वम्, 'एच इग्घ्रस्वादेशे', सिद्धमिष्टम् ? अत आह-*पस्पशाते इत्यादि* । स्पशिर्वार्त्तिककारवचनादपठितोऽपि धातुः, तस्माल्लेट्, व्यत्ययेनात्मनेपदम्, टेरेत्वे 'लेटोऽडाटौ' इत्याट्, शपः 'बहुलं छन्दसि' इति श्लुः, द्विर्वचनम् । अथ वा--यङ्लुकि छान्दसमभ्यासस्य ह्रस्वत्वम् । *चाकशीतीति* । 'काशृ दीप्तौ', यङ्लुक्, लट्, तिप्, 'यङो वा' इतीडागमः । *वावशीतीरिति* । 'वाशृ दीप्तौ', यङ्लुक्, लट्, शत्रादेशः, ङीप्, शस् । *छान्दसं ह्रस्वत्वमिति* । यदि तु गुणनिषेधं प्रत्याख्यायोपधाह्रस्वत्वमुच्येत, तदा नर्नृतीतीत्यादौ ऋदुपधे रपरे गुणे कृते ह्रस्वभाविन्युपधा नास्तीति रूपं न सिद्ध्येत् । तस्माच्छान्दसमेव ह्रस्वत्वमेष्टव्यमिति भावः । *प्रकृत्यन्तराणामेवेति* । 'स्पश बाधनस्पर्शनयोः', 'कश गतिशासनयोः', 'वश कान्तौ' ॥

न्यासः

'न' इत्येको योगः; 'अभ्यस्तस्याचि पिति सार्वधातुके' इति द्वितीयः, तत्र च नेत्यनुवर्त्तते, अयञ्च योगः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः । तेन छन्दसि बहुलं प्रतिषेधो भविष्यति । जुजोषदिति । 'जुषी प्रीतिसेवनयोः', लेट्, तिप्, 'लेटोऽडाटौ' इत्यट्, तुदादित्वाच्छः, तस्य 'बहुलं छन्दसि' इति श्लुः, 'श्लौ' इति द्विर्वचनम् । लघूपध गुणः । यद्यभ्यस्तस्याचि पिति सार्वधातुके गुणप्रतिषेध इष्यते, पस्पशाते, चाकशीति, वावशीतीत्यत्रोपधाह्रस्वत्वमिष्यते, तन्न प्राप्नोति; तस्मादभ्यस्तानामुपधाह्रस्वत्वमेव वक्तव्यम्, न गुणप्रतिषेधः; ह्रस्वत्वे हि नेनिजानीत्येवमादि सिध्यति, पस्पशाते इत्यादि च !--इति यश्चोदयेत्, तं प्रत्याह--पस्पशाते इत्यादि । स्पशिरिति गणपरिपठितो धात्वन्तरमस्त्येव, तस्माद् यङ्, तस्य 'यङोऽचि च' इति लुक्, द्विर्वचनम्, 'शर्पूर्वाः खयः' इति खयः शेषः, अभ्यासस्य ह्रस्वत्वे कृते 'दीर्घोऽकितः' इति दीर्घः, 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेनोपधाया अभ्यासस्य च ह्रस्वः, लेट्, व्यत्ययेनैवात्मनेपदम्, आट् । चाकशीतीति । 'काशृ दीप्तौ', 'कुहोश्चुः' इत्यभ्यासस्य चुत्वम्, तिप्, 'यङो वा' इतीट् । वावशीतीति । 'वाशृ शब्दे', शेषं यथायोगं पूर्ववत् । पस्पशाते इत्यत्राभ्यासह्रस्वत्वं चेति । चकारादुपधाह्रस्वत्वञ्च । इतरत्र तूपधाह्रस्वत्वमेव, नाभ्यासस्य ह्रस्वत्वम् ।

प्रकृत्यन्तराणां वेति । 'स्पश बाधनस्पर्शनयोः,' 'कश गतिशासनयोः,' 'वश

## भूसुवोस्तिङि ॥ ८८ ॥

भू, सू—इत्येतयोस्तिङि सार्वधातुके गुणो न भवति । अभूत्, अभूः, अभूवम् । सुवै, सुवावहै, सुवामहै । सूतेर्लुग्विकरणस्येदं ग्रहणम् ।

सुवति-सूयत्योर्विकरणेन तिङो व्यवधानम् । विकरणस्यैव ङित्त्वाद् गुणाभावः सिद्धः ।

तिङीति किम् ? भवति ।

'सार्वधातुके' इत्येव—व्यतिभविषीष्ट ।

### पदमञ्जरी

भूसुवोस्तिङि ॥ *अभूदिति* । लुङ्, 'गातिस्था' इत्यादिना सिचो लुक् । सुवै, सुवावहै, सुवामहै इति । 'षूङ् प्राणिगर्भविमोचने', लोट्, टेरेत्वम्, 'एत ऐ', 'आडुत्तमस्य पिच्च', शपो लुक्, उवङादेशः ।

*सुवतिसूयत्योस्त्विति* । 'षू प्रेरणे' तुदादिः, 'षूङ् प्राणिप्रसवे' दिवादिः । *भवतीति* । शपि गुणः ।

*व्यतिभविषीष्टेति* । आशिषि लिङ्, 'लिङाशिषि' इत्यार्धधातुकसंज्ञा, 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् ।

### न्यासः

कान्तौ'—एतानि प्रकृत्यन्तराणि ह्रस्वोपधानि सन्तीति, अत एषामेवैतानि रूपाणि । तस्माद् यथान्यासमेवास्तु ॥

भूसुवोस्तिङि ॥ अभूदिति । लुङ्, 'गातिस्था' इत्यादिना सिचो लुक् । सुवावहै, सुवामहै इति । 'षूङ् प्राणिगर्भविमोचने,' लोट्, वहिमहिङौ, टेरेत्वम्, 'एत ऐ,' अदादित्वाच्छपो लुक्, 'आडुत्तमस्य पिच्च' इत्याट्, 'अचि श्नुधातु' इत्यादिनोवङ् । अथ कस्मात् सूतेरादादिकस्योपन्यासः कृतः, न सुवतिसूयत्योस्तौदादिकदैवादिकयोः ? इत्यत आह—सूतेर्लुग्विकरणस्येत्यादि ।

ननु च लुग्विकरणपरिभाषया 'षू प्रेरणे' इत्येतस्य शविकरणस्य तौदादिकस्य, 'षूङ् प्राणिप्रसवे'—इत्यस्य दैवादिकस्य च ग्रहणं युक्तम् ? इत्यत आह—सुवतिसूयत्योरित्यादि तिङीति सप्तमीनिर्देशादनन्तरे तिङि प्रतिषेधेन भवितव्यम् । न च सुवतिसूयतिभ्यामनन्तरस्तिङ् सम्भवति, विकरणेन व्यवधानात् । तस्माच्च तयोर्ग्रहणमिति सूतेरेव ग्रहणं युक्तमित्यभिप्रायः । स्यादेतत्—वचनप्रामाण्याद्विकरणेन व्यवधानेऽपि प्रतिषेधो भविष्यतीत्यतस्तयोरेव ग्रहणं युक्तमिति ? अत आह—विकरणस्यैवेत्यादि । तयोर्हि 'सार्वधातुकमपित्' इति विकरणङित्त्वम्, तत्र 'क्ङिति च' इत्यनेनैव सिद्धः प्रतिषेध इति निरर्थकं तयोर्ग्रहणं स्यात्, अतो न ताविह गृह्येते । भवतीति । तिङीति वचनादिहातिङि शपि परतो निषेधो न भवति । व्यतिभविषीष्टेति । आशिषि लिङ् । स च

अथ बोभवीतीति यङ्लुकि गुणप्रतिषेधः कस्मान्न भवति ? ज्ञापकात् । यदयं बोभूत्विति गुणाभावार्थं निपातनं करोति ॥

उतो वृद्धिर्लुकि हलि ॥ ८९ ॥

'सार्वधातुके', 'पिति' इति वर्त्तते । उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके । यौति, यौषि, यौमि । नौति, नौषि, नौमि । स्तौति, स्तौषि, स्तौमि ।

उत इति किम् ? एति, एषि, एमि । लुकीति किम् ? सुनोति, सुनोषि, सुनोमि । हलीति किम् ? यवानि, रवाणि ।

'पिति' इत्येव—युतः, रुतः ।

अपि स्तुयाद्राजानम्—इत्यत्र हि 'ङिच्च पिन्न भवति' इति पित्त्वप्रतिषेधाद् वृद्धेरभावः ।

पदमञ्जरी

*अथेति* । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्प्रसङ्गः । *ज्ञापकादिति* । सूतेस्तु निपातनाभावाद् गुणनिषेधो भवत्येव—सोषुवीतीति ॥

*उतो वृद्धिर्लुकि हलि* ॥ *यवानीति* । लोडुत्तमैकवचनम् ।

*अपि स्तुयादिति* । अपिः सम्भावने कर्मप्रवचनीय इति 'उपसर्गात्सुनोति' इत्यादिना षत्वं न भवति । *ङिच्च पिन्न भवतीति* । यासुडादेः सार्वधातुकस्य साक्षाच्छिष्टं ङित्त्वमनवकाशम्, तिबादीनां तु पित्त्वं लकारान्तरेषु सावकाशम्,

न्यासः

'लिङाशिषि' इत्यार्धधातुकसंज्ञकः, सीयुट्, 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, सुट्, षत्वम्, ष्टुत्वम् ।

अथेत्यादि । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति यङ्लुकोऽपि ग्रहणे सति तत्रापि प्रतिषेधेन भवितव्यमिति भावः । बोभवीतीति । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । ज्ञापकादित्यादि । यदि यङ्लुक्यपि प्रतिषेधः स्याद्, गुणाभावार्थं निपातनं न कुर्यात्, कृतश्च, तस्मादेव ज्ञापयति—यङ्लुक्ययं प्रतिषेधो न भवतीति ।

उतो वृद्धिर्लुकि हलि ॥ गुणे प्राप्त उतो वृद्धिरारभ्यते । यौतीत्यादौ पूर्ववच्छपो लुक् ।

सुनोतीति । श्नुः । यवानीति लोट् । उत्तमपुरुषैकवचनम् । युतः, रुत इति । लट्, तस् । तपरकरणं सूतीत्यत्र मा भूदिति ।

अथ अपि स्तुयाद् राजानमित्यत्र कस्मान्न भवति, अस्ति ह्यत्रापि यासुटस्तिङ्भक्तत्वात् तिङ्ग्रहणेन ग्रहणमिति प्राप्तिः, न च शक्यते वक्तुम्—'क्ङिति च' इति प्रतिषेधो

'नाभ्यस्तस्य' इत्येतदिहानुवर्त्तते—योयोति, रोरोति—इत्येवमाद्यर्थम् ।

**ऊर्णोतेर्विभाषा ॥ ९० ॥**

ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके । प्रोर्णौति, प्रोर्णोति । प्रोर्णौषि, प्रोर्णोषि । प्रोर्णौमि, प्रोर्णोमि ।

'हलि' इत्येव—प्रोर्णवानि ।

**गुणोऽपृक्ते ॥ ९१ ॥**

ऊर्णोतेर्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति । प्रोर्णोत् । प्रोर्णोः ।

'हलि' इति वर्तमाने यदपृक्तग्रहणं क्रियते, तेनैव ज्ञाप्यते—भव-

**पदमञ्जरी**

तेन 'ङिच्च पिन्न भवति' इति 'पिच्च ङिन्न भवति' इति वचनद्वयसद्भावेऽपि 'ङिच्च पिन्न भवति' इत्येतदेवात्र प्रवर्त्तत इति भावः । 'क्ङिति च' इति प्रतिषेधस्त्वत्र न लभ्यते, किं कारणम् ? इक इत्येवमिक्संशब्दनेन या वृद्धिस्तस्याः स प्रतिषेधः, इह तु 'उतः' इति निर्दिष्टस्थानिकत्वादिक्परिभाषा नोपतिष्ठते ॥

*गुणोऽपृक्ते* ॥ ननु च 'हलि' इति वर्त्तते, 'पिति' इति च, अङ्गेन च प्रत्यय उपस्थाप्यते; तत्र हलात्मके प्रत्यये पिति विधीयमानो गुणोऽपृक्त एव भविष्यति, नार्थोऽपृक्तग्रहणेन ? इत्यत आह—*हलीति वर्त्तमान इति* । अपृक्तग्रहणं ह्येवमर्थं

**न्यासः**

भविष्यतीति; यस्मादिग्लक्षणाया वृद्धेः प्रतिषेधोऽसौ, न चेयमिग्लक्षणा; साक्षान्निर्दिष्टस्थानिकत्वात्, 'यस्या हि वृद्धेः स्थानी न निर्दिश्यते सेग्लक्षणा' इत्युक्तम् ? इत्याह—अपि स्तुयादित्यादि । अत्र हि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति सार्वधातुकं ङित्; 'ङिच्च पिन्न भवति' इति ङित्त्वेन पित्त्वस्य बाधितत्वात् । तस्मात् पित्युच्यमाना वृद्धिरिहापि न भवति । अथ योयोति, रोरोतीत्यत्र कस्मान्न भवति, लुकि सति भवति ह्येतदङ्गद्वयमुकारान्तम् ? इत्याह—नाभ्यस्तस्येत्यादि । गतार्थम् । आदिशब्देन [1]नोनोतीत्येवमादीनां ग्रहणम् ॥

ऊर्णोतेर्विभाषा ॥ पूर्वेण नित्यायां वृद्धौ प्राप्तायां विकल्पार्थोऽयमुच्यते । प्रोर्णोतीति । पूर्ववच्छपो लुक् । प्रोर्णवानीति । लोडुत्तमपुरुषैकवचनम् ॥

गुणोऽपृक्ते ॥ विभाषेति निवृत्तम् । पूर्वेण प्राप्तायाः पाक्षिक्या वृद्धेरयमपवादः । ननु हलीत्यनुवर्त्तत एव, तत्र सामर्थ्यादपृक्त एव भविष्यतीति न तदादौ, न हि हलादिसमुदायो हल् भवति, तत् किमपृक्तग्रहणेन ? इत्यत आह—हलीत्यनुवर्त्तमान

१. चोकोति'—इति पाठः ।

त्येषा परिभाषा 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति ॥

## तृणह इम् ॥ ९२ ॥

'तृणह' इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् ।

वर्णाश्रयेऽप्यत्र प्रत्ययलक्षणमिष्यते ।

### पदमञ्जरी

क्रियते-हलादौ मा भूदिति, यदि चेयं परिभाषा न स्याद्, अपृक्तग्रहणं न कुर्यात्, कृतं तु, ज्ञापयति—भवत्येषा परिभाषेति । इदं त्वत्र वक्तव्यम्—तदन्तविधिनिवृत्यर्थमपृक्तग्रहणं कस्मान्न भवतीति, तदन्तविधौ हि लङि मिपोऽम्भावेऽपि प्रसङ्गः स्यात् । ननु भवत्येव तत्र गुणः, कथं भवति ? यदा पूर्वत्र वृद्धिविधावपि तदन्तविधिरेव भवति । तदेतदपृक्तग्रहणं कथं तदादिविधेर्ज्ञापकमिति चिन्त्यम् । 'नापृक्ते' इत्युच्यमानेऽनन्तराया विभाषिताया वृद्धेः प्रतिषेधः स्यात्, नित्या तु वृद्धिः स्यादेव । तस्माद् गुणग्रहणम् ॥

*तृणह इम्* ॥ *तृणेढीति* । इमि कृते श्नमोऽकारेण सह 'आद्गुणः', 'हो ढः', 'झषस्तथोर्धोऽधः', ष्टुत्वम्, ढलोपः । *तृणेक्षीति* । 'षढोः कः सि' । *अतृणेडिति* । लङ्, तिप्सिपोरन्यतरः, हल्ङ्यादिलोपः, ढत्वजश्चचर्त्वानि ।

ननु च 'हलादौ' इत्युच्यते, न चात्र हलादिं पश्यामः ? प्रत्ययलक्षणेन । वर्णाश्रये नास्ति प्रत्ययलक्षणम् ? अत आह—*वर्णाश्रयेऽप्यत्रेति* । यत्र केवलो वर्ण

### न्यासः

इत्यादि । अपृक्तग्रहणं ह्येवमर्थं क्रियते—हलीत्यनुवृत्तेस्तदादौ मा भूदिति । यदि चेयं परिभाषा न स्यात्, अपृक्तग्रहणमनर्थकत्वान्न कुर्यात् । हल्युच्यमानो गुणः कः प्रसङ्गो यत्तदादावपि स्यात् ? नैव प्राप्नोति; तस्या हलात्मकत्वात् । कृतश्चेदमपृक्तग्रहणम्, अतस्तेनास्तीयं परिभाषेति ज्ञाप्यते । अथ 'नापृक्ते' इत्येवं कस्मान्नोक्तम्, किं गुणग्रहणेन, वृद्धौ प्रतिषिद्धायामुत्सर्गेण गुणेनैव सिध्यति ? नैतदस्ति; अनन्तरोक्ताया विभाषायाः प्रतिषेधो विज्ञायेत, तथा च नित्यं वृद्धिः स्यात् ॥

**तृणह इम्** ॥ 'तृह हिंसायाम्' इति रुधादिः, 'तृहू तृन्हू हिंसार्थाः' इति तुदादी—तयोराद्यस्येदं ग्रहणम्, नेतरस्य । तस्य विकरणेन व्यवधानादनन्तरो हल् न सम्भवतीति । तृणेढीति । 'हो ढः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः', तस्येमागमः, 'आद्गुणः' । तृणेक्षीति । 'षढोः कः सि' इति कत्वम् । अतृणेडिति । लङ्, तिप्, हल्ङ्यादिलोपः, ढत्वे कृते 'झलां जशोऽन्ते' इति जश्त्वम्—डकारस्य डकारः, तस्य 'वावसाने' इति चर्त्वम्—टकारः ।

ननु चात्र लुप्तत्वात् सार्वधातुकस्येमागमेन न भवितव्यम्, लुप्तोऽपि तत्र प्रत्ययलक्षणेन भविष्यतीति चेत् ? न; वर्णाश्रये प्रत्ययलक्षणं नास्तीत्यत आह—वर्णाश्रय

हलीति किम् ? तृणहानि ।

'पिति' इत्येव—तृण्ढः[1] ।

'तृणह'—इत्यागतश्नम्को गृह्यते, श्नमि कृते इमागमो यथा स्यादिति ॥

पदमञ्जरी

एव निमित्तं यस्य स वर्णाश्रयः, यथा—गवे हितं गोहितमित्यवादेशः । इह तु पिति सार्वधातुक इति प्रत्यय एव निमित्तम्, हल् तस्य विशेषणम्, तेनासौ प्रत्ययनिमित्तत्वाद्भवत्येवेत्यर्थः । *तृणहानीति* । लोट्, 'मेनिः' । *तृण्ढ इति* । तस्, ढत्वादि पूर्ववत्, 'श्नसोरल्लोपः', अनुस्वारपरसवर्णौ ।

अथ किमर्थं तृहिरागतश्नम्को गृह्यते ? रौधादिकस्य 'तृह हिंसायाम्' इत्यस्य ग्रहणं यथा स्यात्, 'तृहि हिंसायाम्' इत्यस्य तौदादिकस्य ग्रहणं मा भूत् । नास्य पिद्धलादिसार्वधातुक मनन्तरं सम्भवति; विकरणेन व्यवधानात् । ननु चास्यापि यङ्लुगन्तस्य सम्भवति, एवं तर्हि सानुबन्धकत्वात् तस्य ग्रहणं न भविष्यति ? अत आह—*तृणह इतीत्यादि* । यद्यागतश्नम्को न गृह्येत, ततो नाप्राप्ते श्नम्यारभ्यमाण इम् तस्य बाधकः स्यात् । अथापि न बाधकः, एवमपि श्नमि कृते इमितीष्टव्यवस्था न स्यात् । विपर्ययोऽपि स्यात्—पूर्वमिमागमः, पश्चात् श्नमिति । सश्नम्कनिर्देशे तु न श्नमो निवृत्तिर्भवति, इष्टा च व्यवस्था सिध्यति—पूर्वं श्नम्, पश्चादिमिति । अतस्तदर्थमागतश्नम्को गृह्यते । किञ्च—रौधादिकस्यापि यङ्लुगन्तस्य ग्रहणं भवति सश्नम्कनिर्देशादेव ॥

न्यासः

इत्यादि । एवं मन्यते—'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति नानेन सर्वथा वर्णाश्रयस्य प्रत्ययलक्षणस्य प्रतिषेधः क्रियते, किं तर्हि ? 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यत्र प्रत्ययग्रहणस्य प्रयोजनं व्याख्यायते । प्रत्यये लुप्ते द्विविधं कार्यं विज्ञायते—प्रत्ययनिमित्तम्, अप्रत्ययनिमित्तञ्च । तत्र यत् प्रत्ययनिमित्तं तत् प्रत्ययलोपे यथा स्यात्, इतरन्मा भूदित्येवमर्थम् । तेन गवे हितं गोहितमित्यत्र लुप्तायां विभक्ताववादेशो न भवति । अवादेशस्य ह्यचीत्यधिकाराद् वर्णो निमित्तम्, न प्रत्यय एव । इह त्वङ्गाधिकारात् प्रत्यय एव हलादिराश्रीयत इतीमागमस्य प्रत्ययनिमित्तता । तेनासौ प्रत्ययलक्षणेन भवत्येव । यदि ह्यसौ प्रत्ययनिमित्तस्तत् कथं वर्णाश्रयेऽप्यत्रेत्युक्तम् ? अतृणेडित्यत्रोदाहरणे प्रत्ययस्य वर्णमात्रत्वात् प्रत्ययविशेषणत्वेन वा वर्णस्याश्रयणादेवमुक्तम्, न त्वप्रत्ययनिमित्तत्वात्, वर्णस्यापि तकारस्य प्रत्ययत्वापरित्यागात् । तृणहानीत्यत्र तदेव लोडुत्तमपुरुषैकवचनम् । तृण्ढ इति । तस्, 'श्नसोरल्लोपः', पूर्ववड्ढत्वादि, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णो णकारः ।

१. 'तृणु' इति मुद्रितः पाठः ।

## ब्रुव ईट् ॥ ९३ ॥

'ब्रू'—इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति । ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् ।

हलीत्येव—ब्रवाणि । पितीत्येव—ब्रूतः ॥

## यङो वा ॥ ९४ ॥

यङः उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा । शाकुनिको लालपीति । दुन्दुभिर्वावदीति । त्रिधा बद्धो वृषभो

### पदमञ्जरी

ब्रुव ईट् ॥ 'ब्रुवः' इति पञ्चमी, न षष्ठी; व्याख्यानात् । तयाऽचरितार्थया पूर्वत्र कृतार्थायाः सार्वधातुक इति सप्तम्याः षष्ठी प्रकल्प्यते । तदाह—*ब्रुव इत्येतस्मादुत्तरस्येति* । इह ब्रूताद्भवानिति तातङ औपदेशिकेन ङित्त्वेन स्थानिवद्भावकृतं पित्त्वं बाध्यते—'ङिच्च पिन्न भवति' इति, तेनेड् न भवति ॥

*यङो वा* ॥ *लालपीतीत्यादि* । लपिवदिरौतिभ्यो यङ्लुक्, द्विर्वचनम् । रौते-

### न्यासः

अथ किमर्थमिह तृहिरागतश्नम्को गृह्यते, न तृह इत्येवोच्येत ? इत्यत आह—तृणह इत्यादि । यद्यागतश्नम्कस्य ग्रहणं न क्रियेत, ततो नाप्राप्ते श्नम्ययमारभ्यते, देशहेतुकश्च तयोर्विरोधोऽस्तीति श्नम इमा बाधा स्यात् । असत्यामपि बाधायामनिष्टा व्यवस्था स्यात्—पूर्वमिम्, पश्चात् श्नम्; ततश्चानिष्टं रूपं स्यात् । आगतश्नम्कस्य ग्रहणे सश्नम्कस्य तृहेरिमि विधीयमाने समावेशस्तयोर्भवति, इष्टा च व्यवस्था सम्पद्यते—पूर्वं श्नम्, पश्चादिम्; तस्मात् श्नमि कृते सतीमागमो भवेदित्येवमर्थमागतश्नम्कस्तृहिर्गृह्यते ॥

ब्रुव ईट् ॥ 'ब्रुवः' इत्येषा पञ्चम्यकृतार्था पूर्वत्र कृतार्थायाः 'सार्वधातुके' इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति, 'तस्मादित्युत्तरस्य' इति वचनात् । तेन हलादेः पितः सार्वधातुकस्यैवायमीड् विज्ञायत इत्यत आह—ब्रू इत्येतस्मादुत्तरस्य हलादेरित्यादि । कथं पुनर्हल आगमित्वेन तदादिर्लभ्यते, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्युच्यते, न तु यस्य विधिरिति, असति हि तदादिविधावब्रवीदित्यादावेव स्यात्, ब्रवीतीत्यादौ न स्यात् ? नैष दोषः; उत्तरत्र ह्यपृक्तग्रहणात् तदादिविधेः सम्भवो गम्यते, अन्यथा ह्यसति तदादिविधौ विनाप्यपृक्तग्रहणेनापृक्त एव भविष्यति, अपृक्तग्रहणमनर्थकं स्यात् । ब्रवीतीति । पूर्ववच्छपो लुक् । ब्रवाणीति । तदेव लोडुत्तमपुरुषैकवचनम् । ब्रूत इति । लट्, तस् ॥

यङो वा ॥ लालपीतीत्यादि । लपिवदिरौतिभ्यो यङ्; पूर्वयोः 'दीर्घोऽकितः' इत्य-

रोरवीति । महो देवो मर्त्याँ आविवेश ।

न च भवति—वर्वर्ति, चर्कर्ति चक्रम् ।

हलादेः पितः सार्वधातुकस्य यङन्तादभाव इति यङ्लुगन्तस्योदाहरणम् ॥

## तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥

'तु' इति सौत्रोऽयं धातुः, 'रु शब्दे', 'ष्टुञ् स्तुतौ', 'शम उपशमे', 'अम गत्यादिषु'—इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति । उत्तौति, उत्तवीति । उपरौति, उपरवीति । उपस्तौति, उपस्तवीति । शाम्यध्वम्, शमीध्वम् । अभ्यमति, अभ्यमीति ।

### पदमञ्जरी

रभ्यासस्य गुणः । इतरयोर्दीर्घत्वम् । *वर्वर्तीति* । वृते रूपम्, 'रुग्रिकौ च लुकि' इत्यभ्यासस्य रुक् । किं पुनः कारणं यङ्लुगन्तमेवोदाहृतम्, न पुनर्यङन्तम् ? तत्राह—*हलादेरिति* । यङन्ते हि शपा भवितव्यम्, स च हलादिर्न भवति ॥

*तुरुस्तुशम्यमः सार्वधातुके ॥ तु इति सौत्रोऽयं धातुरिति* । स च वृद्धौ वर्त्तते, गत्यर्थ इत्यन्ये, हिंसार्थ इत्यपरे । *उत्तवीतीति* । 'बहुलं छन्दसि' इति शपो लुक् । *शमीध्वमिति* । शमेरन्तर्भावितण्यर्थात्प्रैषे लोट्, व्यत्ययेनात्मनेपदम्, शप्, तस्य 'बहुलं छन्दसि' इति लुक् ।

### न्यासः

भ्यासस्य दीर्घः, रौतेस्तु 'गुणो यङ्लुकोः' इति गुणः, 'यङोऽचि च' इति यङो लुक् । वर्वर्ति, चर्कर्तीति । वृञ्कृञोर्यङ्लुकि 'ऋतश्च' इत्यभ्यासस्य रुगागमः ।

किं पुनः कारणं यङ्लुक्येवोदाह्रियते, न यङन्ते ? इत्याह—हलादेरित्यादि । यङन्ते हि ङित्त्वादात्मनेपदम्, न चात्मनेपदं हलादि पिदस्ति । हलादेः पितः परस्य सार्वधातुकस्याभावान्नेह यङन्तस्योदाहरणम्, किं तर्हि ? यङ्लुगन्तस्य । तत्र हि हलादि पित् सार्वधातुकं सम्भवति, यङ्लुगन्तस्यादादौ 'चर्करीतञ्च परस्मैभाषम्' इति पाठे सति परस्मैपदित्वात्, तेन यङ्लुक्येवोदाह्रियते । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्यसंज्ञा ॥

तुरुस्तुशम्यमः सार्वधातुके ॥ 'तु' इति सौत्रो धातुर्वृद्ध्यर्थे इत्येके, हिंसार्थे इत्यपरे । अस्य च लुग्विकरणत्वं स्मर्यते, तच्च 'बहुलं छन्दसि' इति बहुलग्रहणेन भाषायामपि लुक्सम्पादनाल्लभ्यते । शमीध्वमिति । लोट् । अशमीध्वमिति । लङ् । अभ्यमीतीति । 'अम गत्यादिषु', लट्, तिप् । कथं पुनः शम्यमिभ्यामनन्तरं हलादि सार्व-

शम्यमोः 'बहुलं छन्दसि' इति विकरणलुकि सति हलादि-सार्वधातुकमनन्तरं सम्भवति ।

आपिशलाः—'तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि' इति पठन्ति । तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति ।

'सार्वधातुके'—इत्यनुवर्त्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम् । स्तुवीत, शमीध्वमित्यत्रापि यथा स्यात् इति ॥

**अस्तिसिचोऽपृक्ते ॥ ९६ ॥**

अस्तेरङ्गात् सिजन्ताच्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति । अस्तेः—आसीत् । आसीः । सिजन्तात्—अकार्षीत् ।

**पदमञ्जरी**

*आपिशला इति* । आपिशलेः शिष्याः । *सार्वधातुकास्विति* । टाबन्तम् । तत्र संज्ञात्वेन विनियुक्तं सार्वधातुकग्रहणमनर्थकम्, 'नाभ्यस्तस्य' इत्यादेः सूत्रादनुवृत्तेः ? अत आह—*सार्वधातुके इति वर्तमान इति* । तद्धि सार्वधातुकग्रहणं पितीत्यनेन सम्बद्धम्, अतस्तदनुवृत्तौ तदप्यनुवर्तेत, तन्मातुवृतदित्येवमर्थं पुनः सार्वधातुकग्रहणमिति । 'हलि' इत्येतत्त्वनुवर्त्तत एव; न हि तत्सार्वधातुकग्रहणेन सम्बद्धम् ॥

*अस्तिसिचोऽपृक्ते* ॥ 'अपृक्ते' इति षष्ठ्यर्थे सप्तमी, तेनापृक्तस्यैवायमागमः ।

**न्यासः**

धातुकं सम्भवति, यावता शमेर्व्यवधायकेनैव श्यना भवितव्यम् । अमेरपि शप् क्रियते ? इत्याह—**शम्यमोरित्यादि** । विकरणस्यात्र लुग् 'बहुलं छन्दसि' इत्यनेन ।

**सार्वधातुकास्विति** । स्त्रीलिङ्गनिर्देशः । स्त्रीलिङ्गस्य सार्वधातुकाशब्दस्यापिशलिना संज्ञात्वेन प्रणीतत्वात् ।

अथ सार्वधातुकग्रहणं किमर्थम्, यावता 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यतः सूत्रात् सार्वधातुकग्रहणमनुवर्त्तते ? इत्याह—**सार्वधातुक इत्यनुवर्त्तमान इत्यादि** । तद्धि सार्वधातुकग्रहणं पितीत्यनेन सम्बद्धम् । अतस्तदनुवृत्तौ पिद्ग्रहणमप्यनुवर्तेत, तथा चापिति न स्यात् । तस्मादपित्यपि यथा स्यादित्येवमर्थं सार्वधातुकग्रहणं क्रियते ॥

**अस्तिसिचोऽपृक्ते** ॥ **अपृक्त इति** । सुब्व्यत्ययेन षष्ठ्यर्थे सप्तमी, तेनायमपृक्तस्यैवेट् । अस्तिग्रहणं लङर्थम् । **आसीदिति** । 'अस भुवि', लङ्, अदादित्वाच्छपो लुक्, 'आडजादीनाम्', इत्याट्, 'आटश्च' इति वृद्धिः । **अकार्षीदिति** । सिचि वृद्धिः ।

असावीत्¹, अलावीत् । अपावीत्¹ ।

अपृक्ते इति किम् ? अस्ति । अकार्षम् ।

'आहिभुवोरीटि प्रतिषेधः' इति स्थानिवद्भावप्रतिषेधः, तेनेह न भवति–आत्थ । अभूदिति ॥

## बहुलं छन्दसि ॥ ९७ ॥

### पदमञ्जरी

*आसीदिति* । 'अस् भुवि', शपो लुक्, तिप ईट् । *अलावीदिति* । लुङ्, 'इट ईटि' इति सिचो लोपः ।

*आहिभुवोरीट्प्रतिषेध इत्यादि* । स्थानिवत्सूत्र एतद्वार्त्तिकम् । आहिभुवोः स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः, ईट्प्रतिषेधः प्रयोजनमित्यर्थः । *आत्थेति* । 'ब्रुवः पञ्चानाम्' इत्यादिना सिपस्थल्, ब्रुव आहादेशः, 'आहस्थः' इति हकारस्य थत्वम्, तस्य 'खरि च' इति चर्त्वम्–तकारः । *अभूदिति* । लुङ्, 'अस्तेर्भूः' 'गातिस्था' इत्यादिना सिचो लुक् । अत्र स्थानिवद्भावप्रतिषेधादस्त्याश्रयस्तावदीण्न भवति । सिजाश्रयोऽपि न भवति, स्थानिवद्भावप्रतिषेधसामर्थ्यात् । अस्त्वेवमस्त्यादेशे भुवि, शुद्धे तु भवतौ सिजाश्रय ईट् प्राप्नोति, तस्मादीडेवात्र प्रतिषेध्यः । आहिविषये परिहारान्तरं ज्ञापकात्सिद्धम्, यदयं झलादिप्रकरणे 'आहस्थः' इति थत्वं शास्ति । ननु च भूतपूर्वगत्यर्थमेतत्स्यात्–झलादिर्यो भूतपूर्वस्तत्रेति ? नैतदस्ति; एवं तर्हि पञ्चानामपि तिबादीनां भूतपूर्वझलादित्वमिति सर्वत्र थत्वप्रसङ्गः, ततश्चाथमेव विदध्यात् ॥

बहुलं छन्दसि ॥ *आ इति* । अस्तेर्लङ्, तिप्, शपो लुप्, रुत्वविसर्जनीयौ ।

### न्यासः

अलावीत्, अपावीदिति । 'इट ईटि' इति सिचो लोपः । आत्थेति । अत्र ब्रुव उत्तरस्य सिपः'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति थलि कृते ब्रुवश्चाहादेशे कृते तस्य स्थानिवद्भावे सति ब्रूञ्ग्रहणेन ग्रहणात् थलोऽपि सार्वधातुकग्रहणेन ग्रहणादीट् प्राप्नोति । अभूदिति । अस्तेः सिच्, 'अस्तेर्भूः' इति भूभावे तस्य स्थानिवद्भावे सत्यस्तिग्रहणेन ग्रहणादीट् प्राप्नोति, स कस्मान्न भवति ? इत्याह—आहिभुवोरित्यादि । ईटि प्रतिषेध इति । आहेर्भुवश्चेटि कर्त्तव्यं स्थानिवद्भावस्य प्रतिषेधः । तेनेह न भवति–आत्थेति । 'आहस्थः' इति हकारस्य थकारः, तस्य 'खरि च' इति तकारः । अभूदिति । 'गातिस्था' इति सिचो लुक् ॥

बहुलं छन्दसि ॥ सर्वमा इति । अस्तेर्लङ्, पूर्ववदाट्, सिपो हल्ङ्यादिलोपः,

---

१–१. मुद्रितपुस्तके नास्ति ।

अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये । आप एवेदं सलिलं सर्वमाः । आसीदिति स्थाने आः क्रियापदम् । अहरेवासीन्न रात्रिः ।

सिचः खल्वपि–गोभिरक्षाः । प्रत्यञ्चमत्साः ।

अभैषीर्मा पुत्रकेति च भवति; छान्दसत्वात् । माङ्योगेऽप्यडागमो भवति–अक्षाः, अत्सा इति । सिच इडभावश्च ॥

**रुदश्च पञ्चभ्यः ॥ ९८ ॥**

रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति । अरोदीत्, अरोदीः । अस्वपीत्, अस्वपीः । अश्वसीत्,

**पदमञ्जरी**

*अक्षाः, अत्सा इति* । 'क्षर सञ्चलने', 'त्सर छद्मगतौ', लुङ्, तिपो हल्ङ्यादिलोपः, 'रात्सस्य' इति सिचो लोपः, धातुरेफस्य विसर्जनीयः । *छान्दसत्वादिति* । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यनेन न केवलममाङ्योगेऽडाटोरभावः क्रियते, किं तर्हि ? माङ्योगे तत्सद्भावोऽपीति भावः । *इडभावश्च सिच इति* । छान्दसत्वादित्यपेक्षते ॥

*रुदश्च पञ्चभ्यः* ॥

रुदिः स्वपिः श्वसिरनिर्जक्षिः पञ्च रुदादयः ।

**न्यासः**

सकारस्य रुत्वविसर्जनीयौ ।

**गोभिरक्षाः, प्रत्यञ्चमत्सा इति** । 'क्षर सञ्चलने', 'त्सर च्छद्मगतौ', हल्ङ्यादिना सिपो लोपः, 'अतो ल्रान्तस्य' इति वृद्धिः, पूर्ववद्विसर्जनीयः । **अभैषीरिति** । 'ञिभी भये', सिचि वृद्धिः ।

**अथाभैषीर्मा पुत्रकेत्यत्र कथमडागमः, यावता 'न माङ्योगे' इति प्रतिषिद्धोऽसौ, इह चाक्षाः, अत्सा इत्यत्र सिच ईडागमः कस्मान्न भवति ? इत्याह—छान्दसत्वादित्यादि** । अक्षाः, अत्सा इत्यत्र चेडागमाभाव इति च्छान्दसत्वादिति प्रकृतेन सम्बन्धः ।

'वा छन्दसि' इति वक्तव्ये बहुलग्रहणमुत्तरार्थम् । उत्तरार्थतां चास्योत्तरत्र प्रतिपादयिष्यामः ॥

**रुदश्च पञ्चभ्यः** ॥ 'रुद' इति सुब्व्यत्ययेन बहुवचनस्यैकवचनम् । एतच्च 'पञ्चभ्यः' इति बहुवचनाद् विज्ञायते । 'रुदादिभ्यः सार्वधातुके' इतीटि प्राप्ते तदपवाद ईडागमो विधीयते । 'रुदिर् अश्रुविमोचने', 'ञिष्वप् शये', 'श्वस प्राणने', 'अन च', 'जक्ष भक्षहसनयोः'—इत्येते रुदादय आदादिकाः । अरोदीदिति । लङ । प्राणीदिति ।

अश्वसीः । प्राणीत्, प्राणीः । अजक्षीत्, अजक्षीः ।

पञ्चभ्य इति किम् ? अजागर्भवान् ।

'अपृक्तस्य' इत्येव—रोदिति ॥

## अड् गार्ग्यगालवयोः ॥ ९९ ॥

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन । अरोदत्, अरोदः । अस्वपत्, अस्वपः । अश्वसत्, अश्वसः । प्राणत्, प्राणः । अजक्षत्, अजक्षः ।

गार्ग्यगालवयोर्ग्रहणं पूजार्थम् ॥

## अदः सर्वेषाम् ॥ १०० ॥

'अद भक्षणे'—अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आदः ।

'अपृक्तस्य' इत्येव—अत्ति । असि ॥

## अतो दीर्घो यञि ॥ १०१ ॥

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः ।

### पदमञ्जरी

रुदः इति बहुवचनस्थान एकवचनम् । 'पञ्चभ्यः' इति निर्देशादाद्यर्थावगतिः ॥

*अड् गार्ग्यगालवयोः* ॥ *गार्ग्यगालवयोर्ग्रहणं पूजार्थमिति* । न विकल्पार्थम्; विधानसामर्थ्यादिवाडीटोर्विकल्पस्य सिद्धत्वात् । अनेकाचार्यग्रहणमप्यत एव ॥

*अदः सर्वेषाम्* ॥ सर्वेषांग्रहणं नित्यार्थम्, अन्यथा गार्ग्यगालवग्रहणमिह विकल्पार्थं सम्भाव्येत ॥

### न्यासः

'अनितेः' इति णत्वम् । अजागर्भवानिति । जागर्त्तिः पञ्चभ्यः परेणायं पठ्यते । गुणे रपत्वे च कृते हल्ङ्यादिलोपः ॥

अड् गार्ग्यगालवयोः ॥ पूर्वेणेटि प्राप्तेऽडागमो विधीयते । गार्ग्यगालवग्रहणं पूजार्थम्, न तु विकल्पार्थम् । अडीटोरादिलिङ्गत्वादेकविषयत्वाच्च न सम्भवति; समुच्चय इत्यन्तरेणाप्याचार्यग्रहणं विकल्पस्य सिद्धत्वात् ॥

अदः सर्वेषाम् ॥ सर्वेषां ग्रहणं पूजार्थम्, न तु नित्यार्थम्; गार्ग्यगालवग्रहणस्याविकल्पार्थत्वात् ।

पचामि, पचावः, पचामः । पक्ष्यामि, पक्ष्यावः, पक्ष्यामः ।

अत इति किम् ? चिनुवः, चिनुमः । यञीति किम् ? पचतः । पचथः ।

'सार्वधातुके' इत्येव—अङ्गना, केशवः ।

केचिदत्र 'तिङि' इत्यनुवर्त्तयन्ति, तेषां भववानिति क्वसौ सार्वधातुकदीर्घो न भवति ॥

पदमञ्जरी

*अतो दीर्घो यञि* ॥ *केचिदत्र तिङीत्यनुवर्त्तयन्तीति* । 'भूसुवोस्तिङि' इत्यतः । *भववानिति* । भवतेः क्वसुः, तस्य 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप्, 'लिटि धातोः' इत्यत्र धातुग्रहणाच्छबन्तस्य द्विर्वचनाभावः । ये तु 'सार्वधातुके' इत्येवानुवर्त्तयन्ति, तेषां छान्दसत्वाद्दीर्घाभावः । अथ प्रकृतोऽडागम एव कस्मान्न विधीयते—'अतो यञि' इति, अकारान्तादङ्गादुत्तरस्य यञादेस्तिङोऽडागमो भवति, पच अवस्, सवर्णदीर्घत्वे पचाव इति सिद्धम्, विधानसामर्थ्याच्च 'अतो गुणे' इति पररूपत्वं न भविष्यति ? नैवं शक्यम्; इह ह्यधुक्षावहि, अधुक्षामहीति 'क्सस्याचि' इति लोपः प्रसज्येत । इह चातिजराभ्यामिति जरसभावः । एवमपि दीर्घग्रहणमनर्थकम्, आदित्याकार एव विधेयः ? इह तर्हि प्रयोजनम्—अपाक्षी रोदनं देव दत्तः । ननु पचामि भोरित्यत्रापि 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतः प्राप्नोति ? स मा भूद्दीर्घ एव यथा स्यादिति दीर्घग्रहणम् ।

अत इति तपरकरणमुत्तरार्थम्, 'बहुवचने झल्येत्' इत्येत्वं खट्वाभिरित्यत्र मा भूत् ॥

न्यासः

अतो दीर्घो यञि ॥ तपकरणमुत्तरार्थम् । खट्वाभिरित्यत्र 'बहुवचने झल्येत्' इत्येत्त्वं मा भूदित्येवमर्थम् ।

अङ्गनेति । प्रशस्तान्यङ्गान्यस्याः सन्तीति लोमादिना नप्रत्ययः । केशव इति । केशा यस्य सन्तीति 'केशाद् वोऽन्यतरस्याम्' मिति वप्रत्ययः ।

केचिदत्र तिङीत्यनुवर्त्तयन्तीति । 'भूसुवोस्तिङि' इत्यतः । तेषां भववानिति क्वसौ सार्वधातुके दीर्घत्वेन न भवितव्यमिति; क्वसोरतिङन्तत्वात् । भववानिति । भवतेर्लिट्, क्वसुः, 'छन्दस्युभयथा' इति तस्य पक्षे सार्वधातुकत्वम्, तेन 'कर्त्तरि शप्' भवति, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्याब्यादिसंयोगान्तलोपौ ।

आदिति वक्तव्ये दीर्घग्रहणम्—दीर्घ एव यथा स्याद् यदन्यत् प्राप्नोति, तन्मा भूदिति । किञ्चान्यत् प्राप्नोति ? 'विचार्यमाणानाम्', 'अनन्तरस्याप्येकैकस्य प्राचाम्' 'प्रश्नाख्यानयोः' इति प्लुतः । अथ प्रकृतोऽडागमः कस्मान्न विधीयते ? तत्राप्यकः

## सुपि च ॥ १०२ ॥

'अतो दीर्घो यञि' इत्यनुवर्त्तते । सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति । वृक्षाय । प्लक्षाय । वृक्षाभ्याम् । प्लक्षाभ्याम् ।

'अतः' इत्येव—अग्निभ्याम्[1] ।

'यञि' इत्येव—वृक्षस्य । प्लक्षस्य ॥

## बहुवचने झल्येत् ॥ १०३ ॥

बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षेभ्यः । प्लक्षेभ्यः । वृक्षेषु । प्लक्षेषु ।

बहुवचन इति किम् ? वृक्षाभ्याम् । प्लक्षाभ्याम् । झलीति किम् ? वृक्षाणाम् । सुपीत्येव—यजध्वम् । पचध्वम् ॥

## ओसि च ॥ १०४ ॥

ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षयोः स्वम् । प्लक्षयोः स्वम् । वृक्षयोर्निधेहि । प्लक्षयोर्निधेहि ॥

### पदमञ्जरी

*सुपि च* ॥ *वृक्षायेति* । सन्निपातपरिभाषाया अनित्यत्वादत्र दीर्घत्वम् । अनित्यत्वं च 'कष्टाय' इति निर्देशादवसितम् ॥

*बहुवचने झल्येत्* ॥ *वृक्षाणामिति* । 'झलि' इत्यनुच्यमानेऽग्नीनामित्यादौ सावकाशम् 'नामि' इति दीर्घत्वं बाधित्वेदमेत्वमकारान्तेषु स्यादिति भावः ॥

### न्यासः

सवर्णे दीर्घत्वेन सिद्ध्यत्येव । न च 'अतो गुणे' पररूपत्वं प्राप्नोतीत्याशङ्कनीयम्, अङ्विधानसामर्थ्यात् । इहाधुक्षावहीति 'क्सस्याचि' इति लोपः स्यात्, अतिजराभ्यामित्यत्राचीति जरस्भावः स्यात्, तन्निवृत्त्यर्थं दीर्घग्रहणं कृतम् । स चात्र प्लुतः प्रसज्येत ॥

सुपि च ॥ बहुवचने झल्येत् ॥ ननु च वृक्षाणामित्यत्र 'नामि' इति दीर्घत्वं बाधकं भविष्यति, तत् किं तन्निवृत्त्यर्थेन झल्ग्रहणेन ? नैतदस्ति; 'नामि' इति ह्यग्नीनामित्यत्र सावकाशम्, तत्रासति झल्ग्रहणे दीर्घत्वं बाधित्वा परत्वादेत्त्वमेव स्यात् ।

पचध्वम्, यजध्वमिति । लोट्, टेरेत्त्वम्, 'सवाभ्यां वामौ' इत्यामादेशः ॥

---

१. 'वायुभ्याम्' इत्यधिकं पुस्तकान्तरे ॥

## आङि चापः ॥ १०५ ॥

'आङ्' इति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते । तस्मिन्नाङि परतश्चकारादोसि च आबन्तस्याङ्गस्यैकारादेशो भवति । खट्वया, मालया । खट्वयो, मालयोः । बहुराजया, कारीषगन्ध्यया । बहुराजयोः, कारीषगन्ध्ययोः ।

आप इति पितो ग्रहणं किम् ? कीलालपा ब्राह्मणेन । कीलालपो-ब्राह्मणकुलयोः ।

'ङ्याब्ग्रहणेऽदीर्घग्रहणम्' इति वचनादिह न भवति—अतिखट्वेन ब्राह्मणकुलेन ॥

पदमञ्जरी

*आङि चापः* ॥ खट्वया, खट्वयोरित्यादीनि टाब्डाप्चापां क्रमेणोदाहरणानि । *कीलालपेति* । कीलालं पिबति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्, तृतीयैकवचने 'आतो धातोः' इत्यालोपः, असति तु पिद्विशिष्टस्य ग्रहणे कीलालपः पश्येत्यादौ चरितार्थं लोपं बाधित्वा परत्वादाङोसोरिदमेवैत्वं स्यात् ।

*ङ्याब्ग्रहणेऽदीर्घग्रहणादिति* । यत्र ङ्यापौ गृह्येते तत्र दीर्घयोर्ग्रहणम्, न ह्रस्वयोः । स्थानिवद्भावे तु प्रसङ्गः, तत्र स्थानिवत्प्रतिषेधसूत्रप्रस्तावे वार्त्तिकम्—'ङ्याब्ग्रहणेऽदीर्घः' इति, ङ्यापोर्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति । तत्रा-

न्यासः

**ओसि च ॥ आङि चापः ॥** आङिति पूर्वाचार्यनिर्देशेनेत्यादि । आचार्या हि पूर्वं आङिति तृतीयैकवचननिर्देशं कुर्वन्ति स्म । तस्मात् तदीयेनाङिति निर्देशेन तृतीयैकवचनं गृह्यते । खट्वयेति । टाबन्तस्योदाहरणम् । बहुराजयेति । डाबन्तस्योदाहरणम् । 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् । कारीषगन्ध्ययेति । चाबन्तस्य । करीषस्येव गन्धोऽस्य 'उपमानाच्च' इतीत्—करीषगन्धिः, 'तस्यापत्यम्' इत्यण्, तस्य 'अणिञोरनार्षयोः' इत्यादिना ष्यङ्, तदन्ताद् 'यङश्चाप्' इति चाप् ।

कीलालपेति । कीलालं पिबतीति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्, तदन्तात् तृतीयैकवचनम्, 'आतो धातोः' इत्याकारलोपः ।

अथेह कस्मान्न भवति—खट्वामतिक्रान्तेनातिखट्वेनेति, उपसर्जनह्रस्वत्वे कृते स्थानिवद्भावात् तस्य प्राप्नोति ? इत्याह—ङ्याब्ग्रहणमित्यादि । केचिदाहुः—ङ्याब्ग्रहणे दीर्घग्रहणमित्येतद् वचनं कर्त्तव्यम्, तेन ह्रस्वत्वे कृते न भवति । अपरे त्वाहुः—'हल्ङ्याब्भ्यो दीर्घात्' इति योगविभागः कर्तव्यः, यावच्छास्त्रे ङ्यापोः कार्यं तत्

## सम्बुद्धौ च ॥ १०६ ॥

'आपः' इति वर्त्तते। सम्बुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति। हे खट्वे ! हे बहुराजे ! हे कारीषगन्ध्ये ! ॥

## अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥

'सम्बुद्धौ' इति वर्त्तते। अम्बार्थानामङ्गानां नद्यन्तानां ह्रस्वो भवति सम्बुद्धौ परतः। हे अम्ब ! हे अक्क ! हे अल्ल !

नद्याः खल्वपि—हे कुमारि। हे शार्ङ्गरवि ! हे ब्रह्मबन्धु ! हे वीरबन्धु !

❀ डलकवतीनां प्रतिषेधो वक्तव्यः ❀। हे अम्बाडे ! हे अम्बाले ! हे अम्बिके !

❀ छन्दसि वेति वक्तव्यम् ❀। हे अम्बाड, हे अम्बाडे ! हे हे अम्बाल, हे अम्बाले ! हे अम्बिक, हे अम्बिके !

पदमञ्जरी

र्थादिदमुक्तं भवति—ङ्यापोर्ग्रहणे दीर्घयोर्ग्रहणमिति, तदिदं वृत्तिकारेण दर्शितम् ॥

*अम्बार्थनद्योर्ह्रस्वः* ॥ अम्बार्थाः=मात्रर्थाः।

*डलकवतीनामिति*। अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः, श्रुत्यपेक्षो वा स्त्रीलिङ्गनिर्देशः—'डलकवतीनां श्रुतीनामित्यर्थः' इति। असंयुक्ताश्च डलका गृह्यन्ते; तेनाक्क, अल्लेति ह्रस्वो भवत्येव।

न्यासः

सर्वं दीर्घयोर्यथा स्यात्, ह्रस्वयोर्मा भूदिति; ततः 'सुतिस्यपृक्तम्' इति द्वितीयो योगः, तत्र 'हल्ङ्याब्भ्यः' इत्यनुवर्त्तत इति।

चकारः 'ओसि च' इत्यनुकर्षणार्थः ॥

सम्बुद्धौ च ॥ अम्बार्थनद्योर्ह्रस्वः ॥ पूर्वस्यायमपवादः। अम्बार्थाः=मात्रर्थाः।

डलकवतीनामित्यादि। डलका यासां श्रुतीनां सन्तीति ता डलकवत्यः। असंयोगावयवभूता डलका इह गृह्यन्ते। अन्यथा हे अक्क, हे अल्ल—इत्यत्रापि स्यात्। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थः। उत्तरयोरपि वक्तव्यशब्दयोरयमेवार्थो वेदितव्यः। तत्रेदं व्याख्यानम्—'बहुलं छन्दसि' इत्यतो बहुलग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते, तेन सर्वं प्रतिषेधादिकं कार्यमपि भविष्यतीति।

* तलो ह्रस्वो वा ङिसम्बुद्ध्योरिति वक्तव्यम् * । देवते भक्तिः, देवतायां भक्तिः । हे देवत, हे देवते ! । छन्दस्येव ह्रस्वत्वमिष्यते ।

* मातॄणां मातच् पुत्रार्थमर्हते * । मातणां मातजादेशो वक्तव्यः सम्बुद्धौ, पुत्राय पुत्रमभिधातुम्, कीदृशाय ? अर्हते । मात्रा-व्यपदेशमर्हति श्लाघनीयत्वाद्यः पुत्रस्तदर्थम् । हे गार्गीमात ! 'नद्यृतश्च' इति समासान्तापवादो मातजादेशः । चित्करणमन्तोदात्तार्थम् ॥

**ह्रस्वस्य गुणः ॥ १०८ ॥**

'सम्बुद्धौ' इति वर्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति सम्बुद्धौ परतः । हे अग्ने ! हे वायो ! हे पटो !

**पदमञ्जरी**

देवते *भक्तिरिति* । ह्रस्वत्वे कृते, 'ङ्याब्ग्रहणेऽदीर्घः' इति स्थानिवत्त्वनिषेधाद्याडागमो ङेरामपि न भवतः ।

*मातॄणामिति* । पूर्वपदभेदेन बह्वो मातृशब्दा इति बहुवचनम् । *पुत्रार्थमिति* । पुत्रमभिधातुं यो मातृशब्द उपादीयत इत्यर्थः । बहुव्रीहौ च वर्तिपदैरन्यपदार्थोऽभिधीयत इति तत्रैवयमादेशः । *कीदृशाय पुत्रायेति* । समासे गुणीभूतस्यापि पुत्रस्य बुद्ध्या प्रविभज्य निर्देशः, यथा–'अथ शब्दानुशासनम्, केषां शब्दानाम्' इति । *मात्रा व्यपदेशमर्हतीति* । यः पुत्रः श्लाघ्यगुणत्वात्कुलसम्भूतया मात्रा व्यपदेशमर्हतीत्यर्थः । यत्र तु पितुरसंविज्ञानेन मात्रा व्यपदेशस्तत्र न भवति, एतच्चार्हत इति प्रशंसायां लटः शत्रादेशविधानाल्लभते । *समासान्तापवाद इति* । नाप्राप्ते तस्मिन्नस्यारम्भात् ॥

*ह्रस्वस्य गुणः* ॥ *ह्रस्वविधानसामर्थ्यादिति* । ननु ह्रस्वविधानं तस्य गुणविधानार्थमेव स्यात्, अन्यथा ह्रस्वत्वाभावाद् गुणो न स्यादत आह्–*यदीति* । ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति लाघवार्थं साक्षादेव गुणं

**न्यासः**

अर्हत इति । प्रशंसाभाजनभूतायेत्यर्थः । गार्गीमातेति । यो गार्ग्या मात्रा व्यपदेशेन प्रशंसामर्हति स एवमुच्यते ॥

ह्रस्वस्य गुणः ॥ ह्रस्वग्रहणं प्रकृताङ्गविशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह—ह्रस्वान्तस्येत्यादि । एवमुत्तरत्रापि तदन्तविधिर्वेदितव्यः ।

अथ हे कुमारि, हे ब्रह्मबन्ध्वित्येवमादीनां कस्मान्न भवति ? इत्याह–हे कुमारीत्यादि । यदि ह्रस्वत्वे कृते गुणः स्यात्, ह्रस्वकरणमनर्थकं स्यात् । ननु च गुणार्थमेतत्

हे कुमारि, हे ब्रह्मबन्धु—इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति । यदि गुण इष्टः स्यात्, 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येवं ब्रूयात् ॥

जसि च ॥ १०९ ॥

जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति । अग्नयः । वायवः । पटवः । धेनवः । बुद्धयः ।

❀ जसादिषु छन्दसि वावचनं प्राग्णौ चङ्युपधाया ह्रस्व इत्येतस्मात् ❀ । इतः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम् । किं प्रयोजनम् ? अम्बे, दर्वि, शतक्रत्वः, पश्वे नृत्यः, किकिदीव्या । अम्बे, अम्ब । पूर्णा दर्वि, पूर्णा दर्वी । अधा शतक्रत्वः, शतक्रतवः । पश्वे नृत्यः, पशवे नृत्यः । किकिदीव्या, किकिदीविना ॥

पदमञ्जरी

विदध्यादित्यर्थः । ननु 'नदीह्रस्वयोर्गुणः' इत्युच्यमाने 'जसि च' इत्यत्र नद्या अप्यनुवृत्तिः स्यात्, एकसमासनिर्दिष्टत्वात् ? नैष दोषः; एकसमासनिर्दिष्टयोरप्येकदेशोऽनुवर्त्तते, तद्यथा–'संख्याव्ययादेर्ङीप्', 'दामहायनान्ताच्च' इत्यत्र संख्याग्रहणमनुवर्त्तते, नाव्ययग्रहणम् ॥

*जसि च* ॥ *जसादिष्विति* । आदिशब्दः प्रकारे, तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम् । *दर्वीति* । 'कृदिकारादक्तिनः' इति ङीष्विकल्पमनपेक्ष्यैतदुक्तम्, तत एव तु सिद्धं रूपद्वयम् । *शतक्रत्व इति* । 'जसि च' इति गुणाभावपक्षे 'प्रथमयोः' इति पूर्वसवर्णदीर्घोऽपि 'वा छन्दसि' इति वचनान्न भवतीति यणादेशः प्रवर्त्तते । *किकिदीव्येति* । 'आङो नास्त्रियाम्' इति नाभावो न भवति । किकिदीविशब्दः

न्यासः

स्यात्, असति हि तस्मिन् 'ह्रस्वस्य गुणः' इति गुणो न स्यात्, अह्रस्वान्तत्वात् ! इत्याह–यदीत्यादि । एवं प्रक्रियागौरवं परिहृतं भवतीति भावः ॥

जसि च ॥ जसादिष्वित्यादि । आदिशब्दः प्रकारे । जस्प्रकारेषु प्रत्ययेष्वित्यर्थः । इतः प्रकरणादिति । 'अम्बार्थनद्योर्ह्रस्वः' इत्येवमादिकात् । छन्दसीति वक्तव्यमिति । छन्दसि विषये वा कार्यं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु तदेव बहुलवचनमाश्रित्य कर्त्तव्यम् । अम्बे इत्यादि । 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो न भवति । दर्वीत्यत्र ह्रस्वस्य गुणः । शतक्रत्व इत्यत्रापि 'जसि च' इति । पश्वे इति । 'घेर्ङिति' इति गुणः । किकिदीव्या इति । अत्र 'आङो नास्त्रियाम्' इति नाभावः ॥

ऋतो ङिसर्वनामस्थानयोः ॥ ११० ॥

'गुणः' इति वर्त्तते । ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति । ङौ—मातरि, पितरि, भ्रातरि, कर्तरि । सर्वनामस्थाने—कर्तारौ, कर्तारः । मातरौ, पितरौ, भ्रातरौ ।

तपरकरणं[1] मुखसुखार्थम्[1] ॥

घेर्ङिति ॥ १११ ॥

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति । अग्नये । वायवे । अग्नेरागच्छति, वायोरागच्छति । अग्ने स्वम् । वायोः स्वम् ।

घेरिति किम् ? सख्ये, पत्ये । ङितीति किम् ? अग्निभ्याम् ॥

'सुपि' इत्येव—पट्वी । कुरुतः ॥

पदमञ्जरी

'क्वविघृष्वि' इत्युणादिषु निपातितः ॥

*ऋतो ङिसर्वनामस्थानयोः ॥ तपरकरणं मुखसुखार्थमिति* । ङिसर्वनामस्थानयोर्दीर्घान्तस्यासम्भवात् । धात्वनुकरणमपि न सम्भवति, 'ॠत इद्धातोः' इतीत्वविधानात् । कर्तॄणीत्यादावपि नुमः पूर्वान्तत्वादसम्भवः ॥

*घेर्ङिति ॥ घ्यन्तस्याङ्गस्येति* । 'वर्णमात्रस्य घिसंज्ञा' इत्याश्रित्येदमुक्तम् । 'तदन्तस्य संज्ञा' इत्यत्र तु पक्षे घ्येकदेशे वर्णे घिशब्दो द्रष्टव्यः । एतेन नद्यन्तादिति व्याख्यातम् ।

*सुपीत्येवेति* । 'सुपि च' इत्यतः । *पट्वीति* । 'वातो गुणवचनात्' इति । *कुरुत इति* । यस्य नदीसंज्ञा नास्ति स सर्वोऽपि घिसंज्ञः, न लिङ्गवदेवेति । कुरुशब्दस्य घिसंज्ञा, तस्य तसि ङिति गुणो न भवति । एतच्च ङिच्छब्दे बहुव्रीहिमाश्रित्योच्यते । यदि तु ङश्चासाविच्चेति कर्मधारयस्तदा नैवात्र प्रसङ्गः, 'सार्वधातुकमपित्' इत्यनेन हि बहुव्रीहौ ङितो यत्कार्यं तदतिदिश्यते, न चैतावता तसेङ्कार आदिर्भवति ॥

न्यासः

ऋतो ङिसर्वनामस्थानयोः ॥ तपरकरणं मुखसुखार्थमिति । न हि ङिसर्वनामस्थानयोर्दीर्घ ॠकारः सम्भवति यस्तपरेण निवर्त्येत ॥

घेर्ङिति ॥ सख्ये, पत्ये इति । सखिपतिशब्दौ घिसंज्ञकौ न भवतः; 'शेषो घ्यसखि' इति पर्युदासात्, 'पतिः समास एव' इति नियमाच्च । पट्वीति । 'वोतो गुणवचनात्'

१–१. पाठोऽयं मुद्रितपुस्तके टिप्पण्यां स्थापितम् ।

## आण्नद्याः ॥ ११२ ॥

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याडागमो भवति। कुमार्यै, ब्रह्मबन्ध्वै। कुमार्याः, ब्रह्मबन्ध्वाः ॥

## याडापः ॥ ११३ ॥

आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति।

### पदमञ्जरी

*आण्नद्याः* ॥ 'नद्याः' इति पञ्चम्यकृतार्था ङितीति सप्तम्याः षष्ठीं प्रकल्पयति, तेन ङित एवायमागमो विज्ञायत इत्याह—*नद्यन्तादङ्गादुत्तरस्येति* । *कुमार्या इति* । 'आटश्च' इति वृद्धिः। अथ दीर्घोच्चारणं किमर्थम्, अडेवोच्येत, 'वृद्धिरेचि' इति वृद्धया सवर्णदीर्घत्वेन च कुमार्यै, कुमार्या इति सिद्धम्? न सिद्धयति; 'अतो गुणे' पररूपत्वं प्राप्नोति। अड्वचनसामर्थ्यान्न भविष्यति? अस्त्यड्वचने प्रयोजनम्, किम्? श्रियै, श्रिया इत्यत्र 'सावेकाचः' इत्याद्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति। आगमानुदात्तत्वं हि प्रत्ययस्वरमिव विभक्तिस्वरमपि बाधते, विशेषतोऽत्राड्वचनसाध्यात् ॥

*याडापः* ॥ दीर्घोच्चारणं किमर्थम्, न यडेवोच्येत, वृद्धौ कृतायां सवर्णदीर्घत्वे च खट्वायै, खट्वाया इति सिद्धम्? न सिध्यति; 'अतो गुणे' पररूपत्वं प्राप्नोति,

### न्यासः

इति ङीष्। अत्र गुणो न भवति; 'सुपि च' इत्यतः सुपीत्यनुवृत्तेः। कुरुत इति। करोतेस्तस्, उप्रत्ययः, धातोर्गुणः, रपरत्वम्, 'अत उत् सार्वधातुके' इत्युत्त्वम्। अत्रापि सुपीत्यनुवृत्तेस्तसि परतो विकरणान्तस्य न भवति गुणः ॥

आण्नद्याः ॥ 'नद्याः' इति पञ्चमी, सा चाकृतार्था पूर्वत्र कृतार्थाया ङितीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। तेन ङित एवायमाडागमो विज्ञायते, इत्याह—नद्यन्तादङ्गादुत्तरस्येत्यादि। कुमार्यै इत्येवमादौ 'आटश्च' इति वृद्धिः।

अथ दीर्घोच्चारणं किमर्थम्, न अडेवोच्येत, 'वृद्धिरेचि' इति वृद्धया सवर्णदीर्घत्वेन सिद्धयत्येव; कुमार्यै, कुमार्या इत्यत्र 'अतो गुणे' पररूपत्वं प्राप्नोतीत्येतच्च नाशङ्कनीयम्, पररूपत्वं ह्यत्र वचनसामर्थ्यान्न भविष्यति? नैष दोषः; अस्ति ह्यन्यद्वचनस्य प्रयोजनम्। किं तत्? श्रियै, श्रिया इत्यत्र 'सावेकाचस्तृतीयादिर्विभक्तिः' इत्युदात्तत्वं मा भूत्। आगमा आद्युदात्ता भवन्तीत्यनुदात्तत्वं यथा स्यादिति। शक्यते ह्येकादेशोऽन्तादिवद्भावादागमग्रहणेन ग्रहीतुम्। आगमानुदात्तत्त्वञ्च यथा प्रत्ययस्वरम्-लविता, लवितुमित्यादौ बाधते, तथा विभक्तिस्वरमपि बाधेत। तस्माद् 'आटश्च' इति वृद्धयर्थमेतत् ॥

याडापः ॥ खट्वायामिति। 'वृद्धिरेचि' इति वृद्धिः। खट्वाया इत्यत्राकः सवर्णे

खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः ।

अतिखट्वाय—इत्यत्राकृते दीर्घे ङ्याब्ग्रहणे 'अदोर्घः' इति वचनाद्याडागमो न भवति, कृते तु लाक्षणिकत्वात् ।

**सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥**

सर्वनाम्न आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति । सर्वस्यै, विश्वस्यै, यस्यै, तस्यै, कस्यै, अन्यस्यै । सर्वस्याः, विश्वस्याः, यस्याः, तस्याः, कस्याः, अन्यस्याः ।

**पदमञ्जरी**

अकारोच्चारणसामर्थ्यान्न भविष्यति । अस्त्यन्यदकारोच्चारणस्य प्रयोजनम्—ज्ञायै, ज्ञाया इत्यत्र 'सावेकाचः' इत्याद्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति । किञ्च—उच्चारणार्थोऽप्यकारः सम्भाव्येत, इह खट्वामतिक्रान्त इति प्रादिसमासे ह्रस्वत्वे च तस्य स्थानिवद्भावात्ततः परस्य चतुर्थ्येकवचनस्य 'ङेर्यः' इति यादेशं बाधित्वानेन याट् प्राप्नोति, तत्र कृते दीर्घत्वे चातिखट्वायै देवदत्तायेति प्रसङ्गः, तत्राह—*अतिखट्वायेत्यत्रेति* । *अकृते दीर्घत्व इति* । यादेशात् प्रागवस्थायामिदमुक्तम् । कृते तर्हि यादेशे दीर्घत्वे च ङिच्चासौ भूतपूर्व इति याट् प्राप्नोति ? अत आह—*कृते च लाक्षणिकत्वादिति* ॥

*सर्वनाम्नः स्याड्ढ्रस्वश्च* ॥ दीर्घोच्चारणं सर्वस्या इत्यत्र वृद्धिर्यथा स्याद्, 'अतो गुणे' पररूपत्वं मा भूत् । अकारोच्चारणं तु अस्या इत्यत्र 'ऊडिदम्पदादि' इति

**न्यासः**

दीर्घत्वम् । दीर्घोच्चारणम्—वृद्धिसवर्णदीर्घत्वे यथा स्याताम्, पररूपत्वं मा भूदित्येवमर्थम् । अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत् ? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम् । किं तत् ? ज्ञायै, ज्ञाया इत्यत्र 'सावेकाचस्तृतीयादिर्विभक्तिः' इत्यनेनोदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति ।

अथ खट्वामतिक्रान्तायातिखट्वायेत्यत्र कस्मान्न भवति, उपसर्जनह्रस्वत्वे कृते तस्य स्थानिवद्भावादाब्ग्रहणेन ग्रहणे सति प्राप्नोति ? इत्यत आह—अतिखट्वायेत्यादि । यदा तावत् 'सुपि च' इति दीर्घत्वं न क्रियते, तदा ङ्याब्ग्रहणेन दीर्घग्रहणमित्येतद्वचनान्न भवति । यदा दीर्घत्वं तदा लाक्षणिकत्वान्न भवति; 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति वचनात् ॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च** ॥ याटोऽपवादः । आकारोच्चारणं सर्वस्या इत्यत्र यथा स्याद्, अन्यथा पररूपत्वं प्रसज्येत । अकारोच्चारणसामर्थ्यान्न प्रसज्येत—इत्येतच्च

'आपः' इत्येव—भवति । भवते ॥

विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥

द्वितीया, तृतीया—इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याडागमो भवति, द्वितीयातृतीययोश्च ह्रस्वो भवति । द्वितीयस्यै, द्वितीयायै । तृतीयस्यै, तृतीयायै ॥

ङेराम्नद्याम्नीभ्यः ॥ ११६ ॥

पदमञ्जरी

विभक्तेराद्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादेवमर्थं स्यात् । किञ्च उच्चारणार्थोऽप्यकारः सम्भाव्येत ॥

*विभाषा द्वितीयातृतीयाभ्याम्* ॥ अप्राप्तविभाषेयम्; असर्वनामत्वात् । ननु च 'तीयस्य वा ङित्सूपसंख्यानम्' इत्यनेनैव सिद्धत्वान्नार्थ एतेन, तच्चावश्यं वक्तव्यं लिङ्गान्तरेऽपि स्मायादयो विकल्पेन यथा स्युरिति ? नैतद्युक्तमुच्यते; यद्धि सूत्रेणासिद्धं तदुपसंख्यानेन साधनीयम्, न पुनरुपसंख्यानाश्रयणेन सूत्रस्य प्रत्याख्यानं युज्यते ।

यदि पुनरत्र ह्रस्वयोर्ग्रहणं कृत्वा स्याड्ग्रहणं च निवर्त्य 'सर्वनाम्नः' इत्येवानुवर्त्यातिदेश आश्रीयते—सर्वनाम्नो यदुक्तं तद्विभाषा भवति द्वितीयातृतीययोरिति, तदोपसंख्यानं शक्यमकर्त्तुम् ॥

*ङेराम्नद्याम्नीभ्यः* ॥ 'ङेः' इति सप्तम्येकवचनग्रहणम्; इच्छायाम्, स्त्रियामि-

न्यासः

नाशङ्कनीयम्, तद्धि तस्यामित्यत्र 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति विभक्त्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादित्येवमर्थम् ।

विभाषा द्वितीयातृतीयाभ्याम् ॥ असर्वनामार्थं वचनम् । ये तु 'वाप्रकरणे तीयस्य ङित्सूपसंख्यानम्' इति सर्वनामसंज्ञां तीयस्योपसञ्चक्षते त इदं सूत्रं प्रत्याचक्षते; तेनैव सिद्धत्वात् । तच्चोपसंख्यानमवश्यं कर्त्तव्यम्, स्मायादयो ङिति विकल्पेन यथा स्युरिति—द्वितीयस्मै, द्वितीयाय; द्वितीयस्मिन्, द्वितीय इति । अन्ये त्वनेनैव स्मायादयः सिध्यन्तीत्युपसंख्यानमेव प्रत्याचक्षते । कथम् ? 'सर्वनाम्नः' इत्येतदिहानुवर्तते, स्याडिति निवृत्तम्, तेनैवमभिसम्बन्धः क्रियते—सर्वनाम्नो ङिति यदुक्तं तद्विभाषा द्वितीया-तृतीयाभ्यां भवतीति । तेन स्मायादयोऽप्यनेनैव भविष्यन्तीति नार्थ उपसंख्यानेन ।

ङेराम्नद्याम्नीभ्यः ॥ 'ङेः' इति सप्तम्येकवचनस्य ग्रहणम् । एतच्च 'स्त्रियाम्'—इत्येवमादिनिर्देशाद्विज्ञायते । ग्रामण्यामिति । ग्रामं नयतीति 'सत्सूद्विष' इत्यादिना

नद्यन्तादाबन्तान्नीत्येतस्माच्चोत्तरस्य ङेरामित्ययमादेशो भवति। कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्।

आपः—खट्वायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्।

नी—राजन्याम्। सेनान्याम्[1]॥

इदुद्भ्याम्॥ ११६॥

इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति। कृत्याम्। धेन्वाम्॥

औत्॥ ११८॥

पदमञ्जरी

त्यादिनिर्देशात्। *ग्रामण्यामिति*। 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्रग्रामाभ्याम्'[2] इति णत्वम्, 'एरनेकाचः' इति यण्॥

*इदुद्भ्याम्*॥ नदीग्रहणमिहानुवर्त्तते। यद्येवम्, अपार्थकमिदम्, पूर्वेणैव सिद्धत्वात्, ततश्च 'इदुद्भ्यामौत्' इत्येकयोग एव कर्त्तव्यः? नैवं शक्यम्; औकारो हि स्यात्, नदीलक्षणस्यामोऽवकाशः—कुमार्यामिति, औत्वस्यावकाशः—पत्यौ, सख्याविति; कृत्यामित्यत्र यदा नदीसंज्ञा तदा परत्वादौत्त्वं प्राप्नोति॥

*औत्*॥ *यत्र नदीसंज्ञमित्यादि*। नदीसंज्ञके पूर्वेणाम् विहितः, घिसंज्ञेऽप्युत्तरेणात्वसंयुक्तमौत्वं वक्ष्यति, तस्मादाभ्यामन्यदेवोदाहरणम्। तत्र पूर्वत्र 'ध्यन्ता-

न्यासः

क्विप्, 'अग्रग्रामाभ्याञ्च' इति णत्वम्। 'एरनेकाचः' इति यणादेशः। अथ कुमार्याम्, खट्वायाम्, सर्वस्यामिति कथं सिध्यति, आमि कृते 'ह्रस्वनद्यापो नुट्' इति नुडागमेन भवितव्यम्? नैष दोषः; नुटः परत्वादाट्-याट्-स्याटो भवन्ति। तेषु कृतेषु नुटः प्राप्तिरेव नास्तीति, न हि द्वयोरादिलिङ्गयोः समुच्चय उपपद्यते।

इदुद्भ्याम्॥ नदीग्रहणमिहानुवर्त्तते। तेन चेदुतौ विशिष्येते नदीसंज्ञकौ याविदुताविति। यद्येवम्, अनर्थकमिदम्, पूर्वेणैव सिद्धत्वात्? नैतदस्ति; औकारो हि परत्वादुत्तरसूत्रेण स्यात्, अस्मिंश्च सत्यामेव भवति॥

औत्॥ नदीसंज्ञकात् परस्य ङेराम् पूर्वेण विहितः, घिसंज्ञकादुत्तरेणात्वसन्नियुक्तमौकारं वक्ष्यति, तस्मात् पारिशेष्यात् ताभ्यां यदन्यदिकारोकारान्तं तदिहोदा-

१. ग्रामण्यामिति पुस्तकान्तरेऽधिकम्।

२. नेदं कात्यायनस्य वाक्यम्, न वा भाष्यकारस्य, अन्यैरेव तु वार्त्तिकरूपेण प्रक्षिप्तम्। 'ग्रामणीः' इत्यस्य सिद्धिस्तु पूर्वं ३.२.६१ सूत्रे द्रष्टव्या।

इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति। यत्र नदीसंज्ञं नापि घिसंज्ञमिकारान्तम्, तदिहोदाहरणम्। सख्यौ। पत्यौ॥

## अच्च घेः॥ ११६॥

'औत्' इति वर्तते। घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति, तस्य च घेरकारादेशो भवति। अग्नौ। वायौ। कृतौ। धेनौ। पटौ।

अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम्।

'औदच्च घेः' इति येषामेकमेवेदं सूत्रम्, ते प्रधानशिष्टमिदुद्भ्या-

### पदमञ्जरी

न्नद्यन्तात्' इत्युक्तम्, इह त्विकारोकारान्तमित्युक्तम्, संज्ञाविधौ च पक्षद्वयं दर्शितम्—वर्णमात्रस्य संज्ञा, तदन्तस्य वेति; तेन नास्ति विरोधः॥

*अच्च घेः॥ कृतौ, धेनाविति।* अथात्रात्वे कृते 'अजाद्यतष्टाप्' इति टाप्कस्मान्न भवति, अस्तु को दोषः? 'ङेराम्नद्याम्नीभ्यः', 'याडापः' इत्येतौ विधी प्राप्नुतः, औत्वविधानं तु पुंसि चरितार्थम्? अत आह—*तपरकरणं स्त्रियामापो निवृत्त्यर्थमिति।* इह हि स्थानिनो मात्रिकत्वाद्भाव्यमानत्वाच्चाणो दीर्घस्य प्रसङ्गो नास्ति, यस्य निवृत्त्यर्थं तपरकरणं स्यात्। तस्माच्छास्त्रान्तरेणापि दीर्घो मा भूदित्येवमर्थं तपरकरणं क्रियते, एतच्च सन्निपातपरिभाषामनाश्रित्योक्तम्। ङिसन्निपातकृतं ह्रस्वं तद्विघातकस्य टापो निमित्तं न भवति।

*औदच्च घेरिति येषामित्यादि।* इह केचित् 'औदच्च घेः' इत्येकयोगमेवाधीयते,

### न्यासः

हरणं विज्ञायत इत्याह—यत्र नदीसंज्ञमित्यादि। अत्र च सखिपतिशब्दावस्त्र्याख्यत्वान्नदीसंज्ञकावपि न भवतः। घिसंज्ञकौ यथा न भवतस्तथा पूर्वमेव प्रतिपादितम्॥

**अच्च घेः॥** अथात्त्वे कृते 'अजाद्यतष्टाप्' इति—कृतौ, धेनावित्येवमादौ टाप् कस्मान्न भवति? इत्याह—अदिति तपरकरणमित्यादि। यस्मात् तपकरणं टाब्निवृत्त्यर्थं क्रियते, तस्मात् कृतेऽप्यत्त्वे टाब्न भवतीति भावः। तपरकरणं हि तत्कालावधारणार्थम्। न चात्र भाव्यमानत्वादणो मात्रिकत्वाच्च स्थानिनो दीर्घत्वस्य प्राप्तिरस्ति। अतोऽन्येनापि हेतुना यद्दीर्घत्वमापद्यते तत्प्रतिषेधार्थमुपजायमानं तट्टापोऽभावमापादयति। टापि हि सत्यकः सवर्णे दीर्घत्वं स्यात्। तथा चानर्थकं तपरकरणं स्यात्। तस्मान्मा भूदनर्थकमिति कृतेऽप्यत्त्वे टापा न भवितव्यमिति।

**औदच्च घेरिति येषामित्यादि।** इह केचिद् 'औदच्च घेः' इत्येकं योगं कुर्वन्ति,

मौत्वं वर्णयन्ति—अन्वाचयशिष्टं घेरकारमिति ॥

## आङो नाऽस्त्रियाम् ॥ १२० ॥

घेरुत्तरस्याङो नाभावो भवति अस्त्रियाम् । अग्निना । वायुना । पटुना ।

'पुंसि' इति नोक्तम्; अमुना ब्राह्मणकुलेन ।

### पदमञ्जरी

तत्र यदि समुच्चये चशब्दः स्यात्, यत्रात्वं तत्रैवौत्वं स्यात् – धेनाविति; घेश्चात्वमित्यघौ सख्यौ, पत्याविस्यत्रौत्त्वमपि न स्यात्, अस्य दोषस्य निवृत्तये प्रधानशिष्टमौत्वमन्वाचयशिष्टमत्वमिति वर्णयन्ति । तत्र यथा 'कर्त्तुः क्यङ् सलोपश्च' इत्यत्र सलोपस्यान्वाचयशिष्टस्याभावेऽपि श्येनायत इत्यादौ क्यङ् भवति, तथा अत्रापि सख्यौ, पत्यावित्यत्वाभावेऽपि औत्वं भवतीत्यर्थः ॥

*आङो नाऽस्त्रियाम्* ॥ 'आङः' इति स्थान्यन्तरस्योपादानाद् घेरिति षष्ठी पञ्चम्या विपरिणम्यत इत्याह—*घेरुत्तरस्येति* । अथ किमर्थमस्त्रियामित्युच्यते, 'आङो ना पुंसि' इत्येवोच्येत, एवं हि मात्रया लाघवं भवति, इष्टं च सिध्यति ? एवमुच्यमाने त्रपुणा, जतुनेत्यत्र नपुंसके न प्राप्नोति । मा भून्नाभावः, 'इकोचि विभक्तौ' इति नुमि कृते सिद्धमिष्टम् ? अत आह–*पुंसीति नोक्तमित्यादि* । *अमुना ब्राह्मणकुलेनेति* । 'पुंसि' इत्युच्यमाने नाभावो न स्यात् । नुमपीग्लक्षणो नास्ति; मुत्वस्यासिद्धत्वात् । 'अस्त्रियाम्' इत्युच्यमाने नपुंसकेऽपि नाभावो भवति ।

### न्यासः

तथा च सत्यौत्वात्त्वयोः सन्नियोगशिष्टत्वाद् यत्रात्त्वं तत्रैवौत्त्वेन भवितव्यम् । घेश्चात्त्वमिति सख्यौ, पत्यावित्यत्रात्त्वाभावादौत्त्वमपि न स्यात् । अतस्तस्य दोषस्य परीहाराय येषामेक एवायं योगस्ते प्रधानशिष्टमौत्त्वमाचक्षते । यथा 'कर्तुः क्यङ् सलोपश्च' इत्यत्र प्रधानशिष्टमाचक्षते क्यङम्, अन्वाचयशिष्टं सलोपम् । यथा तत्रैव–तत्रासत्यपि सलोपे यथा क्यङ् भवति श्येनायते—इत्यादौ; एवमसत्यप्यत्त्वे सख्यौ, पत्यावित्यत्रौत्त्वं भवतीति तेषामभिप्रायः ॥

आङो नाऽस्त्रियाम् ॥ आङ इति स्थान्यन्तरनिर्देशादिहार्थाद् विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं यद् घेरिति प्रकृतं तदिह पञ्चम्यन्तमुपजायत इत्याह–घेरुत्तरस्येत्यादि। अथ किमर्थम् 'अस्त्रियाम्' इत्युच्यते, 'आङो ना पुंसि' इत्येवोच्येत; एवमुच्यमाने त्रपुणा, जतुनेत्येतन्न सिध्यतीत्येतच्च नाशङ्कनीयम्; 'इकोऽचि विभक्तौ' इति नुमैव सिद्धत्वात् ?–इति यो मन्येत, तं निराकर्तुम्–अमुना ब्राह्मणकुलेनेत्यस्योपन्यासः । अत्र हि त्यदाद्यत्वे कृते 'अदसोऽसेर्दादु दो मः' इत्युत्वमत्वे च । तत्र यदि पुंसीत्युच्येत,

अस्त्रियामिति किम् ? कृत्या । धेन्वा ।।

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ

सप्तमाध्यायस्य तृतीयः पादः

पदमञ्जरी

नाभावे कर्त्तव्ये मुत्वस्यासिद्धत्वं नास्ति । 'न मुने' इति प्रतिषेधादिति 'नपुंसके' इत्युच्यमानेऽपि न सिध्यति । तस्मादस्त्रियामित्येव वक्तव्यमिति ।।

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां*

*सप्तमस्याध्यायस्य तृतीयः पादः समाप्तः*

न्यासः

ततोऽमुनेति नपुंसके न सिध्येत्; मुभावस्यासिद्धत्वात् । नुमोऽभावात् 'अस्त्रियाम्' इत्युच्यमाने नपुंसकेऽपि नाभावो भवतीत्यमुनेति सिद्धं भवति । न हि नाभावे कर्त्तव्ये मुभावस्यासिद्धत्वम्; 'न मु ने' इति वचनादित्यभिप्रायः ।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां

काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य तृतीयः पादः



# अथ सप्तमाध्याये चतुर्थः पादः

## णौ चङ्युपधाया ह्रस्वः ॥ १ ॥

'अङ्गस्य' इति वर्त्तते। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्।

अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम्। इह तु—मा भवानटिटदिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं

### पदमञ्जरी

*णौ चङ्युपधाया ह्रस्वः* ॥ 'णौ' इत्यङ्गापेक्षया परसप्तमी, 'चङि' इति ण्यपेक्षया। उदाहरणेषु कृहृलूपूभ्यो णिच्, लुङ्, चङ्, णिलोपः, ह्रस्वत्वम्, द्विर्वचनम्। तत्र णौ कृतं स्थानिवद्भवतीति कृ इत्यादि धातुरूपं द्विरुच्यते, कृ हृ इत्येतयोरुरदत्वम्, 'सन्वल्लघुनि' इति सन्वद्भावादित्वम्। इतरयोरपि 'ओः पुयण्ज्यपरे' इतीत्वम्। सर्वत्र 'दीर्घो लघोः' इति दीर्घः। *अत्रेति*। अनन्तरोदाहृतेषु। *परत्वादिति*। चङीति द्विर्वचनस्याशिश्रयदित्यादिरवकाशः, ह्रस्वस्य तु कृतद्विर्वचनमवकाशः; अकृते तु द्विर्वचने विप्रतिषेधः। *तत्र कृते द्विर्वचनमिति*। ततश्च सन्वद्भावे कर्त्तव्ये ह्रस्वत्वं न स्थानिवद्भवति; अभ्यासस्यादिष्टादचः पूर्वत्वादिति भावः। चोदयति—*इह त्विति*। माङ्प्रयोग आड् मा भूदिति। *नित्यत्वादिति*। द्विर्वचनं हि कृतेऽपि ह्रस्वत्वे प्राप्नोति, अकृतेऽपि, ततश्च तदेव स्यात्तत्र

### न्यासः

णौ चङ्युपधाया ह्रस्वः ॥ चङ्परे णौ परत इति। चङ् परो यस्माण्णेरिति स तथोक्तः। अचीकरदित्यादि। कृञ् हृञ् लूञ् पूञित्येतेभ्यो हेतुमणिणच्, ततो लुङ्, च्लिः, 'णिश्रि' इत्यादिना च्लेश्चङ्, 'णेरनिटि' इति णिलोपः। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, ततो द्विर्वचनम्, ततश्च णौ कृतं स्थानिवद्भवतीति कृ, हृ—इत्यादिकमविकृतधातुरूपमेव द्विरुच्यते। अत्र कृ, हृ—इत्येतयोरभ्यासस्य 'उरत्' इत्यत्त्वे कृते रपरत्वे हलादिशेषे च ततश्च 'सन्वल्लघुनि' इत्यादिना सन्वद्भावादित्त्वम्। पू, लू—इत्येतयोरपि ह्रस्वत्वे च कृते 'ओः पुयण्ज्यपरे' इतीत्त्वम्। सर्वत्र 'दीर्घो लघोः' इति दीर्घत्वम्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोरित्यादि। अचीकरदित्यादिषूदाहरणेषु कृताकृतप्रसङ्गित्वाद् द्विर्वचनं नित्यमुपधाह्रस्वत्वमपि, तयोरुभयोः परत्वादुपधाह्रस्वत्वं भवति, तत्र कृते द्विर्वचनम्—इत्येष कार्याणां प्रवृत्तिक्रमः। मा भवानटिटदित्यत्र तु द्विर्वचनमेव नित्यम्, न ह्रस्वत्वम्, तथा हि 'अजा-

विहितमिति ह्रस्वो न स्यात् ? नैष दोषः; ओणेर्ऋदित्करणं ज्ञापकम्—नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति ।

णाविति किम् ? 'चङ्युपधाया ह्रस्वः' इत्युच्यमाने, अलीलव-

**पदमञ्जरी**

को दोषः ? इत्यत आह—*तथा सतीति* । परिहरति—नैष दोष इति । *ओणेरिति* । 'ओणृ अपनयने' इत्यस्य ऋदित्करण एतत्प्रयोजनम्—ऋदितो नेति प्रतिषेधो यथा स्यात् । यदि चात्र द्विर्वचनं स्याद्, ऋदित्करणमनर्थकं स्याद्, द्विर्वचने कृते पररूपेण व्यवहितत्वादेव ह्रस्वत्वं न भविष्यति, पश्यति त्वाचार्यः—द्विर्वचनाद् ह्रस्वत्वं बलीय इति, तत ओणिमृदितं करोति । *णाविति किमिति* । ह्रस्वश्रुत्या अच्परिभाषोपस्थानादच उपधाया ह्रस्वेन भाव्यम् । न चाण्यन्तानां चङि उपधा ह्रस्वभाविनी सम्भवति, न हि श्रिद्रुस्नुधेट्श्वीनामजुपधा । कमिगुप्योस्तु ह्रस्व एवोपधा, ततश्च चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्वो भवति स च णिरेव, तत्र णावन्तरङ्गत्वाद् वृद्ध्यादिषु कृतेषु उपधाया ह्रस्व इति सिद्धमिष्टमिति

**न्यासः**

द्वितीयस्य' इति द्विर्वचनं कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि । ह्रस्वत्वं तु द्वितीयस्यैकाचो द्विर्वचने कृते न प्राप्नोति; परेण टिशब्दरूपेण व्यवधानात् । तस्मान्मा भवानटिटदित्यत्र नित्यत्वाद् द्वितीयस्यैकाचो द्विर्वचनं प्राप्नोति । द्विर्वचने हि सति को दोषः स्यात् ? इत्यत आह—तथा च सतीत्यादि । एवञ्च द्विर्वचने हि सति तेन ह्रस्वभाविन अकारस्योपधत्वं विहतमिति ह्रस्वो न स्यात् । न हि द्वितीयस्यैकाचो द्विर्वचने कृते चङ्परे णौ यदङ्गं तस्य ह्रस्वभाव्याकार उपधा भवति । असति च ह्रस्वत्वे मा भवानटिटदिति रूपं न सिध्यति । मायोग आण्निवृत्त्यर्थः । आटि तु सति नास्ति विशेषः । सत्यसति वा ह्रस्वत्वे 'आटश्च' इति वृद्ध्या भवितव्यमिति । भवच्छब्दः सन्देहनिरासार्थः । नैष दोष इति । योऽनन्तरोक्तः स कथं लभ्यते? इत्याह—ओणेर्ऋदित्करणमित्यादि । 'ओणृ अपनयने'—इत्येतस्य ऋदित्करणस्यैतत्प्रयोजनम्—ऋदित्वान्नाग्लोपीत्यादिना ह्रस्वप्रतिषेधो यथा स्यादिति । यदि च नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन न बाध्यते, तदौणेर्ऋदित्करणमनर्थकं स्यात् । द्विर्वचने हि कृते परेण णिशब्दरूपेण व्यवधानादेव ह्रस्वो न भविष्यति, किमोणेर्ऋदित्करणेनेति ? आचार्यप्रवृत्तिर्ज्ञापयति—नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति; यत ओणेर्ऋदित्करणं करोति ।

णाविति किमिति । एवं मन्यते—णिग्रहणे चाकृते लुङ्चङादेशयोः कृतयोर्णिलोपे चाकृते वृद्ध्यावादेशयोश्चाकृतयोः, अलू इ + अत् इति स्थित ऊकारस्य ह्रस्वो मा भूदित्येवमर्थं वा णिग्रहणं क्रियते ? ऊकारस्य वृद्धौ कृतायामौकारस्य ह्रस्वो मा भूदित्येवमर्थं वा ? एतच्चोभयमप्रयोजनम् ; अत्रान्तरङ्गत्वाद् वृद्ध्यावादेशाभ्यामेव भवितव्यम् ।

दित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात् । अदीदपदित्यत्र ह्रस्वत्वेन पुको बाधः स्यात् । अपीपचदित्येवमादौ तु नैव स्यात् ।

चङीति किम् ? कारयति । हारयति ।

पदमञ्जरी

प्रश्नः । इतरः—यथाश्रुतसम्बन्धसम्भवे चङि यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादिकं बाधेतेति मत्वाऽऽह—*चङ्युपधाया इति* । *ह्रस्वः स्यादिति* । ननु च ऊकारस्य ह्रस्वः, तस्मिंश्च कृते बाधितत्वान्मा भूद् वृद्धिः, गुणस्तु केनचिदबाधितत्वाद्भविष्यति, ततोऽवादेशे सिद्धमलीलवदिति ? नैतदस्ति; गुणस्य वृद्ध्या बाधितत्वाद् वृद्धेश्च ह्रस्वेनेति भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरित्युवङ् प्रसज्येत । अस्तु वा तत्र गुणः, दोषान्तरमाह—*अदीदपदित्यत्रेति* । यदा तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधः, तदा वृद्ध्याद्यादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवद्भावाभावाच्चङि यदङ्गं तस्यैवोपधा ह्रस्वभाविनी सम्भवतीति णाविति न वक्तव्यम् । *सूत्रकारेण* स्थानिवत्त्वनिषेधो न कृत इति 'णौ' इत्युक्तम् ।

*चङीति किमिति* । मितां ह्रस्वविधानादनेन णौ सर्वत्र ह्रस्वो न भविष्यति, प्रयोगदर्शनाच्चेष्टतो व्यवस्थाश्रयिष्यते इति प्रश्नः । इतरः—नान्तरेण वचनमिष्टानिष्टविभागः सुज्ञान इति मत्वाऽऽह—*कारयति, हारयतीति* । किञ्च—मितां ह्रस्व-

न्यासः

अन्तरङ्गत्वं पुनस्तयोर्णिज्मात्राश्रयत्वात्; ह्रस्वस्य च बहिरङ्गत्वम्, चङाश्रयत्वादिति । चङ्युपधाया ह्रस्व इत्युच्यमान इत्यादि । एतावत्युच्यमानेऽसति णिग्रहणे चङ्परे यदङ्गं तस्योपधाया ह्रस्वो भवतीत्येवमर्थः स्यात् । तथा चानवकाशो ह्रस्वोऽलीलवदित्यत्रान्तरङ्गामपि वृद्धिं बाधित्वा वचनसामर्थ्यादिकारस्यैव स्यात् । अथापि कथञ्चिद् वृद्धिर्न बाध्यते, एवमपि वृद्धौ कृतायामन्तरङ्गमप्यावादेशं बाधित्वौकारस्यैव प्रसज्येत; अन्यथा हि वचनमिदमनर्थकं स्यात् । अदीदपदिति । अत्र ददातेर्णिचि लुङि चङि च कृते अ दा इ + अत् इति स्थिते वचनप्रामाण्यादनवकाशो ह्रस्वोऽन्तरङ्गमपि पुकं बाधित्वा प्रसज्येत, तस्मिंश्च सति पुग् विहतनिमित्तत्वान्न स्यात् । अ ीपचदित्यादौ तु नैव ह्रस्वः स्यादिति । चङि परतो यदङ्गं पाचिप्रभृति, तदीयाया उपधायाश्चाकारादेरह्रस्वभाविनीत्वात् । आदिशब्दोऽपीपठत्यादिपरिग्रहार्थः । तस्माण्णाविति वक्तव्यम् ।

चङीति किमिति । एषोऽभिप्रायः—केवले णौ ह्रस्वो मा भूदित्येवमर्थं चङीत्युच्यते; नैतच्चङ्ग्रहणस्य प्रयोजनमुपपद्यते; यस्मादाचार्यप्रवृत्तिर्ज्ञापयति—णावेव केवले ह्रस्वत्वं

उपधाया इति किम् ? अचकाङ्क्षत् । अववाञ्छत् । तदेतदुप-धाग्रहणमुत्तरार्थमवश्यं कर्त्तव्यं तदिहापि ह्रस्वत्वं निवर्त्तयतीत्येवमर्थम्,

पदमञ्जरी

वचनम् 'असिद्धवदत्राभात्' इत्येतदर्थं स्यात् । *उपधाया इति किमिति* । ह्रस्वश्रुत्या 'अचः' इत्युपतिष्ठते, तत्र विशेषणविशेष्यभावे कामचारादङ्गेनाज्विशेष्यते, अङ्गस्य यत्र तत्र स्थितस्याचो ह्रस्वो भवति, तेनोपधायास्तावत्सिद्धं ह्रस्वत्वमिति प्रश्नः । इतरोऽप्यतिप्रसङ्गमुदाहरति-*अचकाङ्क्षदिति* । ननु 'णौ' इत्यनेनाचं विशेषयिष्यामः-णौ परतोऽङ्गस्य योऽजिति, तत्र सामर्थ्यादेकवर्णव्यवधानमवश्यम्भावित्वादाश्रयिष्यते ? इत्याह-*तदेतदिति* । *उत्तरार्थमिति* । 'लोपः पिबतेरीच्चाभ्यासस्य'-उपधाया यथा स्यादन्तस्य मा भूदित्येवमर्थमवश्यमुपधाग्रहणं कर्त्तव्यम् । यद्युत्तरार्थमुपधाग्रहणम्, तत्रैवं कर्त्तव्यम् । यद्येवम्, तत्रैव क्रियताम् ? अत आह-*तदिहापीति* । आल्लोपः पिबतेरिति । एवमुच्यमानेऽन्तरङ्गमपि युक्तमनवकाश-

न्यासः

न भवतीति, यदयम् 'मितां ह्रस्वः' इति ह्रस्वत्वं शास्ति । ततः कारयति, हारयतीत्यादौ न भविष्यतीत्यभिप्रायः । यद्येतस्माज्ज्ञापकात् कारयतीत्यादौ ह्रस्वो न भवति, तदाचीकरदित्यत्रापि न स्यात् । अथात्र वचनसामर्थ्याद् भविष्यति ? एवमपि कारयतीत्यादौ स्यादेव । न हि 'मितां ह्रस्वः' इत्युच्यमाने सत्यचीकरदित्यादौ न भवतीत्येष विषय-विभागः शक्यते विज्ञातुम् । तस्मात् चङ्ग्रहणं कर्त्तव्यम् । उपधाग्रहणं किमिति । एवं मन्यते—अलोऽन्त्यस्य मा भूदित्येवमर्थमुपधाग्रहणं क्रियते, एतच्चाप्रयोजनम्; चङ्परे णौ यदङ्गं तस्याचीकरदित्यादावपि णावन्तरङ्गत्वाद् वृद्ध्यादिषु कृतेषु ह्रस्व-भाव्यजन्त्यो न सम्भवति यत्राजन्ताण्णिजुत्पद्यते, किं पुनरपीपठदित्यादौ यत्र हलन्ताण्णि-जुत्पद्यते ! तस्मादजन्त्यो ह्रस्वभावी नास्तीत्यन्तरेणाप्युपधाग्रहणं वचनादनन्त्यस्यैवोपधा-भूतस्य ह्रस्वो भविष्यतीति । अचकाङ्क्षद्, अववाञ्छदिति । 'काक्षि वाक्षि माक्षि काङ्-क्षायाम्' । यद्यप्यजन्तो ह्रस्वभावी नास्ति, तथापि वचनादनन्त्यस्याचीकरदित्यादौ यथा भवति, तथा अचकाङ्क्षदित्यादावपि स्यात् । तस्माद् मा भूदेष दोष इत्युपधाग्रहणं क्रियत इत्यभिप्रायः । ननु चाङ्गस्य योऽच् तस्य चङ्परे णौ ह्रस्वो विधीयते, तत्र यद्य-प्यनन्तरोऽज न सम्भवति, तथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन वर्णेनेति येन नाव्यवधानम्, अपि तु सर्वदा व्यवधानमेव; तेन व्यवहितेऽपि वचनप्रामाण्याद् भवितव्यम् । एकेनैव वर्णेन व्यवधानं सर्वत्र सम्भवति । सङ्घातेन तु व्यवधानं सम्भवति, न सम्भवति च । इहाचकाङ्क्षदित्यादौ सङ्घातेनैव व्यवधानम्, अतो नास्त्येव ह्रस्वप्रसङ्ग इति किमुपधाग्रहणेन ? इत्याह—तदेतदित्यादि । 'लोपः पिबतेरी-च्चाभ्यासस्य' इत्युपधालोपो यथा स्यादिति । अलोऽन्त्यस्य मा भूदित्येवमर्थमुपधाग्रहणं कर्त्तव्यमवश्यम् । यद्येवम्, तत्रैव कस्मान्न कृतम् ? इत्यत आह—तदिहापीत्यादि ।

'येन नाव्यवधानम्' इत्येतन्नाश्रयितव्यमिति ।

❀ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम्[1] ❀ । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । योऽसौ[2] णौ णिलोपस्तस्य

पदमञ्जरी

त्वादाल्लोपो बाधते, उपधाग्रहणे त्वन्तरङ्गत्वाद्युकि कृते आकारस्य उपधाया लोप इति न कश्चिद् दोषः । तस्मादुत्तरार्थमुपधाग्रहणम् । अपर आह–इहार्थमप्युपधाग्रहणम्, अन्यथा णावनन्तरस्य ह्रस्वो विधीयमानोऽन्तरङ्गमपि वृद्ध्यादिकं बाधित्वा लू+इ अत् इति स्थिते उकारस्यादेशः प्राप्नोति, नैष दोषः; यदयम् 'नाग्लोपिशास्वृदिताम्' इति प्रतिषेधं शास्ति, तज्ज्ञापयति—नान्त्यस्यैव ह्रस्वत्वमिति ।

*णौ णिच्युपसंख्यानमिति* । णौ परतो यो णिस्तस्मिन्नित्यर्थः । णेर्णिचीति पाठे ण्यन्तात्परे णिचि विहित इत्यर्थः । *वादितवन्तं प्रयोजितवानिति* । लुङो भूतकालत्वात्प्रयोजितवानिति भूतकालेन विग्रहः । वादितवन्तमित्यत्र तु कथम्, यद्यसौ वादितवान् कथं प्रयुक्तिः, कुर्वतो हि प्रयुक्तिः करिष्यतो वा, न तु कृतवतः ? न ब्रूमः–प्रयुक्तिकालापेक्षयात्र भूतकालत्वमिति, किं तर्हि ? यथाशब्दप्रयोगकालापेक्षया । प्रयोजितवानित्यत्र भूतकालत्वं तदपेक्षयैव प्रयोज्यव्यापारस्यापीति । *अवीवददिति* । वदेर्ण्यन्ताण्णिचि लुङादि । किं पुनः कारणं न सिध्यति ? अत आह—*योऽसाविति* । स्थानिवद्भावे हि सति यश्चङ्परो णिर्न तत्रोपधा ह्रस्वभाविनी, यत्रोपधा ह्रस्वभाविनी न स चङ्परः; द्वितीयेन णिचा व्यवहितत्वात् । *तेन चेति* । णिलोपेन । *अग्लोपित्वादिति* ।

न्यासः

उपधाग्रहणमवश्यमुत्तरार्थं कर्तव्यम् । इह तु क्रियमाणे सत्यचकाङ्क्षदित्येवमर्थम् 'येन नाव्यवधानम्' इत्येषा परिभाषा नाश्रयितव्या भवति । उपधाग्रहणेनैवात्र ह्रस्वस्य निर्वर्त्तितत्वादित्येष गुणो लभ्यते । तेनेहैव कृतम्, नोत्तरत्र ।

**उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानमिति** । चङ्परे णौ परतो यो णिस्तस्मिन् परतोऽङ्गस्योपधाया ह्रस्वः उपसंख्येयः । **अवीवददिति** । वदेः 'हेतुमति च' इति णिच्, तदन्ताद् वादितवन्तं प्रयोजितवानिति पुनः 'हेतुमति च' इति णिच्, ततो लुङादिः, 'णेरनिटि' इति णिलोपः । किं पुनः कारणं न सिध्यति, यावता णिलोपे कृते चङ्परे णावङ्गस्याकारो ह्रस्वभाविन्युपधा भवत्येव ? इत्याह—**योऽसावित्यादि** । 'अचः परस्मिन् पूर्वविधौ' अपि णिलोपस्य ह्रस्वत्वे कर्तव्ये

१. 'णौ णिच्युपसंख्यानम्'—इति पाठा० ।

२. 'योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेनाग्लोपित्वात्'— इति मुद्रितपाठः, तत्र 'योऽसौ णौ णिलोपस्तेन चाग्लोपित्वात्'—इति पाठः पदमञ्जरीसम्मतः ।

स्थानिवद्भावेनाग्लोपित्वादङ्गस्य ह्रस्वो न प्राप्नोति। ण्याकृतिनिर्देशात् सिद्धम् ॥

पदमञ्जरी

ननु च ण्यन्ताण्णिचि विहिते णिलोपश्च प्राप्नोति, 'अचो ञ्णिति' इति वृद्धिश्च, तत्र लोपः शब्दान्तरे प्राप्तेरनित्यः, वृद्धेस्तु लोपे कृतेऽत्यन्ताप्राप्तिरित्युभयोरनित्ययोः परत्वाद् वृद्धौ कृतायामैकारस्य लोपः, तन्नाग्लोप्यङ्गं भवति? एवं तर्हि यदग्लोपिनां नेति प्रतिषेधं शास्ति, तज्ज्ञापयति—वृद्धेर्लोपो बलीयानिति; अन्यथा सर्वत्राको वृद्धौ कृतायामैकारौकारयोर्लोपः, न त्वकः। नैतदस्ति ज्ञापकम्; यत्र वृद्धावपि कृतायामगेव लुप्यते तदर्थमेतत्स्यात्—राजानमतिक्रान्तवान्नत्यरराजत्, यत्तर्हि प्रत्याहारग्रहणं करोति; अन्यथाल्लोपिनां नेत्येव ब्रूयात्? एतदपि नास्ति ज्ञापकम्; स्वामिनमाख्यदसस्वामत्, गोमुचमाख्यदजुगोमत्, प्रावृषमाख्यदपप्रावत्, यादृशमाख्यदययादत्—इत्येवमाद्यर्थमेतत्स्यात्। अत्राहुः—णिजत्र नास्ति; अनभिधानात्! एतच्च *भाष्यकारेण* ज्ञापकत्वसमर्थनादवसितमिति। यत्र तर्ह्यभिधानमङ्गीकृतं तदर्थमेतत्स्यात् 'विन्मतोर्लुक्'—भास्वन्तमाख्यत् अबभासत्? नैतत्प्रत्याहारग्रहणस्य प्रयोजनम्, अकार एव ह्यत्र मतुपो लुप्यते। यत्र तर्हि विनो लुक्—स्रग्विणमाख्यदसस्रजत्? अत्रापि नोपधा ह्रस्वभाविनी। तस्मात्प्रत्याहारग्रहणं ज्ञापकमिति स्थितमेतत्। एवमपि हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति यदुक्तं तेनैतद्विरुध्यते। तथा हि—असत्यप्यत्वनिपातने वृद्धिं बाधित्वा इकारस्य लोपे सति नैव सन्वद्भावस्य प्रसङ्गः। तस्मादग्लोपित्वादिति नायं स्वपक्षः, परमतेन त्वेतदुक्तं द्रष्टव्यम् ॥

भाष्यस्याप्येवमेवात्र निर्वाहो दृश्यतां बुधैः।
विपर्यये तूच्यमाने युक्तिः काचिन्न दृश्यते ॥

एवं च पटुमाख्यत् बलिमाख्यत् अपीपटत्, अबीबलदिति भवति। यथा त्वत्र *भाष्यं* तथा अपपटत्, अबबलदिति भवतीत्यलमियता।

उपसंख्यानं प्रत्याचष्टे—*ण्याकृतिनिर्देशात्सिद्धमिति*। आकृतिरत्र जाति-

न्यासः

स्थानिवद्भावाण्णिजव्यवधानाद् ह्रस्वो न प्राप्नोति। तेन वा णिलोपेनाग्लोप्यङ्गमेतद् भवति—तदेतस्माद्धेतोर्न ह्रस्वत्वं प्राप्नोति। अग्लोपीत्यादिनानन्तरवक्ष्यमाणप्रतिषेधात् 'ण्याकृतिनिर्देशात् सिद्धम्' इत्युपसंख्यानं प्रत्याचष्टे—णाविति। ण्याकृतिरिति णिजातिर्निर्दिश्यते, न तु णिव्यक्तिः। तेन व्यक्तौ व्यवधानं न भवति, न हि जातौ; एकत्वाण्णिजातेः। न हि तयैव तस्या व्यवधानमुपपद्यते। ननु चोत्तरया ण्याकृत्या जात्याधारभूतया णिव्यक्तया णिजात्याश्रयेऽपि व्यवधानमुपपद्यत एव? नैतत्; तस्या-

## नाग्लोपिशास्वृदिताम् ॥ २ ॥

अग्लोपिनामङ्गानां शासेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न भवति। अग्लोपिनां तावत्—मालामाख्यत् अममालत्। मातरमाख्यत् अममातरत्। राजानमतिक्रान्तवान् अत्यरराजत्। लोमान्यनुमृष्टवान् अन्वलुलोमत्।

**पदमञ्जरी**

निर्दिश्यते—चङ्परा या ण्याकृतिर्जातिस्तत्रेति। ततश्च सत्यपि स्थानिवत्त्वे ण्याकृतेरेकत्वाद्यश्चङ्परो णिः स एव पूर्वः, यश्च पूर्वः स एव चङ्पर इति सिद्धं ह्रस्वत्वम्। यदप्युक्तम्—'अग्लोपित्वात्' इति, तदपि न; आकृतिनिर्देशे हि ह्रस्वस्य न ण्याकृतिर्निमित्तत्वेनाश्रीयते। तत्र गोबलीवर्दन्यायेन तस्या ण्याकृतेरन्यस्याको लोपः प्रतिषेधविषयत्वेनाऽऽश्रीयते इति सर्वमवदातम्॥

*नाग्लोपिशास्वृदिताम्* ॥

यत्र णौ परतोऽग्लोपस्तदिहाग्लोपि गृह्यते।
दीव्यतिप्रभृतेर्नायं निषेधः शास्वृदिद्ग्रहात्॥
शक्यः शासिग्रहोऽकर्तुमृदिद्देष पठिष्यते।
ऋशासु अनुशिष्टावित्येवमेके प्रचक्षते॥
वदन्त्यन्ये तु सूत्रेऽस्मिन् शासिं निरनुबन्धकम्।
पठन्तः प्रतिषेधोऽस्य यङ्लुक्यपि भवेदिति॥

**न्यासः**

मपि व्यक्तौ जातेः समवायात्। एवं तावद्व्यवधानं ण्याकृत्याश्रये नास्ति। अग्लोपित्वमपि नास्त्येव; न ह्यत्र णिजातिव्यतिरेकेणान्योऽग् विद्यते, यस्य लोपेनाग्लोप्यङ्गं स्यात्। न च ण्याकृतेर्लोपश्च; तस्याः श्रूयमाणत्वात्। न हि श्रूयमाणाया लोप उपपद्यते; 'अदर्शनं लोपः' इति वचनात्। ननु च जातिव्यतिरेकेणापि तदाश्रयभूता व्यक्तिरग् विद्यत एव; न जातिव्यक्त्योरनन्यत्वमिति सांख्यीयसिद्धान्तस्येहाश्रयणात्। अथ वा—ण्याकृतिनिर्देशे सत्युपधाह्रस्वत्वस्य ण्याकृतिनिमित्तत्वेनाश्रीयते। तेन गोबलीवर्दन्यायेन तस्या ण्याकृतेर्निमित्तत्वेनोपात्ताया अन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन विज्ञायते, स चेह नास्ति। तस्माण्ण्याकृतिनिर्देशात् सिद्धम्॥

नाग्लोपिशास्वृदिताम्॥ अगिति प्रत्याहारग्रहणम्। अको लोपोऽग्लोपः, स एषामस्तीति तान्यग्लोपीन्यङ्गानि। 'शासु अनुशिष्टौ'। ऋदिद् येषां तानि ऋदिन्ति 'बाधृ विलोडने' इत्येवमादीनि। अममालत्, अममातरदिति। 'तत्करोति तदाचष्टे' इति णिच्, 'णाविष्ठवत्कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावः, 'तुरिष्ठेमेयःसु' इति टिलोपः, ततो

अगेत्र यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्, हलचोरादेशे तु न सिद्धयतीति तदर्थमेतद्वचनम् ।

शासेः—अशशासत् । ऋदिताम्—बाधृ, अबबाधत्; याचृ, अययाचत्; ढौकृ, अडुढौकत् ॥

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥**

भ्राज, भास, भाष, दीप, जीव, मील, पीड—इत्येतेषामङ्गानां णौ चङ्युपधाया ह्रस्वो भवत्यन्यतरस्याम् । भ्राज—अबिभ्रजत्,

**पदमञ्जरी**

*तत्र स्थानिवद्भावादपि सिद्धमिति* । स्थानिवद्भावे हि सति ह्रस्वभाविन्युपधा न सम्भवति । *हलचोरादेशे तु न सिद्धयतीति* । यथा 'सुधातुरकङ् च' इति समुदायस्यादेशत्वेऽवयवस्यानादेशत्वादणो रपरत्वं न भवति—सौधातकिरिति, तथा समुदाये स्थानिन्यवयवस्यास्थानित्वादजादेशत्वाभावान्नास्ति स्थानिवद्भावः । इह त्वग्लोपिग्रहणसामर्थ्यात् समुदायलोपोऽप्यग्लोप आश्रीयते ॥

*भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्* ॥ 'भ्राज दीप्तौ', 'भासृ दीप्तौ', 'भाष व्यक्तायां वाचि' भौवादिकाः; 'दीपि दीप्तौ', दैवादिकः, सर्वेऽनुदात्तेतः; 'जीव प्राणधारणे' भौवादिकः; 'मील निमेषणे', 'पीड अवबाधने'—चुरादी ।

**न्यासः**

लुङादिः । अत्वरराजदित्यादौ 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिच् । अन्वलुलोमदिति । 'सत्यापपाशरूप' इत्यादिना णिच् ।

**अगेव केवलो यत्रेत्यादि** । इह द्विविधमग्लोप्यङ्गम्—क्वचिदगेव केवलो लुप्यते, अममालदित्यादौ, क्वचिद्धलचौ, अत्वरराजदित्यादौ । अगेव केवलो यत्र लुप्यते तत्राग्लोपस्य स्थानिवद्भावात् सिद्धम् । स्थानिवद्भावे सत्यग्लोपस्य व्यवधानादेव ह्रस्वाप्राप्तिः, तस्मान्न तदर्थमग्लोपीति वचनम् । इतरत्र तु हलचोरुभयोरप्यादेश इति सिध्यति, अस्थानिवद्भावात् । अजादेशस्य हि परनिमित्तकस्य स्थानिवद्भाव उक्तः, न तु हलचोरादेशस्य । तस्माद् यत्र हलचोरादेशस्तदर्थमिदं वचनम् । अन्यार्थमेतत् क्रियमाणं यत्रागेव केवलो लुप्यते तदर्थमपि भविष्यतीति तदर्थमस्योदहरणमुपन्यस्तम् । अडुढौकदिति । 'ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः' । 'अभ्यासे चर्च' इति जश्त्वम्—डकारः ॥

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** ॥ भ्राजिरयं भ्वादावनुदात्तेत् पठ्यते, आत्मनेपदी ऋकारानुबन्धः फणादिषु 'टुभ्राजृ टुभ्रासृ दीप्तौ' इति पठ्यते, फणादिभ्यः पुरस्ताच्च 'एजृ रेजृ भ्राजृ दीप्तौ' इति । तत्रान्तर्गणकार्यार्थः फणादिष्व-

अबभ्राजत् । भास—अबभासत्, अबीभसत् । भाष—अबभाषत्, अबीभषत् । दीप—अदिदीपत्, अदीदिपत् । जीव—अजिजिवत्, अजीजिवत् । मील—अमिमीलत्, अमीमिलत् । पीड—अपिपीडत्, अपीपिडत् ।

भ्राजभ्रासोर्ऋदित्करणमपाणिनीयम् ।

॥ काण्यादीनां वेति वक्तव्यम् ॥ । अचकाणत्, अचीकणत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

पिबतेरङ्गस्य णौ चङ्युपधाया लोपो भवति अभ्यासस्येकारा-

### पदमञ्जरी

*भ्राजभासोरित्यादि* । अवश्यमनयोरनुदात्तोऽनुबन्ध आसङ्क्तव्यः, ऋकारानुरोधस्त्वपाणिनीय इत्युच्यते । ऋकारानुबन्धे प्राप्ते विभाषा, वर्णान्तरे त्वप्राप्ते विभाषेति । ऋकारानुरोधे फलविशेषाभावादपाणिनीयत्वम् ।

*काण्यादीनामिति* । काणिवाणिराणिहेठिलोपिप्रभृतयः काण्यादयः । आदिशब्दः प्रकारे ॥

*लोपः पिबतेरीच्चाभ्यासस्य* ॥ *अपीप्यदिति* । ननु च परत्वान्नित्यत्वादुपधालोपे

### न्यासः

वश्यमेवास्य पाठोऽङ्गीकर्त्तव्य इति, तेनैव शबादेरपि गणकार्यस्य सिद्धत्वात् । अन्यत्रास्य पाठोऽनार्ष एव लक्ष्यते । 'भासृ दीप्तौ', 'भाष व्यक्तायां वाचि', 'दीपी दीप्तौ', 'जीव प्राणधारणे', 'मील श्मील स्मील क्ष्मील निमेषणे', 'पीड अवगाहने'—एषां नित्ये ह्रस्वत्वे प्राप्ते विभाषेयमारभ्यते । अबिभ्रजदिति । यदा ह्रस्वत्वम्, तदा पूर्ववत्सन्वद्भावेनेत्त्वम् । अबीभषदिति । पूर्ववद् दीर्घः ।

अथ भ्राजभासयोर्ऋदित्करणं किमर्थम्, यावता तयोर्हि ऋदित्करणस्यैतत् प्रयोजनम्—ऋदित्त्वात् पूर्वसूत्रेण ह्रस्वप्रतिषेधो यथा स्यादिति, यदि विभाषया च तयोर्ह्रस्वत्वं विधीयते तदा ऋदित्करणस्य वैयर्थ्यमेव ? इत्यत आह—भ्राजभासोरित्यादि । अपाणिनीयमिति । पाणिनेरिदं पाणिनीयम्, न पाणिनीयमपाणिनीयमिति; तेनानभ्युपगमात्; न तु तेनाकृतत्वात् । अन्यथा हि 'बाधृ विलोडने'—इत्येवमादीनामपि ऋदित्करणमपाणिनीयं स्यात् । प्रतिपादितं हि पूर्वम् (४.१.१०६ सूत्रे)—गणकारः पाणिनिर्न भवतीति । तथा च—अन्यो हि गणकारः, अन्यश्च सूत्रकारः ।

लोपः पिबतेरीच्चाभ्यासस्य ॥ ह्रस्वत्वे प्राप्ते तदपवादः पिबतेर्लोपो विधीयते, ईकारश्चाभ्यासस्येति । उपधाधिकारादुपधाया एव । पर्यायेण लोपेकारौ मा भूताम्—

देशो भवति । अपीप्यत्, अपीप्यताम्, अपीप्यन् । उपधालोपे कृते ओः पुयण्ज्वचनं ज्ञापकम्—णौ स्थानिवद्भावस्येति । स्थानिवद्भावाद् द्विर्वचनम् ॥

## तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेरङ्गस्य णौ चङ्युपधाया इकारादेशो भवति । अतिष्ठिपन्, अतिष्ठिपताम्, अतिष्ठिपन् ॥

## जिघ्रतेर्वा ॥ ६ ॥

जिघ्रतेरङ्गस्य णौ चङ्युपधाया इकारादेशो वा भवति । अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन् । अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन् ॥

## उर्र्दत् ॥ ७ ॥

### पदमञ्जरी

कृते, अनच्कत्वाद् द्विर्वचनं न प्राप्नोति ? अत आह—*उपधालोपे कृत इति* । उपधाया एव पर्यायेणेत्त्वं मा भूदिति अभ्यासस्य ग्रहणम् । आकारलोपे-नाङ्गस्याग्लोपित्वाल्लघुनश्च परस्यासम्भवात् 'सन्वल्लघुनि' इतीत्त्वदीर्घत्वयोर-भावादीत्त्वविधिः । तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥

*तिष्ठतेरित्* ॥ *अतिष्ठिपदिति* । णौ कृतस्येत्वस्य स्थानिवद्भावात् स्थाशब्दस्य द्विर्वचनम्, सन्वद्भावादभ्यासस्येत्त्वम् । तिपा निर्देशः पूर्ववत् ॥

### न्यासः

इत्येवमर्थमभ्यासग्रहणम् । अपीप्यदिति । 'पा पाने', णिच्, 'शाच्छासाह्वाव्यावेपाम्' इति युक् । ननु च नित्यत्वात् परत्वाच्च पूर्वमुपधालोपे कृतेऽनच्कत्वाद् द्विर्वचनेन न भवितव्यम् ? इत्यत आह—उपधालोपे कृत इत्यादि । सुबोधम् । पिबतेः श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः—अपापयदिति । 'पा रक्षणे', 'पै ओवै शोषणे'—इत्येतयोस्तु निवृत्त्यर्थः स नोपपद्यते; तत्र ह्येकस्य लुग्विकरणत्वादेव न भविष्यति, अपरस्य तु लाक्षणिकत्वात् ।

तिष्ठतेरित् ॥ अयमपि ह्रस्वापवादः । 'ईच्चाभ्यासस्य' इति निवृत्तम् । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थ एव—अतास्थपदिति ।

जिघ्रतेर्वा ॥ एषोऽपि ह्रस्वापवादः । अत्रापि श्तिपा निर्देशस्य तदेव प्रयो-जनम्—अजाघ्रपदिति ।

उर्र्दत् ॥ अत्र ऋकारः स्थानित्वेनोपात्तः, तस्य चान्तरङ्गत्वादिररार एव प्राप्नु-

णौ चङ्युपधाया ऋवर्णस्य स्थाने वा ऋकारादेशो भवति। इररारामपवादः। इर्—अचिकर्त्तत्, अचीकृतत्। अर्—अववर्त्तत्, अवीवृतत्। आर्—अममार्जत्, अमीमृजत्। वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते।

तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात्—अचीकृत-

पदमञ्जरी

*उर्ऋत्* ॥ *उपधाया ऋवर्णस्येति*। अथ अर्त्तेर्धातोर्ग्रहणं कस्मान्न भवति, मा भवानर्पिपद् इति यथा स्यादिति ? तपरकरणात्। तद्धि दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यादिति। *इररारामपवाद इति*। 'कृत संशब्दने'—इत्यस्य 'ऋत इद्धातोः' इतीत्वं प्राप्नोति, 'वृतु वर्त्तने' इत्यादीनां गुणः, 'मृजेर्वृद्धिः'—ते च रपराः सन्त इररारो भवन्ति। *अचिकीर्त्तदिति*। णौ कृतमपीत्त्वं न स्थानिवद् भवति। यत्र द्विरुक्ते परभागस्याद्योऽजवर्णस्तत्र स्थानिवत्त्वम्। तथा च 'ओः पुयण्ज्यपरे' इति ज्ञापकमप्येतादृशमेव। ननु चान्तरङ्गा इररारः, णिज्मात्रापेक्षत्वात्; ऋकारस्तु बहिरङ्गः, स हि पश्चाद्भाविनं चङमपेक्षते, तत्कथं तेनैते बाध्यन्ते ? अत आह—*वचनसामर्थ्यादिति*। यद्यन्तरङ्गत्वादिररारः स्युः, व्यर्थमेवेदं वचनं स्यात्।

*तपरकरणमित्यादि*। असति तस्मिन्यत्र स्थानी दीर्घस्तत्रान्तरतम्याद्दीर्घ एव स्यात्। ननु भाव्यमानोऽण् सवर्णान्न गृह्णाति, तत्कथं दीर्घस्य प्रसङ्गः ? अत

न्यासः

वन्ति, न हि बहिरङ्गो ह्रस्वः, तस्मात् तेषामपवादो विज्ञायत इत्यत आह—इररारामपवाद इति। 'उपधायाश्च' इतीकारः, 'पुगन्तलघूपधस्य' इति गुणोऽकारः, 'मृजेर्वृद्धिः' इत्याकारः—इत्येते च ऋकारस्य स्थाने 'उरण् रपरः' इति रपरा भवन्तो यथाक्रममिररारो भवन्ति, तेषामपवादः। अचीकृतदिति। 'कृत संशब्दने', चुरादिः, णिच्। अवीवृतदिति। 'वृतु वर्त्तने'। अमीमृजदिति। 'मृजू शुद्धौ', हेतुमणिणिच्। ननु चान्तरङ्गत्वादिररारभिरेव भवितव्यम्, अन्तरङ्गत्वं तु पुनस्तेषां णिज्मात्राश्रयत्वात्। ऋकारस्तु चङ्परं णिचमाश्रित्य भवतीति बहिरङ्गः। तत् कथं तेनेररारो बाध्यन्ते ? इत्यत आह—वचनसामर्थ्यादिति। यद्यन्तरङ्गत्वादिररारः स्युः, वचनस्य तदा वैयर्थ्यं स्यात्; अनवकाशत्वात्। तस्मादन्तरङ्गा अपि ते बाध्यन्ते।

तपरकरणमित्यादि। असति हि तपरकरणे यत्र दीर्घः स्थानी, तत्रान्तरतम्याद् दीर्घः प्रसज्येत, तस्माद् दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यादित्येवमर्थं तपरकरणम्। ननु 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति दीर्घस्यापि स्थानिनो ह्रस्व एव भविष्यति,

दिति। न चायं भाव्यमानः, किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते ॥

नित्यं छन्दसि ॥ ८ ॥

छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य स्थाने ऋकारादेशो भवति नित्यम्। अवीवृधत्पुरोडाशेन, अवीवृधताम्, अवीवृधन् ॥

दयतेर्दिगि लिटि ॥ ९ ॥

दयतेरङ्गस्य लिटि परतो दिगीत्ययमादेशो भवति। अवदिग्ये, अवदिग्याते, अवदिग्यिरे।

दयतेरिति दीङो ग्रहणम्, न तु 'दय दाने'—इत्यस्य। तस्य हि लिटचाम्विहितः।

पदमञ्जरी

आह—*न चायमिति*। असति तपरकरणे इति भावः। कथमभाव्यमानः ? अत आह—*आदेशान्तरेति*। अयमभिप्रायः—प्राप्तप्रतिषेधस्य प्रतिप्रसवे सम्भवति नापूर्वविधानं युक्तमिति तावन्न्यायः, ततश्चासति तपरकरणे आदेशान्तराणामिररारां निवृत्त्यर्थं यथावस्थितमृवर्णस्वरूपमेवाभ्यनुज्ञायेत। सम्भावने लिङ्, सम्भवति च सवर्णग्रहणे सति स्वरूपाभ्यनुज्ञानम्। तत्र स्वरूपमेवाभ्यनुज्ञायतामिति सवर्णग्रहणं स्यात्, तपरकरणे तु सति स्वरूपाभ्यनुज्ञानं न सम्भवति, अतो भाव्यमानत्वसम्पत्तये तपरकरणमिति। प्रायेण तु *अभ्यनुज्ञायते इति* लडन्तं पठ्यते, न तत्र समीचीनोऽर्थः; क्रियमाणानुवादे हि लड् भवति। अन्ये तु व्याचक्षते—आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवाभ्यनुज्ञायत इत्येवमापद्येतेति ॥

*दयतेर्दिगि लिटि* ॥ *अवदिग्य इति*। 'देङ् रक्षणे', ङित्त्वादात्मनेपदम्, 'एरनेकाचः' इति यण्।

न्यासः

न दीर्घः ? इत्यत आह—न चायं भाव्यमान इत्यादि। किं कारणम् ? इत्यत आह—आदेशान्तरनिवृत्त्यर्थमिति। आदेशान्तरमिररारादि, तस्य निवृत्त्यर्थमीकारस्यात्मीयरूपेणैवाभ्यनुज्ञायते, न त्वपूर्व एक ऋकारो विधीयते, तत् कुतोऽस्य भाव्यमानता ! ॥

नित्यं छन्दसि ॥ अवीवृधदिति। 'वृधु वृद्धौ', हेतुमण्णिच्, ततो लुङादिः। नित्यग्रहणं पूर्वसूत्रे वेत्येतदनुवृत्तेर्विज्ञापनार्थम्; अन्यथा हि तत्राप्यस्याननुवृत्तिर्विज्ञायेत ॥

दयतेर्दिगि लिटि ॥ अवदिग्य इत्यादि। 'देङ् रक्षणे', लिट्, ङित्त्वादात्मनेपदम्, प्रथमपुरुषः, 'लिटस्तझयोरेशिरेच्' इत्येशिरेचौ, 'एरनेकाचः' इत्यादिना यणादेशः। दयतेरिति देङो ग्रहणम्; न तु दय दान इत्यस्येति। ननु च 'दय दानगतिरक्षणहिंसा-

दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते ॥

पदमञ्जरी

न तु दयेत्यस्येति । 'दय दानगतिरक्षणेषु' इत्यस्य । *तस्य लिट्याम्विहित इति* । 'दयायासश्च' इत्यनेन ।

*दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यत इति* । नाप्राप्ते तस्मिन्नस्यारम्भात् । ननु दयतेः प्राप्तं द्विर्वचनं बाध्यताम्, दिग्यादेशस्य तु स्थानिवद्भावेन द्विर्वचनं प्राप्नोति, तत्कथं बाध्यते, न हि तस्मिन्नाप्राप्ते तस्यारम्भः ? उच्यते; बाध्यबाधकभावे हि द्वैतम्—लक्ष्यं वा लक्षणेन बाध्यते, लक्षणं वा तेनेति । तत्राद्ये पक्षे स्यादेतच्चोद्यम्, द्विर्वचनशास्त्रस्याबाधितत्वात्; द्वितीये तु द्विर्वचनशास्त्रमेवास्मिन् विषये दिग्यादेशशास्त्रेण बाधितमिति कृतेऽपि दिग्यादेशे नास्ति द्विर्वचनस्य प्रसङ्गः । यद्येवम्, 'अस्तेर्भूः'–बभूव, अत्र द्विर्वचनं न स्यात्, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशश्चायम्, कोऽवकाशः ? भविता, भवितुम्; यस्तर्हि लिट्येव विधीयते—'चक्षिङः ख्याञ्', 'वा लिटि' इति, तत्र द्विर्वचनं न प्राप्नोति–आचख्यौ ? नैष दोषः; आर्धधातुके लिटीति विषयसप्तमी, ततश्च द्विर्वचननिमित्तस्य लिट उत्पत्तेः प्रागेव ख्याञादेशः, पश्चाल्लिटि परतो द्विर्वचनम् । इह तु परसप्तम्याश्रयणान्नाप्राप्ते द्विर्वचने दिगिरारभ्यमाणस्तद् बाधते । एवमन्यत्रापि, यत्र बाधो नेष्यते तत्र लक्ष्य बाधो वक्तव्यः, विषयसप्तमी वाश्रयणीया ॥

न्यासः

दानेषु' इत्येतस्य ग्रहणं कस्मान्न भवति ? इत्यत आह–तस्य हीत्यादि । लिटीत्युच्यते, न च 'दय दाने'–इत्येतस्यानन्तरो लिडस्ति; यस्मात् तस्य 'दयायासश्च' इत्यनेनाम् विहितः । ननु च 'अमन्त्रे' इति तत्रानुवर्त्तते, ततो मन्त्र आमोऽभावात् स्यादेवानन्तर्यम् ? एवं मन्यते–यथादृष्टानुविधिश्छन्दसीति । न च 'दय दाने' इत्येतस्य मन्त्रे दिग्यादेशो दृश्यत इत्यभिप्रायः ।

इहावदिग्ये–इत्यनवकाशत्वाद् दिग्यादेशे कृते पश्चाद् द्विर्वचनेन भवितव्यम्, यथा चख्यावित्यत्र 'चक्षिङः ख्याञ्' इति ख्याञादेशस्यानवकाशत्वात् तत्र कृते पश्चाद् द्विर्वचनम्, तथावदिग्ये इत्यत्रापि दिग्यादेशे कृते पश्चाद् द्विर्वचनं केन बाध्येत ?–इति यश्चोदयेत्, तं प्रत्याह–दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यत इति । कथं पुनरिष्यमाणमपि लभ्यते ? नित्यग्रहणानुवृत्तेः । इह पूर्वसूत्रान्नित्यग्रहणमनुवर्त्तते, न चात्र विभाषा प्राप्नोति यन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते । तस्मादन्यल्लिटि यत् कार्यं प्राप्नोति, तन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते; तेनैवमभिसम्बन्धः करिष्यते—'लिटि प्राप्नुवतां कार्याणां दिग्यादेश एव नित्यं भवति, नान्यत् कार्यम्' । इत्येवं द्विर्वचननिवर्त्तनं भवति । यणादेशस्तु लिटीत्युच्चार्य न विधीयत इति 'एरनेकाचः' इत्यचि भवति ॥

## ऋतश्च संयोगादेर्गुणः ॥ १० ॥

ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः। स्वृ—सस्वरतुः, सस्वरुः। ध्वृ—दध्वरतुः, दध्वरुः। स्मृ—सस्मरतुः, सस्मरुः।

ऋत इति किम्? चिक्षियतुः, चिक्षियुः। संयोगादेरिति किम्? चक्रतुः, चक्रुः।

प्रतिषेधविषयेऽपि गुणो यथा स्यादित्ययमारम्भः। वृद्धिविषये

पदमञ्जरी

*ऋतश्च संयोगादेर्गुणः॥ सस्वरतुरित्यादि।* 'स्वृ शब्दोपतापयोः', 'ध्वृ हूर्च्छने', 'स्मृ चिन्तायाम्'। अत्र परत्वाद् गुणे कृते पश्चाद् द्विर्वचनमिति गुणविधानसमये संयोगादित्वमङ्गस्य। यद्वा—द्विर्वचने हलादिशेषे कृते साम्प्रतिकासम्भवाद् भूतपूर्वसंयोगादित्वमाश्रित्य गुणः॥

*प्रतिषेधविषय इति।* थलि, उत्तमे णलि णित्त्वाभावपक्षे च सामान्यलक्षणो नैव गुणः सिद्धः—सस्वर्थ, अहं किल सस्वर। वृद्धिविषये तर्हि परत्वादयमेव गुणः प्राप्नोति? तत्राह—*वृद्धिविषये त्वित्यादि।* गुणस्यावकाशः—सस्वरतुः, णिति

न्यासः

ऋतश्च संयोगादेर्गुणः॥ सस्वरतुः, सस्वरुरिति। 'स्वृ शब्दोपतापयोः', 'उरत्' इत्यभ्यासस्यात्त्वम्, रपरत्वम्, हलादिशेषः। दध्वरतुः, दध्वरुरिति। 'ध्वृ हूर्च्छने'। सस्मरतुः, सस्मरुरिति। 'स्मृ आध्याने'। ननु च सर्वत्रैव साभ्यासमङ्गम्, न च तत् संयोगादि? नैष दोषः, 'द्विष्प्रयोगो द्विर्वचनम्' इत्येषोऽत्र पक्षः, तत्र परस्याप्यङ्गसंज्ञा भवत्येव। अथापि 'स्थाने द्विर्वचनम्', इत्यप्यदोषः; सर्वत्रैव हि लिट्यभ्यासः संयोगादित्वं विहन्ति, उच्यते चेदं वचनम्, तत्रैवं विज्ञास्यामः—प्राग्द्विर्वचनात् संयोगादित्वमस्ति, इह च द्विर्वचनात् प्राक् संयोगादित्वमस्ति। चिक्षियतुः, चिक्षियुरिति। 'क्षि क्षये', इयङादेशः।

प्रतिषेधविषयेऽपीत्यादि। यः 'क्ङिति च' इत्यस्य प्रतिषेधस्य विषयो न भवति थलादिः, तत्र 'सार्वधातुकार्धधातुकयोः' इत्येवं गुणः सिद्धः। तस्माद् गुणप्रतिषेधविषयेऽपि यथा स्यादित्ययमारम्भः। वृद्धिविषयेऽपि परत्वाद् गुणेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—वृद्धिविषये त्वित्यादि। गुणस्यावकाशः—सस्वरतुः, सस्वरुरिति; ञ्णिति वृद्धेरवकाशः—स्वारकः, ध्वारक इति; सस्वार, दध्वारेत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन वृद्धिरेव भवति।

अथ तपरकरणं किमर्थम्, दीर्घस्यापि मा भूदित्येवमर्थं चेत्? नैतदस्ति; भवितव्यमेव हि दीर्घस्योत्तरसूत्रेण—'स्तॄञ् आच्छादने', आतस्तरतुः, आतस्तरुरिति। ननु

तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते । सस्वार । सस्मार । लिटीत्येव—स्मृतः । स्मृतवान् ।

❀ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्त्तव्यम् ❀ ।

सञ्चस्करतुः, सञ्चस्करुः—इति । अत्र हि 'पूर्वं धातुः साधनेन युज्यते

पदमञ्जरी

वृद्धेरवकाशः—कारकः, हारकः; सस्वारेत्यादौ वृद्धिविषये पूर्वविप्रतिषेधः । ननु च परत्वाद् गुणेऽपि कृते तस्मिन् 'अत उपधायाः' इति सिद्धम् ? सत्यम्; परिहारान्तरं त्विदं द्रष्टव्यम्—तपरकरणं निर्देशार्थम् । दीर्घस्य तु आतस्तरुरित्यादावुत्तरसूत्रेण गुणो भवत्येव । न च तस्या अपि प्राप्तेः संयोगादिषु तपरकरणसामर्थ्याद्व्यावृत्तिः; निर्देशार्थतया तस्योपपत्तेः ।

*संयोगादेरित्यादि* । अङ्गस्यासंयोगादित्वाद्वचनम् । उपधाग्रहणं देशविशेषोपलक्षणम्, अल्मात्रस्योपधासंज्ञाविधानात् संयोगस्योपधात्वासम्भवात्, संयोगावयवे वा संयोगशब्दो वर्त्तते, उपधात्वं तु मुख्यम् । *सञ्चस्करतुरिति* । 'सम्पर्युपेभ्यः करोतौ भूषणे', 'अडभ्यासव्यवायेऽपि' इति सुट् । यदि संयोगोपधग्रहणं क्रियते, नार्थः संयोगादिग्रहणेन; इहापि सस्वरतुः, सस्वरुरिति 'संयोगोपधस्य' इत्येव सिद्धम् ? भवेत्सिद्धम्-सस्वरतुः, सस्वरुरिति; इदं तु न सिद्ध्यति—सञ्चस्करतुः, सञ्चस्करुरिति, किं कारणम् ? बहिरङ्गलक्षणत्वात्—बहिरङ्गः सुट्, अन्तरङ्गो गुणः । कथं सुटो बहिरङ्गत्वम् ? अत आह—*अत्र हीति* । अत्र दर्शने साधनाभिधायी लिट् तावद्भवति, ततश्च तावत्येव निमित्तमस्तीति गुणः

न्यासः

चैतस्मात् तपरकरणान्न प्राप्नोति, सावकाशं चोत्तरवचनमसंयोगादौ—'कॄ विक्षेपे', निचकरतुः, निचकरुरिति ? यद्येवम्, एवं तर्हि न चेदं तपकरणम्, किं तर्हि ? तद्विनायं निर्देशः ।

**संयोगादेरित्यादि** । इहाङ्गप्रकरणादङ्गं संयोगादित्वेन विशिष्यते । न च करोतेः संयोगाद्यङ्गमिति न प्राप्नोति । तस्मात् संयोगोपधग्रहणं कर्त्तव्यमिति करोतेरपि यथा स्याद् गुणः । सञ्चस्करतुः, सञ्चस्करुरिति । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुट्, स च 'अडभ्यासव्यवायेऽपि' इति वचनादभ्यासव्यवायेऽपि भवति । किं पुनः कारणमिह गुणो न सिध्यति, यावता सुटि कृते 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति करोतिः संयोगादिर्भवति ? इत्यत आह—अत्र हीत्यादि । अनेन सुटो बहिरङ्गतां प्रतिपादयति । बहिरङ्गत्वे हि तस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यन्तरङ्गे गुणे कर्त्तव्ये बहिरङ्गस्य सुटोऽसिद्धत्वात् संयोगादित्वं करोतेर्नोपपद्यते । 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन'—इत्यस्मिन् दर्शने धातूपसर्गयोः कार्यमन्तरङ्गमिति सुटोऽपि

पश्चादुपसर्गेण' इत्यत्र दर्शने लिटि कृते तदाश्रये च द्विर्वचने पश्चादुपसर्गयोगे सति 'अडभ्यासव्यायेऽपि' इति सुट् क्रियते। एवं च कृत्वा संस्कृषीष्ट, उपस्कृषीष्टेत्यत्र सुटो बहिरङ्गलक्षणस्यासिद्धत्वाद् 'ऋतश्च संयोगादेः' इति इडामो न भवति ॥

ऋच्छत्यृताम् ॥ ११ ॥

पदमञ्जरी

प्राप्नोति, सुट् तु पश्चादुपनतमुपसर्गमपेक्षत इति बहिरङ्गः, तेनासौ गुणे कर्त्तव्येऽसिद्ध इति असंयोगोपधत्वाद् गुणो न स्यात्। सस्वरतुरित्यादौ च सावकाशं वचनम्। संयोगादिग्रहणे तु क्रियमाणे संयोगोपधग्रहणस्यानन्यार्थत्वादसिद्धत्वं बाध्यत इति गुणसिद्धिः। अवश्यं च सुटो बहिरङ्गत्वमेषितव्यमित्याह—*एवं च कृत्वेति*। 'सुट्कात्पूर्वः' इत्यत्रोक्तम्—कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थमिति, इह तु *भाष्यकार*पक्षावलम्बनेन भक्तत्वेऽपि परिहार उक्त इति न विरोधः ॥

न्यासः

धातूपसर्गयोः कार्यत्वादन्तरङ्गता स्यात्। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इत्यस्मिन् दर्शने सुड् बहिरङ्गो भवति। तथा हि—अस्मिन् दर्शने निरुपसर्गस्यैव धातोरर्थः साधनेन युज्यत इति साधनाभिधायी पूर्वं तावल्लिट् कर्त्तव्यः, तत्र कृते तदाश्रये द्विर्वचने कृते पश्चादुपसर्गयोगे 'अडभ्यासव्यवायेऽपि' इति सुट् क्रियते। एवञ्च क्रियमाणे ह्यनेकपदाश्रितत्वाद्, बह्वपेक्षत्वाच्च सुटो बहिरङ्गता प्रतिपाद्यते। गुणस्तु लिङुत्पत्तिसमनन्तरकालमेव प्राप्नोति, नापरं किञ्चिदपेक्षते, एकपदापेक्षत्वादल्पापेक्षत्वाच्चान्तरङ्गः, ततश्च तस्मिन् कर्त्तव्ये सुटोऽसिद्धत्वात् करोतिः संयोगाद्यङ्गं न भवति। तस्मादसौ न प्राप्नोति। एवञ्च कृत्वेत्यादि। यत एवं सुड् बहिरङ्गः, एवञ्च कृत्वाऽन्तरङ्ग इटि कर्त्तव्ये तस्यासिद्धत्वादसंयोगादित्वात् करोतेरुपस्कृषीष्ट, संस्कृषीष्ट—इत्यत्र 'ऋतश्च संयोगादेः' इतीडागमो न भवति। एतेन बहिरङ्गतैव सुटः प्रतिपादिता।

ननु चाङ्गाधिकारात् प्रत्यासत्तेरङ्गावयव एव संयोगो गृह्यते, कात्पूर्वग्रहणेन तत्र ज्ञापितमभक्तत्वं सुटः, ततश्चाभक्तत्वादेवासंयोगादित्वात् करोतेरिड् न भविष्यति, किमत्र बहिरङ्गत्वेनासिद्धत्वेनोपन्यस्तेन? सत्यमेतत्; एवं मन्यते—भवतु नाम करोतिभक्तत्वं सुटः, तथाप्यसिद्धत्वात् तस्य संस्कृषीष्ट—इत्यत्रेट् प्रसङ्गो न भविष्यतीति संयोगोपधग्रहण कर्त्तव्यमिति। अस्यायमर्थः—संयोगोपधः करोतिरङ्ग गृह्यते येन तत् संयोगोपधग्रहणव्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानं कर्त्तव्यम्—चकारोऽत्र क्रियते, स च करोतेः संयोगोपधस्य समुच्चयार्थः। तेन तस्यापि सुटि कृते संयोगोपधस्य गुणो भविष्यतीति।

ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ऋृकारान्तानां च लिटि परतो गुणो भवति। ऋच्छ—आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। ऋ—आरतुः, आरुः। ऋृकारान्तानाम्—निचकरतुः, निचकरुः। निजगरतुः, निजगरुः।

ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ऋतां तु प्रतिषिद्धः।

वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते। निचकार। निजगार॥

पदमञ्जरी

ऋच्छत्यृताम्॥ 'ऋच्छ गत्यादिषु'। अर्त्तेरप्यत्र प्रश्लेषः, यदाह—ऋ इत्येतस्येति। एतच्च बहुवचननिर्देशादवसीयते। ऋवर्णस्य ग्रहणं तु न भवति; ऋकारान्तानां पृथग्ग्रहणात्। किमर्थं पुनरर्त्तिः प्रश्लिष्यते? आरतुः, आरुरिति यथा स्यात्। अन्यथा ऋ अतुस्, ऋ उस् इति स्थिते द्विर्वचनम्, उरदत्वं च बाधित्वा वार्णत्वात्सवर्णदीर्घत्वम्; तत्र यद्यभ्यासग्रहणेन ग्रहणम्, उरदत्वं हलादिशेषः, 'अत आदेः' इति दीर्घत्वम्, 'आतो लोप इटि च',—अतुरुरिति वचनमेव श्रूयेत। अथ धातुग्रहणेन ग्रहणम्? तत ऋकारान्तत्वाद् गुणे कृते अरतुः, अरुरिति रूपं स्यात्। तथा क्वसौ गुणे कृते अरित्यस्य द्विर्वचनम्, हलादिशेषः, 'अत आदेः', सवर्णदीर्घत्वम्, 'वस्वेकाजाद्घसाम्' इतीट्—आरिवानिति भवति।

*ऋच्छतेरलघूपधत्वाद् गुण इति*। अन्तरङ्गत्वात् 'छे च' इति तुकि कृते 'संयोगे गुरु' इति ऋकारो गुरुर्भवति, न च लघुः; नाप्युपधा। *ऋतां त्विति*। सूत्रवदत्राप्यर्त्तिप्रश्लेषः। *वृद्धिविषये त्विति*। अस्तु वा परत्वाद् गुणः, 'अत उपधायाः' इति सिद्धमिति परिहारान्तरम्॥

न्यासः

ऋच्छत्यृताम्॥ 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु'। अर्त्तेरप्यत्र प्रश्लेषः; बहुवचननिर्देशात्। अत एवाह—ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ऋकारान्तानां चेति। ऋकारान्ताः—'कॄ विक्षेपे,' 'गॄ निगरणे'—इत्येवमादयः। आनर्च्छतुरानर्च्छुरित्यादि। अतुसुसौ, गुणः, द्विर्वचनम्, अभ्यासकार्यम् पूर्ववत्, 'अत आदेः' इति दीर्घः, 'तस्मान्नुड् द्विहलः' इति नुट्। आरतुः, आरुरिति। पूर्ववदभ्यासस्य दीर्घः, ततः पूर्वसवर्णेनेति।

ऋच्छतेरलघूपधत्वादित्यादि। अलघूपधत्वं तु तस्यान्तरङ्गत्वात्। 'छे च' इति तुकि कृते 'संयोगे गुरु' इति गुरुसंज्ञायां सत्यां गुरूपधत्वान्न प्राप्नोतीति वेदितव्यम्। ऋतां त्वित्यादि। ऋ ऋतान्तु प्रतिषिद्ध एवेति गुणो विधीयत इत्यपेक्ष्यते। गुणप्रतिषेधस्तु तेषाम् 'असंयोगाल्लिट् कित्' इति कित्त्वे सति 'क्ङिति च' इत्यनेन वेदितव्यः।

वृद्धिविषये त्वित्यादि। यथा 'ऋतश्च संयोगादेः' इति वृद्धिविषये पूर्वविप्रतिषेधेन

## शॄदॄपॄां ह्रस्वो वा ॥ १२ ॥

शॄ, दॄ, पॄ—इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति। विशश्रतुः, विशश्रुः। विशशरतुः, विशशरुः। विदद्रतुः, विदद्रुः। विददरतुः, विददरुः। निपप्रतुः, निपप्रुः। निपपरतुः, निपपरुः।

ह्रस्ववचनमित्त्वोत्त्वनिवृत्त्यर्थम्।

केचिदेतत्सूत्रं प्रत्याचक्षते। 'श्रा पाके', 'द्रा कुत्सायाम्', 'प्रा पूरणे'—इत्येतेषामनेकार्था धातव इति शॄदॄप्रामर्थे वर्त्तमानानाम्—विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः निपप्रुः—इत्येतानि रूपाणि

### पदमञ्जरी

शॄदॄप्रां ह्रस्वो वा॥ 'शॄ हिंसायाम्', 'दॄ विदारणे', 'पॄ पालनपूरणयोः'। *विशशरतुरित्यादि*। 'न शसददवादिगुणानाम्' इत्येत्त्वाभ्यासलोपयोः प्रतिषेधः।

अथ किमर्थं ह्रस्वो विकल्प्यते, न प्रकृत एव गुणो विकल्प्येत, गुणाभावपक्षे यणादेशेन विशश्रतुरित्यादिरूपसिद्धिः ? इत्यत आह—*ह्रस्ववचनमित्त्वनिवृत्त्यर्थमिति*। अन्यथा 'वार्णादाङ्गं बलीयः' इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वा इत्त्वं स्यात्।

*केचिदित्यादि*। कथं पुनरस्य प्रत्याख्याने विशश्रतुरित्यादिरूपसिद्धिः ? इत्यत आह—*श्रा पाक इत्यादि*। ननु चार्थभेदः ? न इत्याह—*अनेकार्था इति*।

### न्यासः

वृद्धिरेवेष्यते, तथा ॠ-ॠतामपीति। गुणस्यावकाशः—निचकरतुः, निचकरुरिति, वृद्धेरवकाशः—कारकः, हारक इति; निचकार, निजगारेत्यत्र वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते॥

शॄदॄप्रां ह्रस्वो वा॥ 'शॄ हिंसायाम्' दॄ विदारणे', 'पॄ पालनपूरणयोः'—एषां पूर्वसूत्रेण नित्ये गुणो भवत्येव। विशश्रतुरिति। ह्रस्वत्वे कृते यणादेशः। ह्रस्ववचनमित्यादि। असति ह्रस्वग्रहणे वावचनेन विकल्पिते यस्मिन् पक्षे गुणो नास्ति तस्मिन् पक्ष 'ॠत इद् धातोः' इतीत्त्वं प्रसज्येत, 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वञ्च। तस्मात् तन्निवृत्त्यर्थं ह्रस्व इत्युच्यते ? ॠदिति कर्त्तव्ये ह्रस्वग्रहणम्।

केचिदित्यादि। कथं पुनरस्य प्रत्याख्याने विशश्रतुः—इत्येवमादीनि रूपाणि सिद्ध्यन्ति ? इत्याह—श्रा पाक इत्यादि। यद्यपि 'आतो लोपः इटि च' इत्याकारलोपे कृते श्रादीनां विशश्रतुरित्येवमादीनि रूपाणि सिध्यन्तीति, तथाप्यर्थभेदो भवति; तदाऽयुक्तमस्य प्रत्याख्यानमित्याशङ्क्यानेकार्थत्वाद्धातूनामित्युक्तम्। तथा च सतीत्यादिना प्रत्याख्यानं प्रत्याचष्टे। यदि सूत्रस्य प्रत्याख्यानं क्रियते, क्वसौ कृते विशश्रवानिति रूपं

साधयन्ति । तथा च सति क्वसौ विशश्रृवानित्येतद्रूपं न स्यात् ॥

के ऽणः ॥ १३ ॥

के प्रत्यये परतोऽणो ह्रस्वो भवति । ज्ञका । कुमारिका । किशोरिका ।

अण इति किम् ? गोका । नौका ।

राका, धाकेत्यत्र 'उणादयो बहुलम्' इति ह्रस्वो न भवति । 'न कपि' इति प्रतिषेधसामर्थ्यात्कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति ॥

न कपि ॥ १४ ॥

कपि प्रत्यये परतोऽणो ह्रस्वो न भवति । बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः ।

पदमञ्जरी

*तथा सतीत्यादिना* प्रत्याख्यानं प्रत्याचष्टे । तत्र श्रृणातेः क्वसौ—विशशर्वानिति, श्रातेस्तु—विशश्रिवानिति । तस्माद् ह्रस्व एव विकल्पनीय इत्यर्थः ॥

*केऽणः* ॥ *ज्ञकेति* । 'भस्त्रैषाजाज्ञा' इतीत्त्वप्रतिषेधः ।

*गोकेति* । 'अणिति पूर्वेण णकारेण प्रत्याहारः' इति 'लण्' इत्यत्र प्रतिपादितम् । *राका, धाकेति* । 'कृदाधाराचिकलिभ्यः कः' । *कनोऽपीति* । सानुबन्धकस्योपलक्षणमेतत्, 'ओर्देशे ठञ्', नैषादकर्षुकः ॥

*न कपि* ॥ बहुकुमारीक इत्यादौ 'नद्यृतश्च' इति कप् ।

न्यासः

न सिध्यति, तथा हि—यदि श्रृणातेर्ह्रस्वो न क्रियते, तदा विशशर्वानिति रूपं स्यात् । अथ श्रातेः, विशश्रिवानिति । तस्मादयुक्तमस्य प्रत्याख्यानम् ॥

केऽणः ॥ अणिति पूर्वेण णकारेण प्रत्याहारग्रहणम्; अन्यथा 'केऽणः' इत्येवं ब्रूयात् । अथ वा—अच इत्येतदपि न ब्रूयात्, अच एव हि ह्रस्वदीर्घप्लुता भवन्ति । ज्ञकेति । जानातीति ज्ञा, 'इगुपधज्ञाप्रीकिरः कः' इति कः, तदन्ताट्टाप् । अज्ञाता ज्ञेति 'प्रागिवात् कः' । अथ वा—अनुकम्पिता ज्ञेति 'अनुकम्पायाम्' इति कन्, कनि कृते तदन्ताट्टाप् ।

अथेह कस्मान्न भवति—'कृदाधाराचिकलिभ्य कन्' इति रातेर्धातेश्च कन्, तदन्ताट्टाप्—राका, धाकेत्यादि । सुबोधम् । निरनुबन्धकस्येह ग्रहणान्निरनुबन्धकपरिभाषया कनो ग्रहणेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्त्तुमाह—न कपीत्यादि । यद्येषा परिभाषोपतिष्ठते, तदा 'न कपि' इति प्रतिषेधोऽनर्थकः स्यात् । सानुबन्धकत्वादेव कपो ग्रहणं न भविष्यतीत्यभिप्रायः ॥

न कपि ॥ बहुकुमारीक इति । बह्व्यः कुमार्यो यस्य सः । 'नद्यृतश्च' इति कप्, अनुबन्धलोपः ।

'गोस्त्रियोरुपसर्जनस्य' इत्ययमपि ह्रस्वः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ।।

पदमञ्जरी

अथात्रास्मिन्प्रतिषिद्धे उपसर्जनह्रस्वत्वं कस्मान्न भवति ? अत एव प्रतिषेधात्। नायमस्य ह्रस्वस्य प्रतिषेधः, किं तर्हि ? अनन्तरस्य 'केऽणः' इत्यस्य। कुत एतत् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति। एवं तर्ह्याह—*अयं कपि ह्रस्वो न भवतीति*। यदि चोपसर्जनह्रस्वत्वं स्यात्, वचनमिदमनर्थकं स्यात्। अतो वचनसामर्थ्याद्यच्च यावच्च ह्रस्वत्वं तस्य प्रतिषेधो भविष्यति। अस्ति वचनस्यावकाशो यत्रोपसर्जनह्रस्वत्वं न प्राप्नोति, अस्त्रीप्रत्यये—बहुयवागूकः, बहुलक्ष्मीक इति, स्त्रीप्रत्यये उपसर्जनह्रस्वत्वं स्यादेव। तत्राह—*गोस्त्रियोरुपसर्जनस्येत्ययमपीति*। कुतः ? इत्यत आह—*समासार्थे हीति*। 'समासान्ताः' इत्यत्रान्तशब्दोऽवयववचनः। कथं च कप्समासावयवो भवति ? यदि तेन सह समासो भवति। कथं च तेन समासो भवति ? यद्यकृत एव समासे तदर्थादुत्तरपदात् कब्भवति, पश्चात्तदन्तेन समासः।

न्यासः

अथात्रास्मिन् ह्रस्वत्वे प्रतिषिद्ध उपसर्जनह्रस्वत्वं कस्मान्न भवति ? अत एव प्रतिषेधान्न भविष्यतीति चेद् ? न; 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इत्यनन्तरस्यैव ह्रस्वस्य ह्ययं प्रतिषेधो न सर्वस्य। कपीति वचनसामर्थ्यादुपसर्जनह्रस्वत्वमिति न भविष्यतीति चेद् ? यत्र ह्युपसर्जनह्रस्वत्वस्य प्राप्तिरेव नास्ति—बहुयवागूकः, बहुलक्ष्मीक इति, तत्र वचनस्य चरितार्थत्वाद्, न ह्यत्रोपसर्जनह्रस्वत्वस्य प्राप्तिरस्ति, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वशासने स्त्रीशब्देन स्त्र्यधिकारविहितानां प्रत्ययानां टाबादीनां ग्रहणात्। तस्माद् बहुकुमारीक इत्यत्रोपसर्जनस्य ह्रस्वत्वेन भवितव्यमित्यत आह—गोस्त्रियोरुपसर्जनस्येत्यादि। कस्मान्न भवति ? इत्याह—समासार्थे हीत्यादि। उपसर्जनह्रस्वत्वं हि स्त्रीप्रत्ययान्तस्य समासप्रातिपदिकस्य विधीयते, तद्विधाने 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यतः प्रातिपदिकग्रहणानुवृत्तेः समासप्रातिपदिकस्यैव स्त्रीप्रत्ययान्तस्योपसर्जनह्रस्वः स्यात्। न च बहुकुमारीक इत्यादौ स्त्रीप्रत्ययान्तं समासप्रातिपदिकं भवति; यस्मात् 'समासान्ताः' इत्यधिकार एवायं कब् विधीयते। 'समासान्ताः' इत्यत्रान्तग्रहणस्यैतत् प्रयोजनम्—समासस्यान्तोऽवयवो यथा स्यादिति, स च कथं समासस्यावयवो भवति ? यदि तेन सह समाससंज्ञा भवति। कथञ्च तेन समाससंज्ञा भवति ? यद्यकृते समासे समासार्थादुत्तरपदात् कब्भवति, पश्चात् कबन्तेन समासो भवति, नान्यथा। तस्मात्

## आपोऽन्यतरस्याम् ॥ १५ ॥

आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम् । बहुखट्वाकः, बहुखट्वकः । बहुमालाकः, बहुमालकः ॥

## ऋदृशोऽङि गुणः ॥ १६ ॥

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः—अदर्शत्, अदर्शताम्, अदर्शन् ॥

### पदमञ्जरी

ननु च कपः पूर्वं सुबन्तम्, तत्कथं कबन्तेन समासः ? वचनात्समासान्तेष्वसुबन्तेन समासः । अपर आह—'उत्तरपदे या विभक्तिस्तस्याश्च या प्रकृतिस्तयोर्मध्ये विकरणवत्समासान्तः, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्सुबन्तेन समासः' इति; एवं वदतो दोषः; बहुचर्मिकेत्यादौ 'प्रत्ययस्थात्' इतीत्त्वं न स्यात् । किं कारणम् ? कात्परः सुप्, ततः परष्टाप्, यथा—बहुपरिव्राजका मथुरेति । यदि कपि कृते पश्चात्तदन्तेन समासः, किमायातम् ? इत्यत आह—*स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवतीति* । 'गोस्त्रियोः' इत्यत्र प्रातिपदिकस्येति वर्त्तते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासे सति, न चोक्ते प्रकारे कपः पूर्वभागस्य समासत्वं प्रातिपदिकत्वं वा समस्ति, तस्मान्नोपसर्जनह्रस्वत्वमिति ॥

*ऋदृशोऽङि गुणः* ॥ 'ऋ' इति वर्णग्रहणम्; व्याख्यानात् । अकरदित्यादौ 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । *असरदिति* । 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्यङ् । *अदर्शदिति* । 'इरितो वा' इत्यङ् । गुणग्रहणं किम्, नाकार एवोच्येत—'ऋदृशोऽङ्यः' इति ? नैवं शक्यम्; दृशेरन्त्यस्यात्वं स्यात्, गुणग्रहणात्त्विको भवति । यदि त्वण् इत्यनुवर्त्तते, शक्यं गुणग्रहणमकर्त्तुम् । तथा तु न कृतमित्येव ॥

### न्यासः

समासान्ताधिकारे कपो विधानात् समासार्थादुत्तरपदात् कपि कृते पश्चात् समासेन भवितव्यम् । ततश्च स्त्रीप्रत्ययान्तमिह समासप्रातिपदिकं न भवतीति न भवत्युपसर्जनह्रस्वत्वम् ॥

आपोऽन्यतरस्याम् ॥ बहुखट्वाक इति । 'शेषाद् विभाषा' इति कप् ॥

ऋदृशोऽङि गुणः ॥ 'क्ङिति च' इति प्रतिषेधे प्राप्तेऽयं गुणो विधीयते । अकरदिति । कृञो लुङ्, च्लिः, तिप्, 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । असरदिति । 'सृ गतौ' । आरदिति । 'ऋ गतिप्रापणयोः', 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति च्लेरङ्, अर्त्तेरजादित्वादाटि कृते 'आटश्च' इति वृद्धिः । अदर्शदिति । 'इरितो वा'

अस्यतेस्थुक् ॥ १७ ॥

अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः । आस्थत्, आस्थताम्, आस्थन् ॥

श्वयतेरः ॥ १८ ॥

श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः । अश्वत्, अश्वताम्, अश्वन् ॥

पतः पुम् ॥ १९ ॥

पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत्, अपप्तताम्, अपप्तन् ॥

वच उम् ॥ २० ॥

वचेरङ्गस्य अङि परत उमागमो भवति । अवोचत्, अवोचताम्, अवोचन् ॥

शीङः सार्वधातुके गुणः ॥ २१ ॥

पदमञ्जरी

*अस्यतेस्थुक्* ॥ *आस्थदिति* । 'अस्यतिवक्तिख्यातिभ्योऽङ्' ॥
*श्वयतेरः* ॥ *अश्वदिति* । 'जॄस्तम्भु' इत्यादिनाङ् ॥
*पतः पुम्* ॥ *अपप्तदिति* । लृदित्वादङ् ॥
*शीङः सार्वधातुके गुणः* ॥ अनुबन्धनिर्देशो यङ्लुकि मा भूदिति—शेशीतः,

न्यासः

इत्यङ् । अथ गुणग्रहणं किमर्थम्, अकार एव नोच्येत ? नैवं शक्यम्; अकार इत्युच्यमाने दशेरन्त्यस्य स्यात् । गुणग्रहणे तु सति संज्ञाविधाने नियम इतीक एव स्थाने भवति ।

अस्यतेस्थुक् ॥ आस्थदिति । 'असु क्षेपणे', 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः ।

श्वयतेरः ॥ अश्वदिति । 'टुओश्वि गतिवृद्ध्योः' । जॄस्तम्भुम्रुचु' इत्यादिनाङ्, द्वयोरकारयोः पररूपत्वम् ॥

पतः पुम् ॥ अपप्तदिति । 'शल हुल पत्लृ गतौ', पुषादिनाङ् । मकारो देशविध्यर्थः ॥

वच उम् ॥ अवोचदिति । 'वच परिभाषणे', 'अस्यतिवक्तिख्यातिभ्यः' इत्यादिनाङ् । मकारस्य तदेव प्रयोजनम् ।

शीङः सार्वधातुके गुणः ॥ अप्राप्तविषयत्वाद् गुणविधानस्य ङिति सार्वधातुक एतद्विधानम् । पिति तु सामान्यलक्षणेनैव गुणः सिद्धः । लोट्, 'आडुत्तमस्य पिच्च'

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । शेते, शयाते, शेरते । सार्वधातुक इति किम् ? शिश्ये ॥

अयङ्यि क्ङिति ॥ २२ ॥

यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्य 'अयङ्'—इत्ययमादेशो भवति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य ।

यीति किम् ? शिश्ये । क्ङितीति किम् ? शेयम् ॥

पदमञ्जरी

शेश्यतीति । 'शीङ एः' इत्युच्यमाने सानुबन्धकात् षष्ठ्युच्चारिता, अनुबन्धश्च निवृत्तिधर्मा, तस्य लोपेन निवृत्तौ प्राप्तायामयमन्यः प्रकारो विज्ञायेत, नास्य लोपो निवर्त्तकः, किं तर्हि ? एकार इति । गुणग्रहणं त्विकं निवर्त्तयति । ङकारस्तु स्वेनैव हेतुना निवर्त्तते । तस्माद् गुणग्रहणम् ॥

*अयङ्यि क्ङिति ॥ शय्यत इति । यक् । शाशय्यत इति । यङ्*, परत्वान्नित्यत्वाच्चायङादेशे कृते द्विर्वचनम् । *प्रशय्येति* । ल्यप् ॥

न्यासः

इत्यादि—शयै शयावहै इति । तस्माद् यत्र गुणो न प्राप्नोति तत्र विधीयते । शेरत इति । अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इति झकारस्यादादेशः । अत्र 'शीङो रुट्' इति रुडागमो भवति ।

शिश्य इति । लिट्, 'लिट् च' इत्यार्धधातुकसंज्ञा, उत्तमपुरुषस्यैकवचनम्, प्रथमपुरुषस्यकवचनं वा । यदा प्रथमपुरुषस्यैकवचनं तदैश्, पूर्ववदेव द्विर्वचनम्, 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः; अन्यदेट्, टेरेत्त्वम् । अथ गुणग्रहणं किमर्थम्, न 'शीङः सार्वधातुके एत्' इत्येवोच्येत ? एवं मन्यते—'शीङः' इति सानुबन्धकनिर्देशे षष्ठ्युच्चारिता, निवृत्तिधर्मा चानुबन्धः, तस्येत्संज्ञायां लोपेन निवृत्तौ प्राप्तायामयमन्यप्रकारो निवृत्तेर्विज्ञायेत । तस्य नान्येत्संज्ञा निवर्त्तिका, किं तर्हि ? एकारः । एवं तर्हि ङकारस्य स्थान एकार आपद्येत । तस्माद् गुणग्रहणं त्विकमुपस्थापयति । ङकारस्तु तेनैव हेतुना निवर्त्तत इति । यद्येवम्, ङकारो नोच्चारयिष्यते, 'शियः' इति निर्देशः करिष्यते ? नैव शक्यम्; एवं हि निर्देशे सति यङ्लुक्यपि स्यात्—शेशीतः, शेश्यतीति ॥

अयङ्यि क्ङिति ॥ शय्यत इति । 'सार्वधातुके यक्' । शाशय्यत इति । यङ्, परत्वान्नित्यत्वाच्च द्विर्वचनात् प्रागयङादेशः, ततः शय्येत्यस्य द्विर्वचनम्, 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम् । प्रशय्येति । 'समानकर्तृकयोः पूर्वकाले क्त्वा,' 'कुगतिप्रादयः' इति समासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । शेयमिति । 'अचो यत्' शय्येति । 'संज्ञायां समजनि' इत्यादिना क्यप् ॥

## उपसर्गाद्ध्रस्व ऊहतेः ॥ २३ ॥

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः। समुह्यते। समुह्य गतः। अभ्युह्यते। अभ्युह्य गतः।

उपसर्गादिति किम्? ऊह्यते। ऊहतेरिति किम्? समीह्यते।

'यि' इत्येव—समूहितम्। 'क्ङिति' इत्येव—समूह्योऽयमर्थः। 'अणः' इत्येव—आ + ऊह्यते=ओह्यते। समोह्यते॥

## एतेर्लिङि ॥ २४ ॥

### पदमञ्जरी

*उपसर्गाद्ध्रस्व ऊहतेः॥* ङितोऽसम्भवादुदाहारणं न प्रदर्शितम्। यङस्तावदजादित्वादसम्भवः। यासुटोऽपि शपा व्यवधानात्। आशिषि तु किदेव यासुट्। एवं चोहतेर्दीर्घप्रयोगनिवृत्त्यर्थं वचनम्। *समुह्यत* इत्यादिकं तु रूपं वहेरेव सम्प्रसारणे कृते सिद्धम्। अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिञ्चित्करः। *आ ऊह्यत इति*। नेदं लौकिकं वाक्यं प्रयोगार्हम्, न हि तत्र धातूपसर्गयोरसंहितास्ति; 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इति स्मरणात्। तस्मादलौकिकेन प्रक्रियावाक्येनाङः प्रश्लेषः प्रदर्श्यत इति ह्रस्वत्वं न कृतम्; लौकिकप्रयोगसम्पादनपरत्वाच्छास्त्रस्य। अन्ये त्वत्रापि ह्रस्वत्वं पठन्ति। *ओह्यत इति*। अत्रैकादेशे कृते व्यपवर्गाभावाद् ह्रस्वाभावः, 'उपसर्गादूहतेः' इत्युभयत आश्रयणादन्तादिवद्भावोऽपि नास्ति। *समोह्यत इति*। अत्रैकादेशस्यादिवद्भावात्समः परस्य ह्रस्वत्वप्रसङ्गः। 'अणः' इत्यनुवृत्तेस्तु न भवति, पूर्वेणैव णकारेण प्रत्याहारः। एवं च रूपाश्रयोऽयं विधिरिति ताद्रूप्यानतिदेशाद् ह्रस्वाभावः॥

### न्यासः

**उपसर्गाद्ध्रस्व ऊहतेः॥ समुह्य गत इति**। 'ऊह वितर्के'। यद्यपि वहेरपि यजादित्वात् किति सम्प्रसारणेनैतत् सिध्यति, तथाप्यूहेरपि दीर्घस्याश्रवणं यथा स्यादित्येवमर्थमिदं ह्रस्वविधानम्।

**समीह्यत इति**। 'ईह चेष्टायाम्'।

**समूहित इति**। क्तः। **समूह्योऽयमर्थ इति**। 'ऋहलोर्ण्यत्'। **अण इत्येवेत्यादि**। 'केऽणः' इत्यतोऽण्ग्रहणमनुवर्त्तते। आ ऊह्यते ओह्यते, समोह्यत इति। ह्रस्वत्वं न भवति। यद्यण्ग्रहणमनुवर्त्तते, तदा ह्रस्वविधानमनर्थकं स्यात्, उपसर्गादूहतेरुदिति वक्तव्यम्? नानर्थकम्; उत्तरार्थत्वात्—'एतेर्लिङि' इति वक्ष्यति, तत्र 'ह्रस्वः' इत्येतस्यानुवृत्तिर्यथा स्यात्॥

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति। उदियात्। समियात्। अन्वियात्। आशिषि लिङि 'अकृत्सार्वधातुकयोः' इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति।

उपसर्गादित्येव–ईयात्। 'अणः' इत्येव–आ + ईयात्=एयात्। समेयात्॥

## अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति। भृशायते। सुखायते। दुःखायते। चीयते, चेचीयते। स्तूयते, तोष्टूयते। चीयात्। स्तूयात्।

### पदमञ्जरी

*एतेर्लिङि*॥ *आशिषि लिङीत्यादिना* सूत्रस्य विषयं दर्शयति। सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवति। ननु च सवर्णदीर्घत्वे सति सम्भवति—अभीयात्, प्रतीयात, परीयादिति, नात्र ह्रस्वत्वेन भवितव्यम्; किं कारणम्? 'उपसर्गादेतेः' इत्युभयत आश्रयणादन्तादिवद्भावाभावात्। *आ+ईयादित्यादि*। आ + ऊह्यत इत्यादिना व्याख्यातम्॥

*अकृत्सार्वधातुकयोर्दीर्घः*॥ *अकृद्यकार इति*। यकारमात्रस्य प्रत्ययस्यासम्भवादकृति असार्वधातुके च यकारादावित्यर्थः। *भृशायत इति*। 'भृशादिभ्यो भुव्यच्वेः' इति क्यङ्। *सुखायत इति*। 'सुखादिभ्यः कर्तृवेदनायाम्'। *चीयत इति*। यक्। *चेचीयत इति*। यङ्। *तोष्टूयत इति*। 'शर्पूर्वाः खयः'। *चीयादिति*। आशिषि लिङ्।

### न्यासः

एतेर्लिङि॥ उदियादिति। 'इण् गतौ', आशिषि लिङ्, 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः। अभीयादिति। सवर्णदीर्घत्वेऽकृते ह्रस्वः। आशिषि लिङीत्यादिना सूत्रस्य विषयं दर्शयति। सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवतीति नात्रास्योपयोगः। यत्राकृत्सार्वधातुकयोर्दीर्घत्वमापद्यते, तत्र दीर्घत्वे कृतेऽनेन ह्रस्वो भवति॥

अकृत्सार्वधातुकयोर्दीर्घः॥ भृशायत इति। 'भृशादिभ्यो भुव्यच्वेर्लोपश्च', 'हलः' इति क्यङ्। सुखायत इति। 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ्। चीयत इति। कर्मणि लकारः, 'सार्वधातुके यक्'। चेचीयत इति। 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः। तोष्टूयत इति। 'ष्टुञ् स्तुतौ', 'शर्पूर्वाः खयः' इति खयः शेषः। चीयात, स्तूयादिति। आशिषि लिङ्।

अकृदिति किम् ? प्रकृत्य । प्रहृत्य । परत्वाद्दीर्घत्वेन तुको बाधः स्यात् ।

असार्वधातुक इति किम् ? चिनुयात् । सुनुयात् ।

'क्ङिति' इत्येव—उरुया । धृष्णुया ॥

च्वौ च ॥ २६ ॥

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति । शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् ॥

रीङ् ऋतः ॥ २७ ॥

ऋकारान्तस्याङ्गस्य अकृद्यकारेऽसार्वधातुके यकारे च्वौ च

पदमञ्जरी

*निश्चित्य, प्रस्तुत्येति* । ल्यवयं कृत्संज्ञकः । ननु चाजन्तस्य दीर्घो विधीयते, इह च तुकि कृतेऽनजन्तत्वाद्दीर्घो न भविष्यति ? इत्यत आह—*परत्वादिति* । तुकोऽवकाशः—अग्निचित्, सोमसुत्; दीर्घस्यावकाशः—चीयते, स्तूयते; निश्चित्य, प्रस्तुत्येत्यत्र परत्वात्तुग् दीर्घत्वेन बाध्यते । प्रायेण तु *प्रकृत्य, प्रहृत्येति* पाठः, तत्रोत्तरसूत्रेण रीङः प्रसङ्गाद् दीर्घत्वेन तुको बाधः स्यादित्ययुक्तं स्यात् । आद्यप्राप्त्यभिप्रायेण वा व्याख्येयम् । *चिनुयादिति* । विध्यादिलिङ् ।

*उरुया, धृष्णुयेति* । 'सुपां सुलुक्' इत्यादिना यादेशः ॥

न्यासः

प्रकृत्येति । पूर्ववल्ल्यप् । स च 'कृदतिङ्' इति कृत्संज्ञकः । ननु च दीर्घश्रुत्याऽजित्येतस्मिन्नुपस्थिते तेनाङ्गं विशिष्यते, तत्र विशेषणेन च तदन्तविधिरित्यजन्तस्याङ्गस्य दीर्घत्वेन भवितव्यमिति, इह 'ह्रस्वस्य पिति कृति' तुकि कृतेऽजन्तता नास्ति, ततश्चानजन्तत्वादेव दीर्घत्वं न भविष्यति, किमेतन्निवृत्त्यर्थेनाकृद्ग्रहणेन ? इत्यत आह—परत्वादित्यादि । तुकोऽवकाशः—अग्निचिदिति, दीर्घस्यावकाशः—चीयत इति; प्रकृत्य, प्रहृत्य—इत्यत्रोभयप्राप्तौ सति, असत्यकृद्ग्रहणे परत्वाद् दीर्घत्वेन तुग्बाध्येत । तस्मादकृद्ग्रहणं कर्तव्यम् ।

चिनुयादिति । विध्यादिलिङ्, स च 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञकः ।

उरुया, धृष्णुयेति । उरु-धृष्णुशब्दयोस्तृतीयैकवचने 'सुपां सुलुक्' इत्यादिना याभावः ॥

च्वौ च ॥ शुचीकरोतीति । 'अभूततद्भावे' इत्यादिना च्विः । चकारः पूर्वापेक्षया समुच्चयार्थः ॥

रीङृतः ॥ यिग्रहणमनुवर्तते, अकृत्सार्वधातुकयोरिति च । मात्रीयतीति । 'सुप

परतः 'रीङ्'—इत्ययमादेशो भवति। मात्रीयति, मात्रीयते। पित्रीयति, पित्रीयते। चेक्रीयते। मात्रीभूतः।

'क्ङिति' इत्येतन्निवृत्तम्, तेनेहापि भवति—पितुरागतं पित्र्यम्।

ऋत इति तपरकरणं किम्? चेकीर्यते। निजेगिल्यते॥

पदमञ्जरी

रीङ् ऋतः॥ *पित्र्यमिति*। 'पितुर्यच्च' इति यत्प्रत्ययः, रीङादेशे कृते यस्येतिलोपः।

कथं पुनः 'क्ङिति' इत्यनुवर्त्तमानेऽत्र रीङादेशो भवति? अत आह—*क्ङितीत्येतदिह निवृत्तमिति*।

*चेकीर्यत इति*। 'कॄ विक्षेपे' यङ्, 'ॠत इद्धातोः', 'हलि च' इति दीर्घः। *जेगिल्यत इति*। अत्र 'ग्रो यङि' इति लत्वे कृते रेफाभावाद् दीर्घाभावः। अथ रीङिति किमर्थम्, न रिङेवोच्येत, 'अकृत्सार्वधातुकयोः', 'च्वौ च' इति दीर्घो भविष्यति, तत्रायमप्यर्थः—उत्तरत्र रिङ्ग्रहणं न कर्त्तव्यं भवति; तथा यग्लिङोरपि ग्रहणं न कर्त्तव्यं भवति, 'शे च' इत्येव वक्तव्यं चकारादकृत्सार्वधातुकयकारे च? यद्येवम्, यथा मात्रीयतीत्यादौ दीर्घो भवति, तथा यग्लिङोरपि स्यात्—क्रियते, क्रियादिति। अथ तत्र नाप्राप्ते दीर्घे रिङि विधीयमानो दीर्घत्वं बाधत इति उच्येत; तर्हि क्यजादिष्वपि बाधेत। अथ मतम्—ऋवर्णदीर्घत्वं तावद्बाध्यताम्, रिङस्तु कथं बाध्यते, न हि तत्र नाप्राप्ते दीर्घे स आरभ्यत इति?

न्यासः

आत्मनः क्यच्'। पित्रीयत इति। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्। चेक्रीयत इति। करोतेर्यङ्। पित्र्यमिति। 'पितुर्यच्च' इति यत् प्रत्ययः, रीङादेशे कृते 'यस्येति च' इतीकारलोपः।

कथं पुनः क्ङितीत्युच्यमाने तत्रादेशो भवति? इत्याह—क्ङितीत्येतदिह निवृत्तमिति। यद्येवं यिग्रहणस्यापि निवृत्तिः प्राप्नोति, तदेकयोगनिर्दिष्टत्वात्? नैतदस्ति; स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः। इह च यिग्रहणस्यैव स्वरितत्वं प्रतिज्ञायत इति तदेवानुवर्त्तते, क्ङिद्ग्रहणस्य स्वरितत्वं न प्रतिज्ञायत इति न तदनुवर्त्तते।

चेकीर्यत इति। 'कॄ विक्षेपे', 'ॠत इद्धातोः' इतीत्वे रपरत्वम्, 'हलि च' इति दीर्घः। निजेगिल्यत इति। 'गॄ निगरणे', 'लुपसद' इत्यादिना यङ्, 'ग्रो यङि' इति लत्वं रेफस्य। अथ दीर्घग्रहणं किमर्थम्, न रिङित्येवोच्येत, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वेनैव सिद्धमिति, तत्रायमप्यर्थः—उत्तरसूत्रे पुना रिङ्ग्रहणं न कर्त्तव्यं भवति, एतदेव हि तत्रानुवर्त्तिष्यते? न सिध्यति; नाप्राप्ते दीर्घत्वे रिङारभ्यमाणस्तस्य बाधकः स्यात्। भवतु नाम ॠकारस्य यो दीर्घस्तस्य बाधकः, यस्तु कृत आदेशे स्थान्यन्तरस्य

## रिङ् शयग्लिङ्क्षु ॥ २८ ॥

ऋकारान्तस्याङ्गस्य श, यक्—इत्येतयोर्लिङि च यकारादावसार्वधातुके परतः 'रिङ्' इत्ययमादेशो भवति । श—आद्रियते, आध्रियते। यक्—क्रियते, ह्रियते । लिङ्—क्रियात् । ह्रियात् ।

रिङ्वचनं दीर्घनिवृत्त्यर्थम् ।

'असार्वधातुके' इत्येव—बिभृयात् । 'यि' इत्येव—कृषीष्ट, हृषीष्ट ॥

## गुणोऽर्तिसंयोगाद्योः ॥ २९ ॥

### पदमञ्जरी

यग्लिङोरपि तर्हि न बाधेत। तस्मात्क्यजादिषु दीर्घस्य, यग्लिङोस्तु ह्रस्वस्य श्रवणं यथा स्यादिति पृथगादेशद्वयं वक्तव्यम् ॥

*रिङ् शयग्लिङ्क्षु* ॥ यिग्रहणमकृत्सार्वधातुकग्रहणं चानुवर्त्तमानं सम्भवव्यभिचाराभ्यां लिङ एव विशेषणम्, न शयकोः । *आद्रियते, आध्रियत इति*। 'दृङ् आदरे', 'धृङ् अवस्थाने', तुदादित्वाच्छः, रिङि कृते इयङादेशः । *रिङ्वचनं दीर्घनिवृत्त्यर्थमिति* । रिङि कृते 'अकृत्सार्वधातुकयोः' इति दीर्घत्वं प्राप्नोति, तस्यापि निवृत्त्यर्थमिति भावः ॥

*गुणोऽर्तिसंयोगाद्योः* ॥ 'ऋ गतिप्रापणयोः' भूवादिः, 'ऋ सृ गतौ' जौहोत्यादिकः—द्वयोरप्ययं छान्दसत्वाल्लुका निर्देशः; ऋच्छतीति निर्देशे इयर्त्तेर्न स्यात्, इयर्त्तीति निर्देशे ऋच्छतेर्न स्यात् । ऋग्रहणमेव तु न कृतम्, वैचित्र्यार्थम् । न

### न्यासः

प्राप्नोति तस्य कथं बाधकः, न ह्यस्मिन् प्राप्ते रिङारभ्यते ? एवं तर्हि मन्दधियां सुखप्रतिपत्त्यर्थं दीर्घोच्चारणम् । ङकारोऽन्त्यादेशार्थः ॥

रिङ् शयग्लिङ्क्षु ॥ अत्रापि यिग्रहणम्, 'अकृत्सार्वधातुकम्' चानुवर्त्तते । तत्र सम्भवव्यभिचाराल्लिङ एव विशेषणम्, न शयकोः । आद्रियते, आध्रियत इति । 'दृङ् आदरे', 'धृङ् अवस्थाने', आङ्पूर्वः, तुदादित्वाच्छः । क्रियादिति । 'आशिषि लिङ्' । बिभृयादिति । अत्र विध्यादिलिङ्, जुहोत्यादित्वात् श्लुः, 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इतीत्त्वमभ्यासस्य । कृषीष्टेति । 'आशिषि लिङ्' । 'उश्च' इति कित्त्वाद् गुणाभावः ॥

गुणोऽर्त्तिसंयोगाद्योः ॥ 'ऋ गतिप्रापणयोः', 'ऋ सृ गतौ'—इत्येतयोर्भौवादिकजौहोत्यादिकयोर्ग्रहणम् । 'छन्दोवत् सूत्राणि भवन्ति' इत्यतः 'बहुलं छन्दसि' इति शपो लुकं कृत्वाऽर्त्तीति निर्देशः कृतः; अन्यथा हि यद्यृच्छतीति निर्देशः क्रियेत, एवं सति जौहोत्यादिकस्य ग्रहणं न स्यात् । अथापीयर्त्तिनिर्देशः क्रियते, एवमपि भौवादिकस्य ग्रहणं न स्यात् । 'ऋ' इत्येतन्निर्देशस्तु न कृतः, वैचित्र्यार्थः । पूर्वेण रिङः प्राप्तस्यायमपवादः ।

ऋतो यकि लिङि इति वर्त्तते। 'श' इत्यत्रासम्भवान्निवृत्तम्। गुणो भवत्यर्तेः संयोगादीनामृकारान्तानां यकि परतो लिङि च यकारादावसार्वधातुके। अर्यते, अर्यात्। स्मर्यते, स्मर्यात्।

इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वाद्, अभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्त्तते।

'यि' इत्येव—स्वृषीष्ट। ध्वृषीष्ट। 'असार्वधातुके' इत्येव—इयृयात्॥

## यङि च॥ ३०॥

यङि च परतः, अर्त्तेः संयोगादेश्च ऋतो गुणो भवति। अरा-

पदमञ्जरी

चैवमुच्यमाने वर्णग्रहणशङ्का? 'ऋतः' इत्यनुवृत्तेः। *श इत्येतदिहासम्भवान्निवृत्तमिति*। न ह्यर्त्तिः, संयोगादिर्वा धातुस्तुदादिषु पठ्यते।

संस्क्रियते, संस्क्रियादित्यत्र सुटि कृते संयोगाद्यङ्गमिति गुणप्रसङ्गः? इत्यत आह–*इहेति*। बहिरङ्गत्वं सुटो द्विपदाश्रयत्वात्, इदं तु 'पूर्वं धातुः साधनेन युज्यते' इत्याश्रित्योक्तम्। पक्षान्तरेऽप्याह–*अभक्तत्वाद्वेति*। *इयृयादिति*। विध्यादिलिङ्, शपः श्लुः, द्विर्वचनम्, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्त्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्। अकार एव वक्तव्ये गुणग्रहणं चिन्त्यप्रयोजनम्॥

*यङि च*॥ *घ्नीभाव इति*। प्रक्रियालाघवाय घकारोच्चारणम्, ह्नीभावविधौ 'अभ्यासाच्च' इति कुत्वे गौरवप्रसङ्गात्। *जेघ्नीयत इति*। दिग्यादेशेनैव घ्नीभा-

न्यासः

श इत्यसम्भवान्निवृत्तमिति। असम्भवस्त्वर्त्तिसंयोगाद्योरशविकरणत्वात्। अर्यत इति। यक्। अर्यादिति। आशिषि लिङ्।

अथ संस्क्रियते, संस्क्रियादित्यत्र कस्मान्न भवति, भवति हि करोतिरपि सुटि कृते संयोगाद्यङ्गम्? इत्यत आह—इहेत्यादि। बहिरङ्गत्वं तु सुटो द्विपदाश्रयत्वात्। गुणस्य पुनरन्तरङ्गत्वमेकपदाश्रयत्वात्। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति सुटोऽसिद्धत्वात् संयोगादित्वमङ्गस्य नास्ति। अथापि कथञ्चित् सुटः सिद्धत्वं स्यात्, एवमप्यभक्तत्वात् सुटः संयोगादित्वं नास्ति, अतो गुणो न प्रवर्त्तते। अङ्गाधिकारादङ्गावयवः संयोगो गृह्यते। न ह्यत्राभक्तत्वे सुटोऽङ्गावयवः संयोग उपपद्यते। इयृयादिति। 'ऋ गतौ', विध्यादिलिङ्। जुहोत्यादित्वाच्छपः श्लुः, 'श्लौ' इति द्विर्वचनम्, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्त्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्, 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः।

'अर्त्तिसंयोगाद्योरत्' इति कर्त्तव्ये गुणग्रहणं वैचित्र्यार्थम्॥

यङि च॥ पूर्वेण प्राप्तस्य रीङोऽयमपवादः। अरार्यत इति। यङ्, गुणः, रपरत्वम्।

र्यते । सास्वर्यते । दाध्वर्यते । सास्मर्यते । अर्तेः 'अटचत्यर्शूर्णोतीनामुपसंख्यानम्' इति यङ् ।

'न न्द्राः संयोगादयः' इति द्विर्वचनप्रतिषेधो यकारस्य नेष्यते ।

* हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः * । जेघ्नीयते । हिंसायामिति किम् ? जङ्घन्यते ॥

## ई घ्राध्मोः ॥ ३१ ॥

'घ्रा', 'ध्मा'—इत्येतयोर्यङि परत ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ॥

## अस्य च्वौ ॥ ३२ ॥

'ई' इति वर्तते । अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति । शुक्लीभवति, शुक्लीस्यात् । खट्वीकरोति, खट्वीस्यात् ॥

## क्यचि च ॥ ३३ ॥

### पदमञ्जरी

वेन द्विर्वचनं न बाध्यते, विषयभेदात्—यङन्तस्य द्विर्वचनम्, प्रकृतिमात्रस्य घ्नीभावः । *जङ्घन्यते इति* । गत्यर्थोऽयम् ।

*ई घ्राध्मोः* ॥ इकारविधावपि 'अकृत्सार्वधातुकयोर्दीर्घः' ।

*अस्य च्वौ* ॥ 'च्वौ च' इति दीर्घे सिद्धे ईकारविधानं प्रक्रियालाघवार्थम् ।

### न्यासः

'अजादेर्द्वितीयस्य' इति द्विर्वचनम्, हलादिशेषः, 'दीर्घोऽकितः' इति दीर्घत्वम् । ननु चार्तेरहलादित्वाद् यङ् न प्राप्नोति ? इत्यत आह—अर्त्तेरित्यादि ।

भवतु नामोपसंख्यानाद् यङ्, रेफादेस्तु द्विर्वचनेन न भवितव्यम्, 'न न्द्राः संयोगादयः' इति प्रतिषेधात् ? इत्यत आह—न न्द्राः संयोगादय इति । उक्तं हि तत्र—यकारपरस्य रेफस्य प्रतिषेधो वक्तव्यः । तस्माद्रेफादेर्य इत्येतस्य द्विर्वचनं भवति । जङ्घन्यत इति । 'नुगतोऽनुनासिकान्तस्य' इति नुक्, 'अभ्यासाच्च' इति कुत्वम् ॥

ई घ्राध्मोः ॥ अत्र दीर्घोच्चारणं किमर्थम्, दीर्घो यथा स्यात्, ह्रस्वो मा भूत् ? नैतदस्ति; ह्रस्वस्यापि हि विधाने 'अकृत्सार्वधातुकयोर्दीर्घः' इत्येवं सिध्यति, 'च्वौ च' इति यथायोगं दीर्घो भविष्यति ? एवं तर्ह्येतज्ज्ञापयति—'संज्ञापूर्वको विधिरनित्यः' इति । तेन स्वायम्भुवमिति सिद्धं भवति ॥

अस्य च्वौ ॥ 'च्वौ च' इति दीर्घस्यायमपवादः ॥

'अस्य' इति वर्त्तते । क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति । पुत्रीयति । घटीयति । खट्वीयति । मालीयति । 'अकृत्सार्व-धातुकयोर्दीर्घः' इत्यस्यापवादः ।

पृथग्योगकरणमुत्तरार्थम् ॥

**अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ ३४ ॥**

अशनाय, उदन्य, धनाय——इत्येतानि निपात्यन्ते, बुभुक्षा, पिपासा, गर्ध——इत्येतेष्वर्थेषु । अशनायेति–अशनशब्दस्यात्वं क्यचि निपात्यते । अशनायतीति भवति, बुभुक्षा चेत् । अशनीयतीत्येवान्यत्र ।

उदन्येति–उदकशब्दस्य उदन्नादेशो निपात्यते । उदन्यतीति भवति, पिपासा चेत् । उदकीयतीत्येवान्यत्र ।

धनायेति–धनशब्दस्यात्वं निपात्यते । धनायतीति भवति, गर्धश्चेत् । धनीयतीत्येवान्यत्र ॥

**नच्छन्दस्यपुत्रस्य ॥ ३५ ॥**

पदमञ्जरी

*क्यचि च ॥ पृथग्योगकरणमुत्तरार्थमिति ।* 'न छन्दस्यपुत्रस्य' इत्यादि क्यच्येव यथा स्यात्, क्वौ मा भूदिति ।

*अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ एतेष्वर्थेष्विति ।* गम्यमानेषु । यस्तदानीमेव बुभुक्षमाणोऽशनमिच्छति तदत्रोदाहरणम् । यस्तु तदानीं क्षुधित एवोत्तरार्थमशनमिच्छति, तदत्र प्रत्युदाहरणम् ।

*उदकीयतीति ।* स्नानाद्यर्थमुदकमिच्छतीत्यर्थः । *धनायतीति ।* अभिलाषा-तिरेकः=गर्धः, सत्येव धने भूयोऽपि धनमिच्छतीत्यर्थः । *धनीयतीति ।* दरिद्रः सन् धनमिच्छति ।

न्यासः

**क्यचि च ॥** 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यस्यायमपवादः । चकारः 'अस्य' इत्य-नुकर्षणार्थः । अथ पृथग्योगकरणं किमर्थम्, नास्य 'क्विक्यचोः' इत्येकयोग एव क्रिय-ताम् ? इत्यत आह—पृथग्योगकरणमित्यादि । 'न च्छन्दस्यपुत्रस्य' इत्येवमाद्युत्तरकार्यं क्यचि यथा स्यात्, क्वौ मा भूत्——इत्येवमर्थो योगविभागः कृतः ।

**अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥** भोक्तुमिच्छा बुभुक्षा । पातुमिच्छा पिपासा । गर्धनं गर्धः । अभिकाङ्क्षेत्यर्थः ।

छन्दसि विषये पुत्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति। किं चोक्तम्? दीर्घत्वम्, ईत्वं च। मित्रयुः[1]। संस्वेदयुः। देवाञ्जिगाति सुम्नयुः।

अपुत्रस्येति किम्? पुत्रीयन्तः सुदानवः।

* अपुत्रादीनामिति वक्तव्यम् *। जनीयन्तोऽन्वग्रवः॥

**दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति॥ ३६॥**

दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति—इत्येतानि छन्दसि

**पदमञ्जरी**

*न छन्दस्यपुत्रस्य*॥ इहानन्तर्यादीत्वस्यैव प्रतिषेधः प्राप्नोति, ततश्चापवादेऽपनीते उत्सर्गः 'अकृत्सार्वधातुकयोः' इति दीर्घः प्राप्नोतीत्याशङ्क्याह—*क्यचि यदुक्तं तन्न भवतीति*। किं पुनस्तत्? इत्यत आह—*दीर्घत्वमीत्वं चेति*। एवं मन्यते—यदयम् 'अश्वाघस्यात्' इत्यात्वं शास्ति, तज्ज्ञापयति—दीर्घस्याप्ययं प्रतिषेध इति; अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यादिति। *मित्रयुरित्यादौ* 'क्याच्छन्दसि' इत्युप्रत्ययः। पुत्रमिच्छन्तः *पुत्रीयन्तः*। जनमिच्छन्तो *जनीयन्तः*, लटः शत्रादेशः, 'उगिदचाम्' इति नुम्। अपरे त्वाहुः—जनीमिच्छन्तो जनीयन्तः, जनीति वधूरुच्यत इति। तत्रादिग्रहणस्य प्रयोजनान्तरं मृग्यम्॥

*दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति*॥ *दुष्टीयितेति प्राप्ते इति*। भाषायां प्राप्ति-

**न्यासः**

न च्छन्दस्यपुत्रस्य॥ क्यचि यदुक्तं तन्न भवतीति। किं पुनस्तत्? इत्याह—दीर्घत्वमीत्वञ्चेति। ननु च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यनन्तरस्य ईत्वस्य प्रतिषेधेन भवितव्यम्, न तु व्यवहितस्य दीर्घत्वस्य? नैष दोषः; 'अश्वाघस्यात्' इत्यश्वाघयोरात्ववचनं ज्ञापकम्—दीर्घत्वस्याप्ययं प्रतिषेधो भवतीति, अन्यथा दीर्घत्वेनैव सिद्धत्वादाकारकरणमनर्थकं स्यात्। मित्रयुरिति। 'क्याच्छन्दसि' इत्युप्रत्ययः, 'अतो लोपः' इत्यकारलोपः।

अपुत्रादीनामिति वक्तव्यमिति। पुत्रादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'क्यचि च' इत्यस्यानन्तरं पुत्रस्येति वक्तव्यम्, किमर्थमिदम्? 'नच्छन्दसि' इति प्रतिषेधं वक्ष्यति, तद् बाधनार्थम्। एवम् 'अपुत्रस्य' इति नञ् उच्चारयितव्यो न भवति। तदिदम् 'क्यचि च' इत्यस्यानन्तरं पुत्रस्येति वक्तव्ये यदिहापुत्रस्येति वचनं तत् पुत्रादीनां प्रतिषेधो यथा स्यादित्येवमर्थम्। एतच्च पुत्रस्योपलक्षणत्वाल्लभ्यते॥

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति॥ अश्वाघस्यात्॥ एतदेवात्ववचनं ज्ञापक-

---

१. अत्र 'पुत्रयुः'—इति मुद्रितः पाठोऽसाधुः।

निपात्यन्ते । दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते । अवियोना दुरस्युः । दुष्टीयतीति प्राप्ते ।

द्रविणशब्दस्य द्रविणस्भावो निपात्यते । द्रविणस्युर्विपन्यया । द्रविणीयतीति प्राप्ते ।

वृषशब्दस्य वृषण्भावो निपात्यते । वृषण्यति । वृषीयतीति प्राप्ते ॥

रिष्टशब्दस्य रिषण्भावो निपात्यते । रिषण्यति । रिष्टीयतीति प्राप्ते ॥

अश्वाघस्यात् ॥ ३७ ॥

अश्व, अघ—इत्येतयोः क्यचि परतश्छन्दसि विषये आकारादेशो भवति । अश्वायन्तो मघवन् । मा त्वा वृका अघायवो विदन् ।

एतदेवात्त्ववचनं ज्ञापकम्—'नच्छन्दस्यपुत्रस्य' इति दीर्घप्रतिषेधो भवतीति ॥

देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥

देव, सुम्न—इत्येतयोः क्यचि परत आकारादेशो भवति काठके यजुषि । देवायन्तो यजमानाय । सुम्नायन्ता हवामहे ।

पदमञ्जरी

रुच्यते, तत्र उप्रत्ययाभावात् तत्समानार्थस्त्वच् प्रयुक्तः । प्रायेण तु लडन्तं पठ्यते, तत्र प्रकृतिमात्रे तात्पर्यम् ॥

*अश्वाघस्यात्* ॥ *एतदेवेत्यादि* । पूर्वमेवैतद्व्याख्यातम् ॥

*देवसुम्नयोर्यजुषि काठके* ॥ वेदवचनोऽत्र यजुःशब्दः, न मन्त्रवचनः । कठानामिदं काठकम्, 'गोत्रचरणाद्वुञ्' । *काठके यजुषि* कठशाखायामित्यर्थः ॥ एवं च कृत्वा ऋगात्मके यजुषि मन्त्रे कठशाखायामात्वं भवति, तथा ऋग्वेदेऽ-

न्यासः

भित्यादि । कथं कृत्वा ज्ञापकम् ? यदि 'नच्छन्दसि' इत्यनन्तरस्यैवेत्वस्यायं प्रतिषेधः, तदाऽद्वचनमनर्थकं स्यात्, 'अकृत्सार्वधातुकयोः' इत्यनेनैव सिद्धत्वात्, कृतश्च, तस्मादेतज्ज्ञापयति—दीर्घस्याप्ययं प्रतिषेधो भवतीति ।

देवसुम्नयोर्यजुषि काठके ॥ 'न च्छन्दसि' इति प्रतिषेधे प्राप्ते देवसुम्नयोरिदमारभ्यत आद्वचनम् । काठक इति । यजुष एवैतद् विशेषणम् । कठस्येदं यजुः काठकम्—'गोत्रचरणाद् वुञ्' ॥

यजुषीति किम् ? देवाञ्जिगाय सुम्नयुः । काठक इति किम् ? सुम्नयुरिदमासीत् ॥

**कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥**

कवि, अध्वर, पृतना—इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये । कव्यन्तः सुमनसः । अध्वर—अध्वर्यन्तः । पृतना—पृतन्यन्तस्तिष्ठन्ति ॥

**द्युतिस्यतिमास्थामित्ति किति ॥ ४० ॥**

द्युति, सति, मा, स्था—इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः । द्युति—निर्दितः, निर्दितवान् । स्यति—अवसितः, अवसितवान् । मा—मितः, मितवान् । स्था—स्थितः, स्थितवान् ।

तीति किम् ? अवदाय । कितीति किम् ? अवदाता ॥

**पदमञ्जरी**

पि भवति स चेन्मन्त्रः काठके दृष्टः । *देवान् जिगाति सुम्नयुरिति* । बह्वृचानामप्यस्ति कठशाखा, ततो भवति प्रत्युदाहरणम् । अनन्ता वै वेदाः ॥

*द्यतिस्यतिमास्थामित्ति किति* ॥ 'दो अवखण्डने', 'षो अन्तकर्मणि' । 'मा माने', 'माङ् माने', 'मेङ् प्रणिदाने'—त्रयाणामपि ग्रहणम्, गामादाग्रहणेष्वविशेषात् ।

*अवदायेति* । ल्यप् । *अवदातेति* । तृच् । 'द्यतिस्यति' इति श्तिपा निर्देशो धातुविशेषणार्थः ॥

**न्यासः**

**कव्यध्वरपृतनस्यर्चिलोपः** ॥ कव्यन्त इति । 'अलोऽन्त्यस्य' लोपः । क्यजन्ताच्छतृप्रत्ययः, तदन्ताजस् ।

**द्यतिस्यतिमास्थामित्ति किति** ॥ छन्दसि, यजुषि, ऋचीति सर्वं निवृत्तम्; तेन सामान्येनायं विधिः । 'दो अवखण्डने', 'षो अन्तकर्मणि' । 'मा माने', माङ् माने, 'मेङ् प्रणिदाने'—'गामादाग्रहणेष्वविशेषः' इति त्रयाणामपि ग्रहणम् । 'ष्ठा गतिनिवृत्तौ' । तत्राद्यस्य 'दो दद् घोः' इति दत्त्वे प्राप्ते शेषाणां 'घुमास्था' इत्यादिसूत्रेण ईत्त्वे प्राप्त इत्त्वं विधीयते ।

अवदायेति । पूर्ववत् क्त्वो ल्यप् । अवदातेति । तृच् ।

द्यतिस्यतीति श्तिपा निर्देशोऽयं यङ्लुग्निवृत्त्यर्थः । तेन तयोर्यथाप्राप्तमेव भवति—दादत्तः, दादत्तवान्; सासीतः, सासीतवान् ।

## शाच्छोरन्यतरस्याम् ॥ ४१ ॥

शा, छा—इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति। शा–निशितम्, निशातम् । निशितवान्, निशातवान्। छा—अवच्छितम्, अवच्छातम् । अवच्छितवान्, अवच्छातवान् ।

❀ श्यतेरित्वं व्रते नित्यमिति वक्तव्यम् ❀ । संशितो ब्राह्मणः । संशितव्रत इत्यर्थः । व्यस्थितविभाषाविज्ञानात् सिद्धम् ।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।

### पदमञ्जरी

*शाच्छोरन्यतरस्याम्* ॥ 'शो तनूकरणे', छो छेदने' ।

*श्यतेरिति* । *व्रत इति* विषयो निर्दिश्यते, नोत्तरं पदम्; तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्त्वं भवति । *संशित इति* । व्रतविषये यत्नवानुच्यते । *संशितव्रत इति* । बहुव्रीहिः । सम्यक्सम्पादितव्रत इत्यर्थः । व्रतादन्यत्रापीत्त्वं भवति, व्रते तु नित्यमिति, संशितशब्दस्य सामान्यशब्दत्वादविरुद्धो व्रतशब्दस्य प्रयोगः ।

*व्यवस्थितविभाषाविज्ञानात्सिद्धमिति* । क्वचिन्नित्यं प्रवृत्तिः, क्वचिद्विकल्पेन, क्वचिन्नैव प्रवृत्तिः–इत्येवं विविधमवस्थिता विभाषा व्यवस्थितविभाषा ।

व्यवस्थितविभाषाणां दिङ्मात्रं श्लोकेन दर्शयति—*देवत्रात इति* । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः । 'नुदविदोन्दत्रा' इति नत्वं संज्ञायां न भवति । देवग्रहणस्योपलक्षणत्वाद् भवत्रात इत्यादावपि संज्ञायां नत्वाभावः । क्रियाशब्दे तु त्रातम्, त्राणमित्युभयं भवति । *गल इति* । 'अचि विभाषा'

### न्यासः

तपरकरणं मुखसुखार्थम्, न तु दीर्घनिवृत्त्यर्थम् । 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति दीर्घस्याप्राप्तेः ॥

**शाच्छोरन्यतरस्याम्** ॥ 'शो तनूकरणे', 'छो छेदने' ।

**श्यतेरित्वं व्रते नित्यमिति** । व्रत इति नोत्तरपदं गृह्यते, किं तर्हि ? विषयः । व्रतविषये श्यतेर्नित्यमित्त्वं भवति । संशितो ब्राह्मण इति । आचारविशेषे व्रताख्ये यत्नवानेवोच्यते संशितव्रत इति । संशितम्=यत्नेन सम्यक् प्रतिपादितं व्रतं यस्य येन वा स एवमुच्यते । ननु च व्रतविषये विधीयमानेनेत्त्वेनैव व्रतस्य द्योतितत्वाद् व्रतशब्दस्य प्रयोगो न प्राप्नोति ? नैष दोषः; अन्यत्र हीत्त्वं भवत्येव, व्रते तु नित्यमाख्यायते, सोऽयं सामान्यशब्दो भवति । अत्र विशेषार्थो व्रतशब्दः प्रयुज्यते । परनिपातस्त्वाहिताग्न्यादित्वाद् द्रष्टव्यः । व्यवस्थितविभाषाविज्ञानात् सिद्धमिति ।

एतदागमवाक्येन द्रढयितुमाह–देवत्रात इत्यादि । 'त्रैङ् पालने', क्तः । 'नुदविदो-

मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

पदमञ्जरी

इति लत्वम्, प्राण्यङ्गे नित्यं भवति, गिरत्यन्नमिति गलः, विषेतु नैव भवति, गीर्यते शपथार्थिभिरिति गरः; क्रियाशब्दे तूभयं भवति—गरः, गल इति । *ग्राह इति* । 'विभाषा ग्रहः' इति आदित्यादिषु पचाद्यजेव भवति । ग्रहण इति क्रियाशब्दे तु पूर्ववत् । *इतियोग इति* । हन्तीति पलायते, वर्षतीति धावतीत्यादौ इतिप्रयोगे 'लक्षणहेत्वोः क्रियायाः' इति शतृशानचौ न भवतः । *मिथ इति* । एकस्मिन्विषये न विकल्प्यन्ते, किन्तु विषयभेदेन । एतच्चाकृतिपक्ष उपपद्यते, तत्र हि सर्वं लक्ष्यजातं युगपदभिसमीक्ष्य द्वयमुपदिश्यते—भावोऽभावश्च, तत्र तयोर्विषयभेदेन प्रवृत्तावपि समुदाये द्वयं प्रवृत्तं भवति । असङ्कीर्णत्वं तु प्रयोगवशात् प्रत्येतव्यम् । *गवाक्ष इति* । वातायने 'अवङ् स्फोटायनस्य' इति नित्य-

न्यासः

न्दत्राग्राह्वीभ्योऽन्तरस्याम्' इति संज्ञाविषये नत्वं न भवत्येव—देवैस्त्रातो देवत्रातः, देवशब्दोऽत्र संज्ञोपलक्षणार्थः । केवलस्यापि त्रातशब्दस्य संज्ञायां न नत्वं प्रतिपद्यते । एवं संज्ञाया अन्यत्रोभयं भवति—त्राणः, त्रात इति । गल इति । गिरतेः पदाद्यच् । 'ग्रो यङि', 'अचि विभाषा' इति प्राण्यङ्गे नित्यं लत्वम्—गल इति । विषे तु न भवत्येव—गर इति । ग्राह इति । ग्रहेः 'विभाषा ग्रहः' इति णप्रत्ययः । जलचरे नक्रे नित्यं णप्रत्ययो भवति—ग्राह इति । आदित्यसोमादिषु पचाद्यज् भवत्येव—ग्रह इति । इतियोगे च सद्विधिर्न भवतीति । वर्षतीति धावति, हन्तीति पलायत इति—'लक्षणहेत्वोः क्रियायाः' इति सत्संज्ञकौ शतृशानचावितियोगे न भवत एव, व्यवस्थितविभाषया । तत्र 'नन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्तते—अर्जयन् वसति, अधीयानो वसति । तत्रास्तीतियोगे नित्यावेव तौ भवतः । ननु चेतिशब्देनैव हेत्वर्थस्य द्योतितत्वाद् वर्षतीति, हन्तीत्येवमादौ सद्विधिर्न भविष्यति, यत्र त्वितिशब्दो न प्रयुज्यते तत्र भवत्येव—अर्जयन् वसतीत्यादौ, तदत्र विभाषाधिकारमन्तरेणापि विभाषा लभ्यत एव; अतो विभाषाग्रहणं नानुवर्त्यमेव, तस्मादनुदाहरणमेतद् व्यवस्थितविभाषायाः ? इदं तर्ह्युदाहरणम्—करिष्यामीति व्रजतीति । अत्र 'लृट् शेषे च' इति चकारात् क्रियायामुपपदे क्रियार्थायां लृट्, तस्य लृटः सद्विधिर्न भविष्यतीति; व्यवस्थितविभाषया । अप्रथमासमानाधिकरणेनेतियोगादन्यत्र नित्यं भवति—करिष्यन्तं पश्येति, प्रथमासमानाधिकरणे तु विकल्पः—ब्राह्मणः करिष्यन्, ब्राह्मणः करिष्यतीति ।

मिथ इत्यादि । मिथ इति सहभावेन । देवत्रातगलग्राहादयस्त्राणगरग्रहादिभिः सहैकस्मिन् विषये विकल्पेन नान्वाख्यायन्त इत्यर्थः । गवाक्ष इति । 'सर्वत्र विभाषा गोः' इत्यनुवर्त्तमाने 'अवङ् स्फोटायनस्य' इति वातायने नित्यमवङ् भवति, प्राण्यङ्गे तु गोऽक्षमित्यत्र न भवति; अन्यत्रोभयम्—गवाक्षम्, गोऽक्षमिति । संशितव्रत इति । व्रते

## दधातेर्हिः ॥ ४२ ॥

दधातेरङ्गस्य 'हि' इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । हितः । हितवान् । हित्वा ॥

## जहातेश्च क्त्वि ॥ ४३ ॥

जहातेरङ्गस्य 'हि' इत्ययमादेशो भवति क्त्वाप्रत्यये परतः । हित्वा राज्यं वनं गतः । हित्वा गच्छति ।

### पदमञ्जरी

मवङ् भवति, प्राण्यङ्गे गोऽक्षमित्यत्र न भवति; अन्यत्र विकल्पः—गवाग्रम्, गोऽग्रमिति ।

*दधातेर्हिः* ॥ यद्यपि हिनोतेर्हित इत्यादि सिद्धम्, दधातेस्तु धीत इत्यादिनिवृत्तये सूत्रारम्भः । श्तिपा निर्देशो धेटो मा भूदिति । 'ध' इत्युच्यमाने धेटोऽप्यनुकरणं सम्भाव्येत, यथा—'दाधा घ्वदाप्' इत्यत्र । यङ्लुकि श्विटि सति दाधित इति भवति ॥

*जहातेश्च क्त्वि* ॥ इदमपि वचनं जहातेर्हात्वेति मा भूदिति । श्तिपा निर्देशस्य तु प्रयोजनं वृत्तावेव दर्शितम् । यङ्लुकि जाहित्वेति भवति ॥

### न्यासः

नित्यमित्त्वम् । अन्यत्र विकल्पेन–निशितम्, निशातं शस्त्रम् । तीक्ष्णमित्यर्थः । तदेतत् सर्वं व्यवस्थितविभाषया लभ्यते । क्वचिद्विधिरेव, क्वचित् प्रतिषेध एव, क्वचिदुभयमपीत्येवंविधा विविधार्थे स्थिता विभाषा व्यवस्थितविभाषा । एतच्च विविधमवस्थानमाकृतौ=पदार्थे वेदितव्यम् । तत्र हि सर्वं लक्ष्यराशिमेकीकृत्याभिसंक्षिप्य तदुभयमुपदिश्यते । विधिः प्रतिषेधश्च जातौ पदार्थ उभयमपि भवतीत्येतावतोऽर्थस्य प्रतिपादने शास्त्रस्य व्यापारः । यस्तु क्वचिदर्थे विधिरेव, क्वचित् प्रतिषेध एव, क्वचिदुभयमित्यसङ्करेण व्यवस्थानम्, एतच्चाविच्छिन्नाचार्यपारम्पर्योपदेशाल्लभ्यते ॥

दधातेर्हिः ॥ 'घुमास्था' इति सूत्रणेत्त्वे प्राप्ते दधातेर्हिरादेशो विधीयते । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः । तेन यङ्लुगन्तस्य हिरादेशो न भवति–दाधीतः, दाधीतवान्, दाधीत्वेति ।

जहातेश्च क्त्वि ॥ पूर्ववदीत्त्वे प्राप्ते क्त्वाप्रत्यये हिरादेशो विधीयते । यद्यपि 'हि गतौ' इत्यस्यापि हित्वेति सिध्यति, तथापि जहातेरिकारनिवृत्त्यर्थं वचनम् ।

अथ किमर्थं जहातेरिति श्तिपा निर्देशः, न 'हः' एवोच्येत ? इत्याह—जहातेरित्यादि । एतेन 'ओहाङ् गतौ' इत्यस्य निवृत्तये निर्देशः क्रियत इति दर्शयति । यदि हि 'हः' इति निर्देशः स्यात्, तदा तस्य साधारणत्वाज्जिहातेरपि स्यात् । जहातेरिति

जहातेर्निर्देशाज्जिहीतेर्न भवति—हात्वा ॥

विभाषा छन्दसि ॥ ४४ ॥

जहातेरङ्गस्य विभाषा 'हि' इत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः। हित्वा शरीरं यातव्यम्। हात्वा ॥

सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ४५ ।

सुधित, वसुधित, नेमधित, धिष्व, धिषीय—इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र सुधित, वसुधित, नेमधित—इति सु-वसु-नेम-पूर्वस्य दधातेः क्त्वाप्रत्यये इत्त्वमिडागमो वा प्रत्ययस्य निपात्यते। गर्भं माता सुधितम्। सुहितमिति प्राप्ते। वसुधितमग्नौ जुहोति। वसुहितमिति प्राप्ते। नेमधिता बाधन्ते। नेमहिता इति प्राप्ते।

धिष्वेति—लोण्मध्यमैकवचने दधातेरित्त्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते। धिष्व सोमम्। धत्स्वेति प्राप्ते।

पदमञ्जरी

*विभाषा छन्दसि* ॥ पूर्वसूत्रारम्भादयमारम्भः, अन्यथा हिनोतिजहात्यो रूपद्वयं सिद्धम्। *हात्वेति*। छान्दसत्वादीत्त्वाभावः ॥

*सुधितवसुधितनेमधितधिष्वधिषीय च* ॥ *इडागमो वेति*। यदा इडागमः, तदा 'आतो लोप इटि च' इत्याकारलोपः। *वसुधितमिति*। कर्मधारयः। क्विन्यपि दृश्यते—उत त्वेतं वसुधितिं निरेके। *नेमधितमिति*। अयमपि कर्मधारयः।

*धत्स्वेति*। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, 'दधस्तथोश्च' इति भष्भावः ॥

न्यासः

श्तिपा निर्देशे तु न भवति। अनेन जहातिरेव निर्दिश्यते, न जिहातिः। न हि तस्यैवंविधो निर्देश उपपद्यते; 'भृञामित्' इत्यभ्यासस्येत्त्वविधानात्। एवंविधेऽपि श्तिपा निर्देशे यङ्लुगन्तस्य न भवति—जाहात्वेति। ईत्वमप्यत्र न भवति; तद्विधावपि श्तिपा निर्देशात्। अत्र चेटि कृते 'आतो लोप इटि च' इत्याकारलोपः ॥

विभाषा छन्दसि ॥ सुधितवसुधितनेमधितधिष्वधिषीय च ॥ चकारेण छन्दसीत्यनुकृष्यते। इडागमो वेति। यदेडागमस्तदा 'आतो लोप इटि च' इत्याकारलोपः। सुधितमिति। 'कुगतिप्रादयः' इति समासः। वसुधितमिति। विशेषणसमासः। पूर्ववदाकारलोपः। नेमधितमिति। 'सामि' इति द्वितीयासमासः। सामीति तत्रार्थग्रहणमित्युक्तम्। नेमशब्दश्चायं सामिशब्दपर्यायः। धिष्वेति। 'थासः से', 'सवाभ्यां वामौ' इति वकारः। द्विर्वचनाभाव इति। 'श्लौ' इति द्विर्वचनं प्राप्नोति, अतस्तदभावो निपात्यते। धत्स्वेति।

धिषीयेति—आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्त्वमिडागमो वा प्रत्ययस्य निपात्यते । धिषीय । धासीयेति प्राप्ते ॥

## दो दद् घोः ॥ ४६ ॥

'दा'—इत्येतस्य घुसंज्ञकस्य 'दद्' इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । दत्तः । दत्तवान् । दत्तिः ।

द इति किम् ? धातः । धातवान् । धेट एतद्रूपम् । घोरिति किम् ? 'दाप् लवने' । दातं बर्हिः । 'दैप् शोधने' । अवदातं मुखम् ।

अयमादेशस्थान्त इष्यते । एवं ह्युक्तम्—

### पदमञ्जरी

दो दद् घोः ॥ *धीत इति* । घुमास्थादिसूत्रेणेत्त्वम् । *धेट एतद्रूपमिति* । दधातेस्तु 'दधातेर्हिः' इति हिरादेशो भवति । *दातमिति* । 'दाप् लवने' । लूनमित्यर्थः । *अवदातमिति* । 'दैप् शोधने' । *अयमादेशस्थान्त इष्यत इति* । कुतः ? इत्याह—*एवं ह्युक्तमिति* । यद्यपि दकारः श्रूयते, तथापि संहितायां तकारादीनामपि जश्त्वे कृते एतस्य रूपस्य सम्भवाच्चतुर्णां पक्षाणां सम्भवः । यद्ययमादेशस्तकारान्तः स्यात्, सुदत्तमित्यत्र 'दस्ति' इति दीर्घत्वं स्यात्; 'दा' इत्येतस्य यस्तस्तस्मिन्निति हि तत्रार्थः । अथ दकारान्तः, 'रदाभ्याम्' इति नत्वं प्रसज्येत । अथ

### न्यासः

'श्नाभ्यस्तयोरातः' इत्यकारलोपः, धकारस्य 'खरि च' इति चर्त्वम्—तकारः, 'दधस्तथोश्च' इत्यभ्यासस्य भष्भावेन धकारः । धिषीयेति । आशिषि लिङ्, 'इटोऽत्' इत्यत्त्वम् ॥

दो दद् घोः ॥ छन्दसीति निवृत्तम्; पूर्वसूत्रे चकारेणानुकृष्टत्वात् । दत्तः, दत्तवानिति । क्तक्तवतू । दत्तिरिति । क्तिन् । धीतः, धीतवानिति । पूर्ववदीत्त्वम् ।

अथ 'दधातेर्हि' इति हिरादेशः कस्मान्न भवति ? इत्यत आह—धेट एतद्रूपमित्यादि । 'धेट् पाने' इत्यस्य रूपम्, न दधातेः । तेन हिरादेशो न भवतीति भावः । दातमिति । 'दाप् लवने' इत्येतस्यैतद्रूपम्, तस्य घुसंज्ञा नास्ति; अदाबिति प्रतिषेधात् ।

'दो दद् घोः' इति जश्त्वेनायं निर्देशः, तत्र न ज्ञायते—किं तकारान्तोऽयमादेशः ? आहोस्विद् दकारान्तः ? उत धकारान्तः ? अथ थकारान्त इति वा ?—इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—अयमादेश इत्यादि । कथं ज्ञायते ? इत्याह—एवं ह्युक्तमित्यादि । यद्ययमादेशस्तकारान्तः स्यात्, सुदत्तेत्यत्र 'इकः काशे' इत्यनुवर्तमाने 'दस्ति' इति दीर्घत्वं स्यात् । अथ दकारान्तः, तदा 'रदाभ्याम्' इत्यादिना निष्ठानत्वं स्यात् । अथ धकारान्तः, तदा 'झषस्तथोर्धोऽधः' इति झषन्ताद्धत्वमापद्येत निष्ठात-

तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम् ॥

यदि तु 'दस्ति' इति तकारादौ दीर्घत्वम्, तदा तान्तेऽप्यदोषः । दान्तधान्तयोरपि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति नत्वधत्वे न भविष्यत इति न दोषः ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

पदमञ्जरी

धकारान्तः, 'झषस्तथोर्धोऽधः' इति धत्वमापद्येत । *थान्तेऽदोष इति ।* नञोऽत्र प्रश्लेषः, 'तस्मात्थान्तः' इति निगमनात् ।

*यदि त्विति ।* 'दस्ति' इत्यत्र द्वौ पक्षौ–'दा' इत्येतस्य यस्तकारान्त आदेशः, तकारादिर्वेति । तत्र द्वितीयपक्षे नायं दोषः । *दान्तधान्तयोरपीति ।* तकारादिप्रत्ययसन्निपातेन भवन् दद्भावो न तद्विघातस्य निमित्तं भवति ।

*अवदत्तमित्यादि ।* *आदिकर्मणीति* इत्येतत्प्रदत्तमित्येतस्य विशेषणम्, नेतरेषाम्; असम्भवात् । *इति चेष्यत इति ।* चकारद्यथाप्राप्तं च, तेन अवत्तम्, वित्तम्, प्रत्तमित्याद्यपि भवति ।

न्यासः

कारस्य । थान्तेऽदोष इति । नञोऽत्र प्रश्लेषः । थान्ते दोषो नास्तीत्यर्थः । तस्मादित्यादि । यस्मात् त्रिषु पूर्वकेषु पक्षेषु दोषः, तस्मात्थान्तोऽयमादेशः । उदाहरणे दत्तः, दत्तवानिति 'खरि च' इति चर्त्वम्–थस्य तः ।

यदि त्वित्यादि । द्वौ पक्षौ भाष्ये 'दस्ति' इत्यत्र दर्शितौ–'दा' इत्येतस्मिंस्तकारादौ, तकारान्ते वेति । तत्र यदि तकारान्ते 'दा' इत्येतस्मिन् दीर्घत्वं भवतीति–एष पक्ष आश्रीयते, तदैव दीर्घत्वप्राप्तिदोषः । यदि तु तकारादौ 'दा' इत्येतस्मिन् दीर्घत्वं भवतीति–एष पक्ष आश्रीयते, तदा तान्तेऽप्यदोषः । यत्र तकारादित्वम्, 'दा' इत्येतस्य, तत्र दीर्घत्वं भवति—नीत्तम्, वीत्तमित्यादौ, न तु सुदत्तादौ । तस्मात् पाक्षिको दीर्घप्राप्तिदोषः । दान्तधान्तयोरपीत्यादि । तकारादिसन्नियोगेन हि दान्तधान्तावादेशाविमौ विहितौ नोत्सहेते तद्विघातनिमित्ततामुपगन्तुम् । तस्माद् दान्तधान्तयोरप्यदोषः ।

अवदत्तमित्यादि । आदिकर्मणि=क्रियाप्रारम्भे । आदिभूतक्रियाक्षण इत्यर्थः । अत्र 'अच उपसर्गात्तः' इति तकारादेशे प्राप्त एतेऽवदत्तादयो निपात्यन्ते । 'आदिकर्मणि' इति च सर्वेषां विशेषणम्, न तु प्रदत्तमित्यस्यैव । आदिकर्मणोऽन्यत्र 'अच

'अच उपसर्गात्तः' इति प्राप्ते निपात्यन्ते । अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ॥

**अच उपसर्गात्तः ॥ ४७ ॥**

अजन्तादुपसर्गादुत्तरस्य 'दा'–इत्येतस्य घुसंज्ञकस्य 'त'–इत्ययमादेशो भवति तकारादौ किति । प्रत्तम्, अवत्तम्, नीत्तम्, परीत्तम् ।

अच इति किम् ? निर्दत्तम् । दुर्दत्तम् ।

उपसर्गादिति किम् ? दधि दत्तम् । मधु दत्तम् ।

'घोः' इत्येव–अवदातं मुखम् ।

उपसर्गादिति पञ्चमीनिर्देशादादेरलः प्राप्नोति ? तत्र समाधिमाहुः–'अचः' इत्येतद् द्विरावर्तयिव्यम्, तत्रैकं पञ्चम्यन्तम् उपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने

**पदमञ्जरी**

*अनुपसर्गा वा एत इति* । कथमनुपसर्गत्वम् ? इत्यत आह–*क्रियान्तरविषया इति* । अवगतं दत्तमिति गमिनाऽवादिनां योगः, ततश्च 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति' इति ददातिं प्रत्यनुपसर्गत्वम् ॥

*अच उपसर्गात्तः* ॥ *त इत्ययमिति* । तकारेऽकार उच्चारणार्थः । *प्रत्तमिति* । तत्राकारस्य तकारे दकारस्य चर्त्त्वम् । *नीत्तमिति* । 'दस्ति' इति दीर्घत्वम् ।

*आदेरलः प्राप्नोतीति* । 'आदेः परस्य' इति वचनात् । *अच इत्येतदावर्त्तत*

**न्यासः**

उपसर्गात्तः' इति तकारादेशो भवति, न तु दद्भावः—अवत्तम्, वीत्तम्, सूत्तम्, अनूत्तमिति ।

**अनुपसर्गा इत्यादि** । अथ वा–अवादयो ददातिं प्रत्युपसर्गसंज्ञका एव न भवन्ति; तद्वाच्यायाः क्रियाया अन्या या क्रिया गमिर्वाच्या तद्विषयत्वात्—अवगतं दत्तमवदत्तमिति । एवमन्यत्रावगन्तव्यम् । तस्माद् गमिं प्रत्युपसर्गसंज्ञका एते, न ददातिं प्रति । तथा ह्युक्तम्–यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति । तस्मादुपसर्गसंज्ञाया अभावान्नैवात्र तकारः प्रसजेदिति किं निपातनेन ! ॥

**अच उपसर्गात्तः** ॥ ददादेशस्यायमपवादः । **त इत्ययमादेशो भवतीति** । अकार उच्चारणार्थः । प्रत्तमित्यादावाकारस्य तकारे कृते दकारस्य चर्त्वम्—तकारः । नीत्तमिति । 'दस्ति' इति दीर्घत्वम् । अवदातमिति । 'दैप् शोधने' इत्येतस्यैतद्रूपम् ।

**आदेरलः प्राप्नोतीति** । 'आदेः परस्य' इति वचनात् । अच इत्येतद् द्विरावर्त्तयि-

तकारो भवति । द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात् सर्वस्य भविष्यति । 'अपो भि' इत्यत्र पञ्चम्यन्तम् 'अचः' इत्यनुवर्त्तते, तेन पकारमात्रस्य भविष्यति ।

❀ द्यतेरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन ❀ । अवत्तम् । प्रत्तं जुहोति ॥

## अपो भि ॥ ४८ ॥

'अप्'—इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतः 'त' इत्ययमादेशो

पदमञ्जरी

*इति* । यद्वा—अस्येति वर्त्तते, क्व प्रकृतम् ? 'अस्य च्वौ' इति, 'दो दद् घोः' इत्ययमपि दद्भावोऽवर्णस्य प्राप्नोति, ततश्च दत्तमिति संयोगादि श्रूयते, एवं तर्ह्येवं वक्ष्यामि—'दोऽद्घोः' इति, दो य आकारस्तस्याद्भवतीति । *द्वितकारको वेति* । 'अलोऽन्त्यस्य' इत्येतस्य द्वावपवादौ—'आदेः परस्य', 'अनेकाल्शित्सर्वस्य' इति, तयोर्विप्रतिषेधे परः प्रवर्त्तते । 'अपो भि' इत्यत्रापि तर्हि सर्वादेशप्रसङ्गः ? अत आह—*अपो भीत्यत्रेति* । अत्र द्वयोस्तकारयोरन्त्यस्य संयोगान्तलोपः, पूर्वस्य जश्त्वम् । अत्र केचिदाहुः—अवश्यमत्राच इत्यनुवर्त्यम्, अन्यथा लूञ् 'ऋदोरप्', लवाभ्यामित्यत्रापि स्यादिति, तन्न; लुप्ते पकारे नाप्शब्द इति नात्र भविष्यति ॥

भूतपूर्वगतिर्युक्ता न साम्प्रतिकसम्भवः ।
न प्रत्ययाप्रत्यययोरित्यस्याप्यत्र सम्भवः ॥
द्वयोरतुल्यकक्षत्वात्प्रत्ययेऽपो न हि श्रुतः ।

*अपो भि* ॥ *स्ववद्भिरिति* । अवतेरसुन्, शोभनमवो येषां ते स्ववसः । 'तु'

न्यासः

तव्यमिति । 'अचः' इत्येतस्य द्विरावृत्तावचोऽच इति द्वे शब्दरूपे भवतः । तत्रैकं पञ्चम्यन्तम्, अपरं षष्ठ्यन्तम् । तत्रैकेनोपसर्गो विशिष्यते—अजन्तादुपसर्गादिति । इतरेणापि स्थानी निर्दिश्यत इत्येवमाकारस्यायमादेशो भवति । द्वितकारो वेति । अथ वा—'अच उपसर्गात्तः' इति द्वितकार एव संयोगादेशो निर्दिश्यते, तेनास्यानेकाल्त्वात् सर्वस्यैव भवति, यदि तर्हि द्वितकारोऽयं निर्देशस्तदा 'अपो भि' इत्यनेनापि सर्वादेशः प्राप्नोति, अनेकाल्त्वादित्याह—अपो भीत्यादि । 'अपो भि' इत्यत्र पञ्चम्यन्तमच इत्यनुवर्त्तते, तेन सत्यप्यनेकाल्त्वे 'तस्मादित्युत्तरस्य' इति पकारमात्रस्य भविष्यति, न सर्वस्येति ।

द्यतेरित्यादि । द्यतेरित्यस्यावकाशः—यत्राजन्त उपसर्गो न भवति—निर्दितम्, दुर्दितमिति; अस्यादेशस्यावकाशः—अजन्तादुपसर्गात् परो योऽन्यो घुसंज्ञकः—'डुदाञ् दाने' अवत्तम्, परीत्तमिति; अजन्तादुपसर्गादुत्तरस्य द्यतेरुभयप्रसङ्गे सति तकार एव भवति विप्रतिषेधेन—अवत्तम्, प्रत्तमिति ।

भवति । अद्भिः । अद्भ्यः ।

भीति किम् ? अप्सु ।

स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ । स्ववद्भिः । स्वतवद्भिः । माद्भिष्ट इन्द्रो वृत्रहा । समुषद्भिरजायथाः ॥

**सः स्यार्धधातुके ॥ ४६ ॥**

सकारान्तस्याङ्गस्य सकारादावार्धधातुके परतस्तकारादेशो भवति । वत्स्यति, अवत्स्यत् । विवत्सति । जिघत्सति ।

स इति किम् ? वक्ष्यति । सीति किम् ? घासः । वासः । आर्धधातुक इति किम् ? आस्से । वस्से ॥

**पदमञ्जरी**

इति सौत्रो धातुः, स्वन्तवो येषां ते स्वतवसः । *माद्भिरिति* । 'पद्दन्नोमास्' इति मासशब्दस्य मासादेशः । *उषद्भिरिति* । 'मिथुनेऽसिः', 'वसेः किच्च' इत्यसिप्रत्ययः ॥

*सः स्यार्धधातुके* ॥ *वत्स्यतीत्यादि* । 'वस निवासे', लट् । *जिघत्सतीति* । 'लुङ्सनोर्घस्लृ' । *आस्से, वस्से इति* । 'आस् उपवेशने', 'वश आच्छादने'—

**न्यासः**

**अपो भि ॥** अद्भिरिति । 'झलां जशोऽन्ते' इति जश्त्वम्—तकारस्य दकारः । द्वितकारपक्षे तु पूर्वस्यापि 'झल जश् झशि' इति जश्त्वम्—दकारः । 'झरो झरि सवर्णे' इति पूर्वदकारलोपः ।

सुव इत्यादि । सुवस्, स्वतवस्, मास्, उषस्—इत्येतेषाञ्च भकारादौ परतस्त इत्ययमादेश इष्यते च्छन्दसि विषये । स च 'व्यत्ययो बहुलम्' इत्यनेनेव लभ्यत इति वेदितव्यम् ।

**सः स्यार्धधातुके ॥** अत्रापि द्वितकारपक्षेऽनेकाल्त्वात् सर्वादेशः प्राप्नोति, तस्माद् 'अचः' इति पञ्चम्यन्तमनुवर्त्तनीयमिति । अथ वा—'निर्दिश्यमानस्यादेशा भवन्ति' इति सकारस्यैव भविष्यति । वत्स्यतीति । 'वस निवासे' । जिघत्सतीति । अदेः सन्, 'लुङ्सनोर्घस्लृ' इति तस्य घस्लादेशः । वक्ष्यतीति । 'वच परिभाषणे,' 'चोः कुः' इति कुत्वम् । घासः, वास इति । भावे घञ्, 'घञपोश्च' इत्यदेर्घस्लादेशः । आस्से, वस्स इति । 'आस उपवेशने', 'वस आच्छादने', अनुदात्तेत्वादात्मनेपदम्, 'थासः से', अदादित्वाच्छपो लुक् ।

## तासस्त्योर्लोपः ॥ ५० ॥

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति । तासेः——कर्तासि । कर्तासे । अस्तेः——त्वमसि । व्यतिसे ।

अस्तेरकारसकारयोर्लुप्तयोः 'से' इति प्रत्ययमात्रमेतत्पदम्, तेन 'सात्पदाद्योः' इति षत्वं न भवति ॥

## रि च ॥ ५१ ॥

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति । कर्तारौ, कर्तारः । अध्येतारौ, अध्यतारः । अस्तेर्लिटि—व्यतिरे ॥

## ह एति ॥ ५२ ॥

**पदमञ्जरी**

अदादी अनुदात्तेतौ । 'अतङि' इत्युच्यमाने व्यतिवत्सीष्टेत्यत्रापि न स्यात् ॥

*तासस्त्योर्लोपः ॥ व्यतिसे इति ।* 'कर्त्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्, शपो लुक्, 'श्नसोरल्लोपः' इत्यकारलोपः । *प्रत्ययमात्रमेतत्पदमिति ।* तेन 'सात्पदाद्योः' इति षत्वप्रतिषेध इति भावः ॥

*रि च ॥* अस्तेरुदाहरणं न प्रदर्शितम्, रेफादेरसम्भवात् ॥

**न्यासः**

अथ 'सः स्यतिङ्' इति कस्मान्नोक्तम् ? नैवं शक्यम्; इहापि न स्यात्—व्यतिवत्सीष्ठा इति ।

**तासस्त्योर्लोपः ॥** 'अनद्यतने लुट्', तासिः, सिप् । कर्त्तासि इति । 'थासः से' । त्वमसीति । 'अस भुवि', पूर्ववच्छपो लुक् । व्यतिसे इति । 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदं भवति । 'थासः से', 'श्नसोरल्लोपः' इत्यकारलोपः ।

अथ 'आदेशप्रत्यययोः' इति षत्वं कस्मान्न भवति ? इत्यत आह—अस्तेरकारसकारयोरित्यादि । अकारसकारयोर्हि लुप्तयोः प्रत्ययमात्रमवशिष्यते, तदेव पदम्, अतः 'सात्पदाद्योः' इति प्रतिषेधात् षत्वं न भविष्यतीति भावः ।

**रि च ॥** कर्त्तारौ, कर्त्तार इति । लुट्, तस्, झिः, 'लुटः प्रथमस्य डारौरसः' इति तसो झेश्च यथाक्रमं रौरसौ भवतः । अध्येतारौ, अध्येतार इति । इङो ङित्त्वादात्मनेपदम्, आताम्, झः, तयोश्च पूर्ववद्रौरसौ । अस्ते रेफादिप्रत्ययो न सम्भवतीति नास्त्युदाहरणम् । केचित्तु–'व्यतिरे' इत्युदाहरणं दर्शयन्ति; एतच्च च्छन्दस्येवं प्रयोगो यद्यस्ति ततो युक्तम्, अथ तु नास्त्येवं सत्ययुक्तम् । 'इरयो रे' इति रेभावश्छन्दसि विधीयते, 'यथादृष्टानुविधिश्छन्दसि' इति । चकारः पूर्वापेक्षया समुच्चयार्थः ॥

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । कर्ताहे । अस्तेः—व्यतिहे ॥

यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति । यकारादौ—आदीध्य गतः । आवेव्य गतः । आदीध्यते । आवेव्यते । इवर्णादौ—आदीधिता । आवेविता । लिङि—आदीधीत । आवेवीत । यीवर्णयोरिति किम् ? आदीध्यनम् । आवेव्यनम् ॥

पदमञ्जरी

ह एति ॥ एशि हकारो न भवति—एधामासे इति, किं कारणम् ? तासेर्य एकारः सम्भवति तत्रैवास्तेरपि । कश्च तासेः सम्भवति ? उत्तमैकवचनम् । अपर आह—उतमैकवचनम्, सार्वधातुकं चेति; तेन सुप्तोऽहं त्वां प्रेक्षामासे, उत्तमेऽप्यार्धधातुके न भवतीति ॥

*यीवर्णयोर्दीधीवेव्योः* ॥ यकारे इकार उच्चारणार्थः । *लोपो भवतीति* । हकारस्त्वनन्तरोऽप्यस्वरितत्वान्नानुवर्त्तते । *आदीध्येति* । ल्यप् । *आदीध्यक इति* । यक् । *आदीधितेति* । तृच्, इट् ।

*आदीध्यनमिति* । ल्युट्, 'दीधीवेवीटाम्' इति गुणप्रतिषेधः । इहादीधयतेर्ण्वुल्—आदीध्यक इति । श्रूयमाण एव णौ ण्वुल् । उत्पत्तेः प्रागेव प्राप्तोऽपि लोपो न भवति; वर्णग्रहणात् । किं वर्णग्रहणमतिरिच्यत इत्यतो न भवति ? नेत्याह ।

न्यासः

**ह एति ॥ कर्त्ताह इति** । कृञो लुट्, आत्मनेपदम्, उत्तमपुरुषैकवचनम्, इट्, टेरेत्त्वम् । अत्र सकारस्यानेन हः । **व्यतिह इति** । अस्तेः 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, पूर्ववदकारलोपः । **एतीति** । तपरकरणं सप्तम्यामयादेशपरीहारार्थम् । अयादेशे हि सति सन्देहः स्यात्—कस्यायं निर्देश इति—किमयादेशस्य ? अथैकारस्य ? ॥

**यीवर्णयोर्दीधीवेव्योः** ॥ स्वरितत्वाल्लोपोऽनुवर्त्तते, न त्वनन्तरो हकारः, तस्यास्वरितत्वप्रतिज्ञानात् । यकारे त्विकार उच्चारणार्थः । यिश्च इवर्णश्च तौ यीवर्णौ तयोः परतः 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना तुल्ये'—इत्यनयोर्लोपो भवति, स च 'अलोऽन्त्यस्य' इत्यन्तस्य यकारादौ श्रवणे प्राप्त इवर्णादौ 'एरनेकाचः' इति यणादेशे प्राप्ते लोपवचनमिदम् । आदीध्य, आवेव्येति । ल्यप् । आदीध्यत, आवेव्यत इति । 'भावकर्मणोः' इत्यात्मनेपदम्, 'सार्वधातुके यक्' । आदीधित, आवेवीतेति । तृच् । आदीध्यनमावेव्यनमिति । ल्युट्, 'दीधीवेवीटाम्' इति गुणनिषेधाद् यणादेशः । अत्र यद्यपि निमित्तयोः कार्यिणोः समानत्वम्, तथापि यथासंख्यं न भवति; अस्वरितत्वात् । वर्णग्रहणमिवर्णे श्रूयमाणे

## सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

सनि प्रत्यये सकारादौ परतो मी, मा, घु, रभ, लभ, शक, पत, पद—इत्येतेषामङ्गानामचः स्थाने इसित्ययमादेशो भवति । 'मी' इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । मित्सति । प्रमित्सति । 'मा' इति गामादाग्रहणेष्वविशेषः । मित्सते । अपमित्सते । घु—

पदमञ्जरी

अक्षरार्थ एवायम्, कथम् ? 'वर्ण वर्णने' चुरादिः, वर्ण्यते उपलभ्यत इति वर्णः, वर्णश्चासावश्चेति विशेषणसमासे विशेषणस्य निपातनात् परनिपातः ॥

*सनि मीमाघुरभलभशकपतपदामच इस्* ॥ सीत्येतदिहानुवृत्तं सनो विशेषणम् । *मीनातिमिनोत्योरिति* । 'मीञ् हिंसायाम्', 'डुमिञ् प्रक्षेपणे' । *उभयोरपि ग्रहणमिति* । मिनोतेरपि 'अज्झनगमां सनि' इति दीर्घे कृते 'मी' इति रूपसम्भवात् । नन्वसौ लाक्षणिकः ? सत्यम्; इष्टिरेवेयम्, यदाह—*इष्यत इति* । 'मा माने', 'माङ् माने', 'मेङ् प्रणिदाने'—त्रयाणामपि ग्रहणम् । मीनातिमिनोत्योः सनः कित्त्वे सति अनेज्विषयत्वात् मारूपासम्भवात्पृथग्ग्रहणम् । *घु इति* । घुसंज्ञका दाधा गृह्यन्ते । 'रभ राभस्ये', 'डुलभष् प्राप्तौ', शक्लृ शक्तौ', 'पत्लृ गतौ' । *मित्सतीति* । 'स स्यार्धधातुके' इति सकारस्य तकारः, 'अत्र लोपोऽभ्यासस्य' ।

न्यासः

यथा स्यात्, इह मा भूत्—आदीधयतेः, आवेवयतेर्णिजन्ताण्वुल्, आदीध्यकः, आवेव्यकः । अत्र हि नित्यत्वाण्णिलोपे कृते प्रत्ययलोपलक्षणेन प्राप्नोति, अतो वर्णग्रहणान्न भवति ॥

**सनि मीमाघुरभलभशकपतपदामच इस्** ॥ 'सः स्यार्धधातुके' इत्यतः सीत्यनुवर्त्तते, तच्च सनो विशेषणम् । मीति मीनातिमिनत्योरिति । 'मीञ् हिंसायाम्', 'डुमिञ् प्रक्षेपणे'—इत्येतयोः । ननु च 'मी' इत्येतस्मिन्नुच्चार्यमाणे मिनोतेर्ग्रहणं नोपपद्यते ? नैवम्; अस्यापि 'अज्झनगमां सनि' इति दीर्घत्वे कृते मीत्येवं रूपं भवति । एवमपि लक्षणप्रतिपदोक्तपरिभाषया तस्य ग्रहणं नोपपद्यते ? नैतदस्ति; अत्र हि घुसंज्ञकत्वाद् 'घु' इत्यस्य पूर्वनिपातमकुर्वतैतत् सूचितम्—यथा पूर्वनिपात इह नापेक्ष्यते, तथान्यदपि किञ्चिच्छास्त्रीयं वचनमिति । तेनेयं परिभाषा नापेक्ष्यत इति युक्तं मिनोतेरपि ग्रहणम् । मा इति गामादाग्रहणेष्वविशेष इति । मेङ्प्रभृतीनां पूर्वोक्तानां त्रयाणां ग्रहणम् । घु इति । घुसंज्ञकौ 'दा' 'धा'—इत्येतौ गृह्येते । 'रभ राभस्ये', 'डुलभष् प्राप्तौ', 'शक्लृ शक्तौ', 'शल हुल पत्लृ गतौ', 'पद गतौ'—एषामचः स्थाने सकारादौ प्रत्यये सनीस् भवति ।

अच इत्यस्य ग्रहणं सर्वादेशो मा भूदित्येवमर्थम् । असति हि तस्मिन्ननेकाल्त्वात्

दित्सति, धित्सति। रभ—आरिप्सते। लभ—आलिप्सते। शक—शिक्षति। पत--पित्सति। पद--प्रपित्सते।

सनीति किम्? दास्यति।

'सि' इत्येव—पिपतिषति। 'तनिपतिदरिद्राणामुपसंख्यानम्' इति पतेरिडागमविकल्पः।

❀ सनि राधो हिंसायामच इस्वक्तव्यः ❀। प्रतिरित्सति। हिंसायामिति किम्? आरिरात्सति॥

आप्ज्ञप्यृधामीत्॥ ५५॥

आप्, ज्ञपि, ऋध—इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः। आप्—ईप्सति। ज्ञपि—ज्ञीप्सति। ऋध्—ईर्त्सति।

पदमञ्जरी

आत्मनेदिषु 'पूर्ववत्सनः'। *आरिप्सते* इत्यादौ 'स्कोःसंयोगाद्योः' इति सलोपः॥

*आप्ज्ञप्यृधामीत्*॥ 'आप्लृ व्याप्तौ', 'ज्ञा अवबोधने', णिचि पुक्, 'मारण-तोषणनिशामनेषु ज्ञा' 'मिच्च' इति मित्संज्ञायाम् 'मितां ह्रस्वः'। 'ऋधु वृद्धौ'। *ईर्त्सतीति*। रपर ईकारः, धकारस्य चर्त्वम्।

*ज्ञपेरित्यादि*। इह 'अचः' इत्यनुवर्त्तते, तेन च ज्ञपौ विशिष्यमाणे अजन्तस्य ज्ञपेरित्त्वं विधीयमानम् 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्, अजन्तस्येति च विशेषणं व्यर्थम्; व्यभिचाराभावात्; तेन ज्ञपिनाज्विशेष्यते—ज्ञपेरचो यत्र तत्रस्थस्येति, यथा—आबृधिभ्याम्। एवं चैकप्रकारो विशेषणविशेष्यभावो भवति,

न्यासः

सर्वादेशः स्यात्। प्रमित्सतीति। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः, 'सः स्यार्धधातुके' इति सस्य तः। अपमित्सते इति। 'पूर्ववत् सनः' इत्यात्मनेपदम्। एवमारिप्सते, आलिप्सत इत्यत्रापि। 'खरि च' इति चर्त्वम्—भकारस्य पकारः, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः॥

आप्ज्ञप्यृधामीत्॥ ईप्सतीति। 'आप्लृ व्याप्तौ'। ज्ञीप्सतीति। 'ज्ञा अवबोधने', णिच्, 'अर्त्ति' इत्यादिना पुक्, 'मारणतोषणनिशामनेषु ज्ञा', 'मिच्च' इति मित्सञ्ज्ञायां ह्रस्वः, 'णेरनिटि' इति णिलोपः। ईर्त्संतीति। 'ऋधु वृद्धौ', ईकारः, रपरत्वञ्च, धकारस्य 'खरि च' इति चर्त्वम्—तकारः।

इह च ज्ञपिनाङ्गेनाज् विशेषयितव्यः, न त्वचा ज्ञपिः; व्यभिचाराभावात्। न हि ज्ञपिरजन्ततां व्यभिचरति। अचि तु ज्ञपिनाङ्गेन विशिष्यमाणे सर्वस्य ज्ञपिसम्बन्धिनोऽच

ज्ञपेर्द्वाविचौ, तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य त्वीत्त्वम् । 'सनि' इत्येव–प्राप्स्यति । सीत्येव–जिज्ञपयिषति । अर्दिधिषति । 'सनीवन्तर्ध' इति ज्ञपेः, ऋधेश्चेटो विकल्पः ॥

दम्भ इच्च ॥ ५६ ॥

दम्भेरच इकारादेशो भवति, चकारादीच्च सनि सकारादौ परतः । धीप्सति, धिप्सति । 'सि' इत्येव–दिदम्भिषति ॥

मुचोऽकर्मकस्य गुणो वा ॥ ५७ ॥

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः । 'हल-

पदमञ्जरी

तत्रानन्त्येऽचि सावकाशमीत्त्वमन्त्येऽचि पूर्वविप्रतिषेधेन णिलोपो बाधते, तदिदमुक्तम्—*णेर्लोप इति* । *इतरस्य त्विति* । अपर आह—अस्तु णेरपीत्वम्, तस्य स्थानिवद्भावाण्णिलोपो भविष्यति, ईत्त्ववचनं त्वनन्त्ये श्रवणार्थमिति ।

*अर्दिधिषतीति* । सनि इटि लघूपधगुणे रपरे कृते 'न न्द्राः' इति प्रतिषेधाद् रेफवर्जितद्वितीयस्यैकाचो द्विर्वचनम् ॥

दम्भ इच्च ॥ *धिप्सति, धीप्सतीति* । 'हलन्ताच्च' इति सनः कित्त्वादुपधालोपः, भकारस्य चर्त्वम् । इत्त्वं शक्यमविधातुम्; एवं वक्ष्यामि—'सनिमीमादीनामच इस् दम्भ ईच्च', चकारादिस्भावश्च, ततः 'आप्ज्ञप्यृधामित्' इत्येव ॥

*मुचोऽकर्मकस्य गुणो वा* ॥ *मुमुक्षत इति* । 'भूषाकर्मकिरादिसनां चान्यत्रा-

न्यासः

ईत्त्वेन भवितव्यम्, तथा च णेरपीत्त्वे कृते ज्ञीप्सतीति न सिध्येदित्येतच्चोद्यमाशङ्क्याह—ज्ञपेर्द्वाविचावित्यादि । तत्रेत्त्वस्यावकाशोऽजाद्यः, णिलोपस्यावकाशः–कारणा, हारणा; द्वितीयस्याच उभयप्रसङ्गे णिलोप एव भवतीति पूर्वविप्रतिषेधेन—ज्ञीप्सतीति । इतरस्येति । अकारस्य । अर्दिधिषतीति । लघूपधगुणः, रपरत्वम्, 'अजादेर्द्वितीयस्य' इति 'धि' इत्येतद् द्विरुच्यते । रेफस्य तु द्विर्वचनं न भवति; 'न न्द्राः संयोगादयः' इति प्रतिषेधात् । अभ्यास्य जश्त्वम्—जकारः । तकारो मुखसुखार्थः ॥

दम्भ इच्च ॥ धिप्सति, धीप्सतीति । 'दन्भु दम्भे' । तस्य यदा 'सनीवन्तर्ध' इत्यादिनेड् न क्रियते, तदा सनि सकारादाविकारः, ईकारश्च, 'हलन्ताच्च' इति कित्त्वादनुनासिकलोपः, भकारस्य चर्त्वे पकारः ॥

मुचोऽकर्मकस्य गुणो वा ॥ मोचते इति । 'मुच्लृ मोक्षणे' । 'चोः कुः' इति कुत्वम्, 'इण्कोः' इति षत्वम्, 'कर्मवत् कर्मणा' इत्यादिना कर्मवदतिदेशादात्मनेपदम् । स्वयमेवेति वचनं कर्मकर्तृत्वप्रदर्शनार्थम् । वत्सं मोक्तुमिच्छति, स मोक्तु-

न्ताच्च' इति कित्त्वप्रतिषेधो विकल्प्यते। मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव।

अकर्मकस्येति किम्? मुमुक्षति वत्सं देवदत्तः। कर्मकर्त्तरि मुचिरकर्मको भवति, कर्मविशेषस्याविवक्षितत्वाद्वा॥

**अत्र लोपोऽभ्यासस्य ॥ ५८ ॥**

यदेतत्प्रक्रान्तम्—'सनि मीमा' इत्यादि 'मुचोऽकर्मकस्य' इति यावत्, अत्राभ्यासलोपो भवति। तथैवोदाहृतम्। 'अभ्यासस्य' इत्येतच्चाधिकृतं वेदितव्यमाध्यायपरिसमाप्तेः। इत उत्तरं यद्वक्ष्यामोऽभ्यासस्येत्येवं तद्वेदितव्यम्। वक्ष्यति—'''ह्रस्वः'। डुढौकिषते। तुत्रौकिषते।''

**पदमञ्जरी**

त्मनेपदात्' इति कर्मकर्त्तरि यगभावः। अतिदेशेन स्वाश्रयस्यानिवृत्तेः कर्तरि शब्भवति; यथा—नमते दण्डः स्वयमेवेति।

*कर्मविशेषस्याविवक्षितत्वाद्वेति* । उक्तं हि—

'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।' इति॥

*अत्र लोपोऽभ्यासस्य* ॥ अत्रशब्दस्यार्थं दर्शयति—*यदेतदिति* ।

अथात्रग्रहणं किमर्थम्? अत्र 'सनिमीमा' इत्यादौ प्रकरणे यथा स्याद्; ददौ, ददातीत्यत्र मा भूदिति। नैतदस्ति प्रयोजनम्, एवं वक्ष्यामि—'सनि मीमाघुरभलभशकपतपदामच इसभ्यासलोपश्च'—इति, उत्तरत्रापि 'अभ्यासलोपश्च'

**न्यासः**

मिष्यमाणो मुक्तिक्रियां प्रत्यानुकूल्यं यदा प्रतिपद्यते तदा स्वतन्त्रत्वादस्मिन् कर्मणि कर्तृत्वेन विवक्षिते मुचिरकर्मको भवति।

अथ गुणग्रहणं किमर्थम्, नौदित्येवोच्येत? ननु चैवं सत्योकारश्चकारस्य स्थाने 'अलोऽन्त्यस्य' प्राप्नोति, गुणग्रहणादिक एव भवति, संज्ञाविधाने नियमात्? नैतदस्ति; अच इत्यनुवर्तते। तेनान्त्यस्य न भविष्यति। एवं तर्ह्येतज्ज्ञापयति—अच इति निवृत्तमिति। तेन 'अत्र लोपोऽभ्यासस्य' इत्यत्रातोऽभ्यासस्य लोपो न भवति। सति त्वजधिकारे, मा भूत् तस्यानुवृत्तिरपार्थिकेत्यच एव लोपः स्यात्॥

**अत्र लोपोऽभ्यासस्य** ॥ अत्रेत्यनेन यन्निर्दिश्यते तद्दर्शयितुमाह—यदेतदित्यादि। अथात्र ग्रहणं किमर्थम्? 'सनि मीमा' इत्यादौ प्रकरणे यथा स्याद्, ददौ, ददतुरित्यादौ मा भूदिति चेत्? न; यदि ह्येतत् प्रयोजनमभिमतं स्यात् 'सनि मीमाघुरभलभशकपतपदामच इसभ्यासलोपश्च' इत्येवमुद्दिश्येत, एवमिहैव प्रकरणे भविष्यति, नान्यत्र, ततो निष्प्रयोजन-

'सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्च' इत्येवं सिद्धे यद् 'अत्र'ग्रहणमिह क्रियते तद्विषयावधारणार्थम्—अत्रैवाभ्यास-लोपो भवति, सन्वद्भावविषये न भवति। अमीमपत्। अदीदपत्। 'सन्वल्लघुनि चङ्परे' इति सन्वद्भावात् प्राप्नोति।

सर्वस्याभ्यासस्यायं लोप इष्यते, तदर्थमेव केचिद् 'अत्र'ग्रहणं वर्णयन्ति।

पदमञ्जरी

इत्येव? तत्राह—*सनि मीमाध्वित्यादि*। विषयावधारणम्=विषयनियमः। कः पुनरसौ? इत्यत आह—*अत्रैवेत्यादि*। अवधारणस्य व्यवच्छेद्यं दर्शयति—*सन्वद्भाव-विषये न भवतीति*। *अमीमपदिति*। मिञो णिचि 'मीनातिमिनोति' इत्यात्त्वम्, पुक्, लुङ्, चङि द्विर्वचनम्, सन्वद्भावादित्त्वम्, 'दीर्घो लघोः'।

कथं पुनः सनीत्युच्यमानस्याभ्यासलोपस्यात्र प्रसङ्गः? इत्यत आह—*सन्वल्लघुनीति*। यथैव हि सन्वद्भावेनेत्त्वं भवति, तथाभ्यासलोपोऽपि स्यात्, 'अलोऽन्त्यस्य' लोपेन भवितव्यमित्याशङ्कायामाह—*सर्वस्येति*। कथं पुनः सर्वस्य लभ्यते? अत आह—*तदर्थमेवेति*। 'इतराभ्योऽपि दृश्यन्ते' इति षष्ठ्यन्तात्त्रल्। योऽयमभ्यासः प्रसिद्धोऽस्य लोपः, न तदन्तस्येत्यर्थः। विषयावधारणं त्वन्यथापि

न्यासः

मत्रग्रहणमित्यत आह—सनि मीमाघुरभलभेत्यादि। विषयावधारणार्थमिति। अभ्यासलो-पविषयस्य नियमार्थमित्यर्थः। तामेव तस्य विषयनियमार्थतां दर्शयितुमाह—अत्रैवे-त्यादि। अत्रेत्यनेनेसादिविषयो निर्दिश्यते। इसादिविषय एवाभ्यासलोपो यथा स्या-दिति नियमेन यद्व्यवच्छिन्नं तद् दर्शयितुमाह—सन्वद्भावविषये न भवतीति। अमी-मपदिति। 'मीञ् हिंसायाम्', 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्त्वम्, णिच्, पूर्व-वत् पुक्, लुङ्, च्लेश्चङ्, णिलोपः, उपधाह्रस्वत्वम्, द्विर्वचनम्, अट्, 'सन्वल्लघुनि चङ्परे' इत्यादिना सन्वद्भावे 'सन्यतः' इतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घः। अदीद-पदिति। 'डुदाञ् दाने', पूर्ववण्णिजादिः। अत्रग्रहणादिहाभ्यासलोपो न भवति।

कथं पुनः सन्यभ्यासलोप उच्यमान इह प्राप्नोति, यन्निवृत्त्यर्थमत्रग्रहणं क्रियते? इत्याह—सन्वल्लघुनीत्यादि। यथैव हि सन्वद्भावातिदेशादित्त्वं भवति, एवमभ्यासलोपः स्यात्। इहालोऽन्त्यपरिभाषया 'अलोऽन्त्यस्य' लोपेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—सर्वस्येत्यादि। कथं पुनः सर्वस्य लभ्यते? इत्यत आह—तदर्थमेवेत्यादि। एतेनैवकारेण विषयावधारणार्थतां निरस्यति। यद्येवम्, सन्वद्भाव-विषयेऽपि प्राप्नोति? एवं मन्यते—सन्वद्भावविषयेऽप्यभ्यासलोपप्रसङ्गः परिहर्तुं

'नानर्थकेऽलोऽन्त्यविधिः'—इत्यपरे सर्वस्य कुर्वन्ति ॥

ह्रस्वः ॥ ५९ ॥

ह्रस्वो भवत्यभ्यासस्य । डुढौकिषते, तुत्रौकिषते । डुढौके, तुत्रौके । अडुढौकत्, अतुत्रौकत् ।

❀ अभ्यासस्यानचि ❀ । अभ्यासस्य यदुच्यते अनचि तद्भवतीति

पदमञ्जरी

सिद्धम् । सन्वल्लघुनीति न कार्यमतिदिश्यते, किं तर्हि ? रूपम् । लोपश्चासावभावरूपो न रूपमिति नातिदिश्यते । *नानर्थकेऽलोन्त्यविधिरित्यपरे सर्वस्य कुर्वन्तीति* । 'अनभ्यासविकारेषु' इति तु प्रतिषेधो न भवति; लोपस्याविकारत्वात् । तथा च *पस्पशायाम्*—'लोपागमवर्णविकारज्ञः' इति पृथग्ग्रहणम्, 'द्वौ चापरौ वर्णविकारनाशौ' इति च पृषोदरादिसूत्रे । अन्वयव्यतिरेकाभ्यामर्थवत्तावधार्यते, न चाभ्यासस्योपजनने कश्चिदर्थः प्रतीयत इत्यभ्यासस्यानर्थक्यम् ॥

*ह्रस्वः ॥ हलादिशेषो न भवतीति* । न चागमविधानसामर्थ्याद्धलादिशेषाभावः, अन्यथाऽऽदेशमेवाकारं विदध्यादिति वाच्यम् । सत्यपि वा हलादिशेषे विगृहीतश्रवणार्थत्वादाकारस्य—चलाचलमिति ॥

न्यासः

शक्यते । तत्र सन्वदिति सनाश्रयकार्यमतिदिश्यते । न चाभ्यासलोपः सनमेवापेक्षते, किं तर्हि ? इस्भावादिकमपि । तदभावादसत्यप्यत्रग्रहणेऽमीमपदित्यादिष्वभ्यासलोपो न भविष्यति । तस्मादतिरिच्यत एवात्रग्रहणमिति न कर्त्तव्यमेव । तत् क्रियते—सर्वस्याभ्यासलोपो यथा स्यादिति ।

कथं पुनः क्रियमाणेऽप्यत्रग्रहणे सर्वस्य लोपो लभ्यते ? ग्रन्थाधिक्यादर्थाधिक्यमित्येके । अत्रग्रहणेन महत् सूत्रं प्रणयतैतत् सूचितम्—महतः स्थानिनोऽयं लोपः कर्त्तव्यः । एवञ्चायं महतः स्थानिनः कृतो भवति यदि सर्वस्याभ्यासलोपः क्रियते, नान्यथेत्यन्ये ।

**नानर्थकेऽलोऽन्त्यविधिरित्यपर इति** । के पुनस्ते ? ये विषयावधारणार्थतामत्रग्रहणस्य वर्णयन्ति ते वेदितव्याः । अनर्थकत्वमभ्यासस्य स्थाने द्विर्वचनपक्षे वेदितव्यम् । अत्र हि यस्य स्थाने यच्छब्दान्तरं विधीयते तत् समस्तमेवार्थवत् । एकदेशस्त्वभ्यासोऽनर्थक एव । द्विष्प्रयोगद्विर्वचनपक्षेऽप्यनर्थान्तरवाचित्वादनर्थकताभ्यासस्य ॥

**ह्रस्वः ॥ डुढौकिषते, तुत्रौकिषत इति** । ढौकृ, त्रौकृ—इत्येताभ्यामनुदात्तेत्वादात्मनेपदिभ्यां सन्, 'पूर्ववत्सनः' इत्यात्मनेपदम् । अडुढौकत्, अतुत्रौकदिति । आभ्यामेव ण्यन्ताभ्यां लुङ्, पूर्ववच्चङादि कार्यम् । डुढौके, तुत्रौक इति । लिट्, एकवचनम्, तस्यैश् ।

**अभ्यासस्यानचीत्यादि** । अभ्यासस्य यत् कार्यं विधीयते तदनचि परे भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'वा चरिचलिपतिवदीनामच्याक्चा-

वक्तव्यम् । चराचरः । चलाचलः । पतापतः । वदावदः । हलादिः शेषो न भवति ॥

हलादिः शेषः ॥ ६० ॥

अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते । जग्लौ । मम्लौ । पपाच । पपाठ । आट, आटतुः, आटुः ।

**पदमञ्जरी**

हलादिः शेषः ॥ शिष्यते = अवस्थाप्यत इति शेषः, कर्मणि घञ् । 'हलादिः' इत्यसमासः । समासे तु–

कर्मधारयपक्षे स्यादादिशब्दस्य पूर्वता ।
षष्ठीसमासे त्वानक्षेत्यादौ शेषः प्रसज्यते ॥

कर्मधारये हि विशेषणत्वादादिशब्दस्य पूर्वनिपातः प्राप्नोति । षष्ठीसमासे हलन्तरापेक्षं हल आदित्वम्, नाभ्यासापेक्षमिति अजादिष्वपि प्रसङ्गः । 'अक्षू व्याप्तौ' लिट्, आनक्ष, अत्र ककारस्य शेषः प्राप्नोति । आटतुरित्यादावप्यादिवद्भावात्प्रसङ्गः । कर्मधारयासमासयोस्तु अभ्यासापेक्षमादित्वमिति नायं दोषः । *अनादिर्लुप्यते इति* । हलित्यपेक्ष्यते, एतेनासमासपक्षो दर्शितः । समासे ह्युपसमस्तस्यापेक्षायोगादनादिर्हलिति पुनर्हल्ग्रहणं कर्तव्यम् ।

ननु शेषोऽवस्थानं तच्चादेः प्राप्तमेव, तत्किमेतेन ? अत आह—*आदिशेषनिमित्तोऽयमिति* । सत्यम्, 'सिद्धे सत्यारम्भो नियमार्थः', आदिरेव शिष्यते न

**न्यासः**

भ्यासस्य' इत्यागमविधानसामर्थ्याद्धलादिशेषेण न भवितव्यम् । हलादिशेषे हि सत्यादेशस्यागमस्य च कश्चिद्विशेषो नास्तीत्यादेशमेव विदध्यात् । एवञ्च—अभ्यासलोपाभावात् पारिशेष्यादचोऽन्यत्रैव भविष्यति ॥

हलादिः शेषः ॥ हलादिरिति । हल् चासावादिश्चेति हलादिः—कर्मधारयोऽयम्, न तु षष्ठीसमासः–हलामादिर्हलादिः । यदि षष्ठीसमासः स्यात्, तदायमर्थः स्यात्—अभ्यासस्य ये हलस्तेषामादिः शिष्यत इति । तथा च–आनक्षतुः, आनक्षुरित्यत्र 'अक्षू व्याप्तौ' इत्यस्याजादित्वाद् द्वितीयस्यैकाचोऽभावात् प्रथमस्यैकाचो द्विर्वचने कृते यद्यप्यभ्यासादिः ककारो न भवति, तथापि हलादिर्भवति, तस्य शेषः प्रसज्येत । कर्मधारये तु न दोषः, तत्राभ्यासापेक्षं हलादित्वं विधीयते, न चात्र ककारोऽभ्यासादिः । तस्मात् कर्मधारयोऽयम् । जग्लौ, मम्लाविति । 'ग्लै हर्षक्षये', 'म्लै गात्रविनामे', 'आदेच उपदेशेऽशिति' इत्यात्वम्, 'आत औ णलः' इत्यौत्वम् । आटतुः, आटुरिति । 'अत आदेः' इत्यभ्यासस्य दीर्घत्वे कृते सवर्णदीर्घत्वम् ।

ननु च शेषोऽवस्थानम्, तच्चादेः सिद्धमेव, तत् किमर्थं विधीयते ? इत्याह–आदि-

आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, तत्र अभ्यासजातेराश्रयणात् क्वचिदपि वर्त्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति।

अपरे तु ब्रुवते—शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह। तदवस्थानमुक्तितो यद्यपि प्रधानम्, अविधेयत्वात्तु तदप्रधानम्; निवृत्तेरेव

पदमञ्जरी

त्वनादेरिति, ततश्चादिशेषनिमित्तोऽयमनादेर्लोपो विधीयत इति नास्यानर्थक्यमित्यर्थः। यद्यादिशेषो निमित्तमनादिलोपस्य, पपाचेत्यादौ यत्रादेर्हलोऽवस्थानं तत्रैवान्यस्य निवृत्तिः स्यात्, आटतुरित्यादौ तु न स्यादित्यत आह—*तत्रेति*। जातिपक्षे अभ्यासजातावेवादेरवस्थानमपेक्षितम्, न प्रतिव्यक्तीति दोषाभावः।

*अपरे त्विति*। पूर्वत्र पक्षेऽवस्थानमेव शब्दार्थः, नियमाश्रयणादितरव्यावृत्तिः; अत्र तु पक्षे निवृत्तिरपि गुणभूतशेषशब्देनैवोच्यते। ततः किम्? इत्यत आह—*तदवस्थानमित्यादि*। *उक्तितः*=शब्दव्यापारतः। *अविधेयत्वात्त्विति*। आर्थमप्राधान्यं दर्शयति। निवृत्तिस्तु विपरीतेत्याह—*निवृत्तेरेव त्विति*। लोकेऽपि

न्यासः

शेषनिमित्तोऽयमित्यादि। आदिशेषो निमित्तं यस्य लोपस्य स तथोक्तः। न ह्यत्रादेः शेषो विधीयते, किं तर्हि? तन्निमित्तोऽयमनादेर्लोपो विधीयते। सिद्ध एव ह्यादेरवस्थाने हलादिशेष इतीदं विधीयमानं नियमार्थं विज्ञायते—आदेरेव हलोऽवस्थानं भवति, न त्वनादेरिति। एवमादिशेषनिमित्तमनादेरदर्शनं विहितं भवति। यदि तर्ह्यादिशेषनिमित्तोऽयमनादेर्लोपो विधीयेत, एवं सत्याटतुराटुरित्यत्र लोपो न भवति; निमित्ताभावात्, अभ्यासस्य हलेव तावदादिर्नास्ति, कुतः पुनस्तस्य शेषः? इत्यत आह—तत्रेत्यादि। अनादिलोपे कर्त्तव्येऽभ्यासजातिराश्रीयते, नाभ्यासव्यक्तिः। तेन यद्यपि सर्वास्वभ्यासव्यक्तिषु हलादिर्न वर्त्तते, तथापि क्वचिदपि पपाचेत्यादौ वर्त्तमानो हलादिरनादेः सर्वत्राटतुः, आटुरित्येवमादावपि निवृत्तिं करोति; अभ्यासजातेरभिन्नत्वात्। यैव हि पपाचेत्यादावभ्यासजातिः, सैवाटतुः, आटुरित्यादावपि।

अपरे त्वित्यादि। आटतुः, आटुरित्यादावनादेर्लोपं प्रतिपादयितुमपरे ब्रुवत इति। शेषशब्दोऽयं नावस्थानमात्रमाह, किं तर्हि? निवृत्त्या विशिष्टमवस्थानम्, यद्येवम्, अवस्थानस्य विशेष्यत्वात् प्राधान्यम्, निवृत्तेस्तु विशेषणत्वादप्राधान्यम्। तथा च—प्रधानानुयायित्वादप्राधान्यं गुणानाम्। यत्रैवाभ्यासस्य हलादेरवस्थानं पपाचेत्यादौ, तत्रैवानादेर्हलो निवृत्त्या भवितव्यम्, ततः स एव दोषः—आटतुः, आटुरित्यादावनादेर्हलो निवृत्तिर्न प्राप्नोतीति? अत आह—तदवस्थानमित्यादि। यद्यपि विशेष्यभूतं तदवस्थानं शेषशब्देनाभिधीयत इत्युक्तितः प्रधानम्, तथाप्यविधेयत्वादप्रधानम्। अविधेयत्वं तु तस्य सिद्धत्वात्। निवृत्तिरेव विशेषणभूतापि विधेयत्वात् प्रधानम्। तथा चोक्तम्—

तु विधेयत्वात्प्रधानम्। तत्रायमर्थोऽस्य जायते—अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति। सा किमित्यादेरविधेयां सतीमनिवृत्तिमपेक्षिष्यत इति॥

## शर्पूर्वाः खयः॥ ६१॥

अभ्यासस्य शपूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते। चुश्च्योतिषति। तिष्ठासति। पिस्पन्दिषते।

### पदमञ्जरी

'चङ्क्रम्यमाणोऽधीष्वात्र जपँश्चमङ्क्रमणं कुरु' इत्येवमर्थाभेदेऽपि शब्दोद्भेदः प्रतीयते। ततः किम्? इत्यत आह—*तत्रेति*। साविधेयत्वात्प्रधानभूता सती निवृत्तिः। *किमित्यादेरनिवृत्तिमपेक्षिष्यते*। किम्भूताम्? *अविधेयां सतीम्*। अविधेयत्वादप्रधानभूतां सतीमित्यर्थः। न प्रधानं गुणानुवर्ति, तस्मादपेक्षाकारणं नास्तीत्यर्थः।

*भाष्ये* परिहारान्तरम्—'हल्' इत्येको योगः, 'अत्र लोपः' इति वर्त्तते; स च कर्मसाधनः, यथा 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र, अभ्यासस्य हल् लुप्यते, तत आदिः शेषः; यद्वा—'ह्रस्वोऽहलादिः शेषः' इति संहितापाठ एव, तत्राहलिति पदच्छेदः—अभ्यासोऽहल् भवति, अविद्यमानहल्को भवति, तत आदिः शेष इति॥

*शर्पूर्वाः खयः*॥ पूर्वेण शरां शेषे प्राप्ते खयां शेषो विधीयते, तत्रैकाभ्यासविषयेणानादिशेषेणादिशेषो बाध्यते; सत्यपि सम्भवे बाधनं भवतीति न्यायात्। किञ्चासम्भवोऽप्यत्र शक्यते वक्तुम्, कथम्? शेषशब्दोऽयं निवृत्तिमदवस्थानमाह, न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं सम्भवति। *चुश्च्योतिषतीति*। 'श्च्युतिर् क्षरणे'। *पिस्पन्दिषत इति*। 'स्पदि किञ्चिच्चलने', अनुदात्तेत्।

### न्यासः

सिद्धमुपकारकं परार्थमङ्गम्, साध्योऽनुपकारकस्त्वङ्गीति कृत्वा प्रधानम्। तत्र निवृत्तौ विधेयत्वात् प्रधानभूतायामयमस्य सूत्रस्यार्थो जायते—'अभ्यासस्यानादेर्हलो निवृत्तिर्भवति' इति। ततश्चासौ विधेयत्वात् प्राधान्यमापन्ना सती किमित्यादेरविधेयामप्रधानभूतामनिवृत्तिमपेक्षिष्यते। केन कारणेनापेक्षिष्यते? न केनचिदित्यर्थः। न हि प्रधानस्य गुणानुयायित्वं युक्तम्। तस्मादसत्यपि हलादेरवस्थानेऽनादेर्लोपेन भवितव्यमिति भावः॥

**शर्पूर्वाः खयः**॥ पूर्वेण शरां शेषे प्राप्ते खयां शेष आरभ्यते। अनादिशेषश्चायमादिशेषं बाधते। न हि शरामवस्थाने खयां शेषशब्दो विशेषणमुपपद्यते। स हि निवृत्त्या विशिष्टमवस्थानमाह—इत्युक्तम्। न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं भवति। तस्मादादिशेषस्यायमनादिशेषोऽपवादः। चुश्च्योतिषतीति। 'श्च्युतिर् क्षरणे', सन्, इट्। तिष्ठासतीति। 'ष्ठा गतिनिवृत्तौ'। पिस्पन्दिषत इति। 'स्पदि किञ्चिच्चलने', अनुदात्तेत्, इदित्त्वान्नुम्, 'पूर्ववत्सनः' इत्यात्मनेपदम्।

शर्पूर्वा इति किम् ? पपाच । खय इति किम् ? सस्नौ ।

❀ खर्पूर्वाः खय इति वक्तव्यम् ❀ । उचिच्छिषतीत्यत्र उच्छेरन्तरङ्गत्वात्तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे सत्यभ्यासे तकारः श्रूयेत ॥

## कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति । चकार । चखान ।

### पदमञ्जरी

*सस्नाविति* । 'ष्णा शौचे' ।

*खर्पूर्वा इति* । सूत्रे शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । *उचिच्छिषतीति* । 'उच्छी विवासे' । *अन्तरङ्गत्वादिति* । उपदेशानन्तरमेव प्राप्तत्वादन्तरङ्गत्वात्तुकि कृते द्विर्वचनमिति । तच्च 'पूर्वत्रासिद्धम्' इति चुत्वस्यासिद्धत्वात् सतुक्क एव भवति, तत्र कृते यद्यत्र हलादिशेषः स्यात्, अभ्यासे तकारः श्रूयेत । एतच्च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतदनाश्रित्योक्तम् । तदाश्रयणे तु चुत्वे कृते तस्य सिद्धत्वात् च्छिरशब्दस्य द्विर्वचने चकारशेषेणैव रूपं सिध्यति; न चेदमस्ति—'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति, येन चुत्वं निवर्त्तेत ॥

*कुहोश्चुः* ॥ *चखानेति* । खकारस्य छकारः, तस्य 'अभ्यासे चर्च' इति चकारः । *जघासेति* । घकारस्य झकारः, तस्य जश्त्वम्—जकारः । *जिहीर्षतीति* ।

### न्यासः

सस्नाविति । 'ष्णा शौचे' । पूर्ववण्णल औत्वम् ।

खर्पूर्वा इत्यादि । उचिच्छिषतीति । 'उच्छी विवासे,' सन्, उछिष् इति स्थिते द्विर्वचनं प्राप्नोति, तुक् च; तत्र वर्णाश्रयेणान्तरङ्गत्वात् तुक् । तस्मिन् कृते, द्विर्वचनं प्राप्नोति, चुत्वञ्च; तत्र परत्वात् द्विर्वचने कर्तव्ये चुत्वस्यासिद्धत्वाद् द्विर्वचनं प्राप्नोति छिष्-शब्दस्य । तत्र छकारस्य शेषो न प्राप्नोति; अशपूर्वत्वात् । न ह्ययं तकारः शर्भवति, ततश्च पूर्वेण हलादिशेषे कृते सत्यभ्यासे तकारः श्रूयेत । अथापीदमस्ति—'पूर्वत्रासिद्धीयमद्विवचने' इति पूर्वं चुत्वं पश्चाद् द्विर्वचनं क्रियते, तथापि हलादिशेषेण छकारे निवृत्ते 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति चुत्वे निवृत्ते उचिच्छिषतीत्यत्र तकार एवाभ्यासे श्रूयेत । तस्मात् खर्पूर्वाः खय इति वक्तव्यम् । एवं हि सति च्छकारस्य शेषे कृते तकारो निवर्त्तत इति न भवत्यनिष्टप्रसङ्ग ॥

कुहोश्चुः ॥ चखानेति । 'खनु अवदारणे', द्विर्वचनम्, तस्य चुत्वम्—छकारः, 'अभ्यासे चर्च' इति छकारस्य चकारः । जघासेति । 'लिट्यन्यतरस्याम्'—इत्यदेर्घस्लादेशः, अभ्यासस्य चुत्वम् । नादवतो महाप्राणस्य स्थाने तादृश एव झकारः, तस्यापि जश्त्वम्—जकारः । जहारेति । 'हृञ् हरणे' । जिहीर्षतीति । 'इको झल्' इति सनः

जगाम । जघान । हकारस्य—जहार । जिहीर्षति । जहौ ।

## न कवतेर्यङि ॥ ६३ ॥

कवतेरभ्यासस्य यङि परतश्चुर्न भवति । कोकूयते उष्ट्रः । कोकूयते खरः ।

'कवतेः' इति विकरणनिर्देशः कौतेः, कुवतेश्च निवृत्त्यर्थः । तयोश्चुत्वमेव भवति—चोकूयते ।

यङीति किम् ? चुकुवे ॥

### पदमञ्जरी

'इको झल्' इति सनः कित्त्वम्, हकारस्यापि झकारः, तस्य जश्त्वम् ॥

न कवतेर्यङि ॥ *कवतेरित्यादि* । 'कूङ् शब्दे' इति तुदादिः, 'कु शब्दे' इत्यदादिः, 'कुङ् खुङ्' इति भूवादिः शब्दार्थ एव । तत्रासति विकरणनिर्देशे 'कोः' इत्युच्यमाने त्रयाणामपि ग्रहणं स्याद् । अथ तौदादिको दीर्घान्तः ? एवमपि

### न्यासः

कित्त्वम्, 'अज्झनगमां सनि' इति दीर्घत्वम्, 'ॠत इद्धातोः' इतीत्वम्, रपरत्वम्, हलि च' इति दीर्घत्वम्, हीर्ष—इत्यस्य द्विर्वचनम् ॥

न कवतेर्यङि ।। पूर्वेण प्राप्तस्य चुत्वस्यायं निषेधः । कोकूयत इति । 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः ।

अथ विकरणनिर्देशः किमर्थः, न 'कोः' इत्येवोच्येत ? इत्यत आह—कवतेरित्यादि । 'कुङ् शब्दे' इति तौदादिकः, 'कु शब्दे' इत्यादादिकः, 'कुङ्' इति भौवादिकः शब्दार्थ एव; तत्र भौवादिकस्य ग्रहणं यथा स्यात्, इतरयोर्मा भूदित्येवमर्थो विकरणनिर्देशः । ननु चानयोर्निवृत्तेरेतत् फलम्—चोकूयत इत्येतदपि रूपं यथा स्यादिति, एतच्च 'कोः' इत्यपि निर्देशे निरनुबन्धकपरिभाषया कौतेरेव निरनुबन्धकस्य ग्रहणे सति सिध्यत्येव, तस्मात् 'कोः' इत्येवं निर्देशः कर्त्तव्यः ? नैतदेवम्; सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम् । तथा हि—कवतिस्तावदव्यक्तशब्दे वर्तते—उष्ट्रः कोकूयत इति; कुवतिरप्यार्त्तस्वरे वर्तते—चोकूयते वृषल इति, पीडित इत्यर्थः; कौतिस्तु शब्दमात्रे । तस्माद्विशिष्टार्थस्य परिग्रहो यथा स्यादित्येवमर्थो विकरणनिर्देशः कर्तव्यः । ननु लुग्विकरणपरिभाषया कौतेर्न भविष्यतीति, तत् किमर्थं तन्निवृत्त्यर्थता विकरणस्योपपद्यते ? एवं मन्यते—कुवतिनिवृत्त्यर्थोऽवश्यं विकरणनिर्देशः कर्तव्यः, सोऽन्यार्थः क्रियमाणः कौतेर्निवृत्त्यर्थोऽपि भवति, तेनलुग्विकरणपरिभाषात्र कौतेर्निवृत्त्यर्थमाश्रयितव्या न भवति ।

चुकुवे इति । पूर्ववत् तशब्दस्यैश्, 'अचि श्नुधातु' इत्यादिनोवङ् ॥

कृषेश्छन्दसि ॥ ६४ ॥

कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति । करीकृष्यते यज्ञकुणपः ।

छन्दसीति किम् ? चरीकृष्यते कृषीवलः ॥

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

दाधर्ति, दर्धर्ति, दर्धर्षि, बोभूतु, तेतिक्ते, अलर्षि, आपनीफणत्, संसनिष्यदत्, करिक्रत्, कनिक्रदत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य, आगनीगन्ति—इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते । दाधर्ति दर्धर्ति दर्धर्षीति—धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च ।

पदमञ्जरी

द्वयोर्ग्रहणं स्यात् । न च निरनुबन्धकत्वाद्दादादिकस्यैव ग्रहणम्; लुग्विकरणत्वात् । तस्माद्भौवादिकस्यैव यथा स्यादिति विकरणनिर्देशः ॥

*दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च* ॥ धारयतेरिति । 'धृङ् अवस्थाने' ण्यन्तः । धृङो वेति । स एव प्रकृत्यन्तरम् । श्लौ यङ्लुकि

न्यासः

कृषेश्छन्दसि । करीकृष्यत इति ॥ 'कृष विलेखने' । 'रीगृदुपधस्य' इति रीगागमः ॥

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ॥

चकारश्छन्दसीत्यनुकर्षणार्थः । धारयतेरिति । 'धृञ् धारणे,' 'धृङ् अवस्थाने,' 'धृङ् अवध्वंसने'—इत्येतेषां ण्यन्तानां ग्रहणम् । धृङो वेति । अनन्तरोक्तयोरण्यन्तयोः । श्लौ यङ्लुकि वेति । तत्र तावद् दाधर्तीति—यदा धारयतेः श्लौ निपात्यते, तदा णिलोपोऽभ्यासस्य दीर्घत्वं निपात्यते । यदा तु यङ्लुकि, तदाऽनेकाच्त्वाद् यङ् न प्राप्नोति, सोऽपि निपात्यते, उपधाह्रस्वत्वञ्च । णिलोपस्त्वार्धधातुकत्वादेव यङः 'णेरनिटि' इत्येवं सिद्धः । अभ्यासस्य दीर्घत्वमपि 'दीर्घोऽकितः' इत्येवं सिद्धम् । दर्धर्ति, दर्धर्षीति । अत्रापि यदा धारयतेः श्लौ तदाभ्यासस्य रुगागमो णिलोपश्च । श्लुस्तु सर्वत्र 'बहुलं छन्दसि' इत्यनेनैव वेदितव्यः । यदा तु यङ्लुकि, तदा 'दीर्घोऽकितः'

दाधर्त्ति। एवं दर्धति—श्लौ रुगभ्यासस्य निपात्यते। तथा दर्धर्षीति। अत्र च यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्।

बोभूत्विति—भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्; अत्र 'भूसुवोस्तिङि' इति गुणाभावः सिद्धः? ज्ञापनार्थं तर्हि निपातनमेतत्। ज्ञापयति—अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति। बोभोति, बोभवीति।

तेतिक्ते—तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङो ङित्त्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव? ज्ञापनार्थं तु आत्मनेपदनिपातनम्—

पदमञ्जरी

*चेति*। 'श्लौ' इत्येतद्धारयतेः, धृञो वेत्युभाभ्यां सम्बध्यते। 'यङ्लुकि च' इत्येतत्तु 'धृञो वा' इत्यनेनैव। तदयमर्थः—दाधर्तीति धारयतेः श्लौ णिलुगभ्यासदीर्घत्वं च निपात्यते, धृञो वा श्लावभ्यासदीर्घत्वम्। अत्र परस्मैपदमपि निपात्यम्, तस्यैव वा यङ्लुकि अभ्यासदीर्घत्वं निपात्यत इति। दर्धर्तीत्यत्र तु यङ्लुक्। पक्षे दाधर्तीति। निपातनेन प्राप्तस्य दीर्घत्वस्याभावो निपात्यते, 'रुग्रिकौ च लुकि' इत्येव रुक् सिद्धः। श्लुपक्षे तु रुगपि निपात्यः। दर्धर्षीत्यत्र यङ्लुक्, पक्षे न किञ्चिन्निपात्यम्।

*बोभूत्विति*। यङ्लुगन्ताल्लोट्। *बोभवीतीति*। लट्, 'यङो वा' इति पक्षे ईट्।

*प्रत्ययलक्षणेनेति*। यद्यपि 'अनुदात्तङितः' इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तम्; तथापि लोलूयते इत्यादौ यङन्तादात्मनेपदम्, तत्प्रत्ययस्य

न्यासः

इत्यनेन दीर्घत्वे प्राप्ते तदभावश्च निपात्यते। यदा धृङः—दाधर्तीति श्लौ निपात्यते, तदा द्विर्वचने कृतेऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु तस्यैव धृञो यङ्लुकि, तदाभ्यासस्य 'ऋतश्च' इति प्राप्तस्य रुगादेरभावो निपात्यते। दर्धर्ति, दर्धर्षीति। अत्रापि यदा धृञ्, श्लौ, तदाभ्यासस्य रुगागमो निपात्यते; यदा तु यङ्लुकि, तदा पूर्ववत् प्राप्तस्य दीर्घत्वस्याभावो निपात्यते, न तु रुगागमः; तस्य हि 'रुग्रिकौ च लुकि' इत्येवं सिद्धत्वात्। परस्मैपदं च 'व्यत्ययो बहुलम्' इति।

बोभूत्विति। अन्यत्रेति। लोट्प्रथमपुरुषस्यैकवचनापेक्षमन्यत्वं वेदितव्यम्। बोभवीतीति। अदादित्वच्छपो लुक् 'बहुलं छन्दसि' इति बहुलवचनत्वाद्भवति, 'यङो वा' इति पक्ष ईट्।

तेतिक्त इति। तिजेरिति 'तिज निशाने' इत्येतस्य। ननु च यङो ङित्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धम्, एतत् किमर्थं निपात्यते? इत्याह—यङो ङित्वादित्यादि।

'अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति' ।

अलर्षीति—इयर्तेर्लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते—अलर्ति दक्षः ।

आपनीफणदिति—फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीग्निपात्यते ।

संसनिष्यदिति—स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते । न चास्य सम्पूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते—आसनिष्यददिति ।

करिक्रदिति—करोतेर्यङ्लुन्तस्य शतरि चुत्वाभावः, अभ्यासककारस्य रिगागमो निपात्यते ।

कनिक्रददिति—क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते। तथा चास्य हि विवरणं कृतम् । अक्रन्दीदिति भाषायाम् ।

पदमञ्जरी

ङित्वादिति प्रत्ययलक्षणं भवत्येव । एवं चादादिषु 'चर्करीतं परस्मैपदम्' इति परस्मैपदग्रहणमनुवादः । कर्त्तर्येव चेदमात्मनेपदं नियम्यते इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव ।

*करिक्रदिति* । अत्र चुत्वाभाव एव निपात्यः, रिगागमस्तु 'रुग्रिकौ च' इत्येव सिद्धः । *तथा चास्येति* । अस्य मन्त्रपदस्य *ब्राह्मणे* विवरणम् ।

न्यासः

ज्ञापनार्थमात्मनेपदं सिद्धम् । ज्ञापनार्थमात्मनेपदं निपात्यत इति दर्शयति । ज्ञापनस्य तु प्रयोजनम्—अन्यत्र यङ्लुगन्तादात्मनेपदं न भवतीति—भावः, बोभवीतीति ।

अलर्षीति । 'ॠ सृ गतौ'—इत्यस्य जौहोत्यादिकस्य 'उरत्' इत्यत्त्वे कृते रपरत्वे च हलादिशेषः प्राप्नोति, तदपवादो रेफस्य लत्वं निपात्यते । किं पुनः कारणं सिपा निर्देशोऽयमतन्त्रमित्येवं व्याख्यायते ? इत्याह—तिप्यपीत्यादि ।

फणतेरिति । 'फण गतौ'—इत्येतस्य । स्यन्देरिति । 'स्यन्दू प्रस्रवणे'—इत्येतस्य । किमर्थं पुनः सम्पूर्वस्यातन्त्रत्वं व्याख्यायते ? इत्याह—अन्यत्रापि हीत्यादि ।

करिक्रदिति । 'डुकृञ् करणे' । यणादेशे कृतेऽनृकारान्तत्वाद् 'ऋतश्च' इत्यभ्यासस्य रिगागमो न प्राप्नोति, स निपात्यते ।

क्रन्देरिति । 'कदि क्रदि क्लदि आह्वाने रोदने च' इत्येतस्य । कथं पुनर्ज्ञायते—

भरिभ्रदिति—बिभर्त्तेर्यङ्लुगन्तस्य शतरि 'भृञामित्' इति इत्त्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते ।

दविध्वत इति—ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत् । अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते । दविध्वतो रश्मयः सूर्यस्य ।

दविद्युतदिति—द्युतेर्यङ्लुन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावः, अत्वम्, विगागमश्च निपात्यते ।

तरित्रत इति—तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते ।

सरीसृपतमिति—सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमो निपात्यते ।

वरीवृजदिति—वृजेः शतरि श्लौ रीगागमो निपात्यतेऽभ्यासस्य ।

मर्मृज्येति—मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते । ततः 'मृजेर्वृद्धिः' न भवति; अलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते ।

आगनीगन्तीति—आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । वक्ष्यन्ती वेदागनीगन्ती कर्णम् ।

पदमञ्जरी

*भरिभ्रदिति* । अत्रापि जश्त्वाभाव एव निपात्यः । *जसि रूपमिति* । 'नाभ्यस्ताच्छतुः' इति नुमः प्रतिषेधः ॥

न्यासः

लुङीत्येतन्निपातनम् ? इत्याह—अस्य हीत्यादि । यस्माल्लुङन्तेन क्रन्दतेरर्थो निर्दिश्यते, ततो ज्ञायते—लुङ्येतन्निपातनमिति । अत्र चाभ्यासस्य रीगागमो निपात्यत एव ।

बिभर्त्तेरिति । 'डुभृञ् धारणपोषणयोः'—इत्यस्य ।

ध्वरतेरिति । 'ध्वृ हूर्च्छने' ।

द्युतेरिति । 'द्युत दीप्तौ'—इत्यस्य । सम्प्रसारणाभाव इति । 'द्युतिस्वाप्योः सम्प्रसारणम्' इति सम्प्रसारणं प्राप्नोति, अतस्तदभावो निपात्यते ।

तरतेरिति । 'तॄ प्लवनतरणयोः'—इत्यस्य ।

सृपेरिति । 'गम्लृ सृप्लृ गतौ'—इत्यस्य ।

वृजेरिति । 'वृजी वर्जने'—इत्येतस्य ।

मर्मृज्येति । 'मृजू शुद्धौ' इत्येतस्य णलि रूपम् । आगनीगन्तीति । एतदपि लटि तिपि ।

इतिकरणमेवम्प्रकाराणामन्येषामप्युपसंग्रहार्थम् ॥

उरत् ॥ ६६ ॥

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति । ववृते, ववृधे, शशृधे[1] । नर्नर्ति, नरिनर्त्ति, नरीनर्ति—इत्येवमादौ 'अभ्यासविकारेषु अपवादो नोत्सर्गान्विधीन्बाधते' इत्युरदत्वे कृते रुगादय आगमाः क्रियन्ते ॥

द्युतिस्वाप्योः सम्प्रसारणम् ॥ ६७ ॥

द्युति, स्वापि—इत्येतयोरभ्यासस्य सम्प्रसारणं भवति । विदिद्युते । व्यदिद्युतत् । विदिद्योतिषते । विदिद्युतिषते । विदेद्युत्यते ।

पदमञ्जरी

उरत् ॥ ववृते इत्यादौ हलादिशेषे कृते ऋकारान्ततायामुपजातायामद्भावः, रपरत्वे पुनः 'हलादिः शेषः' ।

नर्नर्तीत्यादौ रुगादिषु कृतेषु ऋकारान्तत्वाभावादत्वं न स्यादित्याशङ्क्याह—*नर्नर्तीत्यादाविति* । यथा चाभ्यासविकारेषु बाधका न बाधन्ते, तथा 'दीर्घोऽकितः' इत्यत्रैव वक्ष्यते ॥

*द्युतिस्वाप्योः सम्प्रसारणम्* ॥ *विदिद्युते इति* । 'द्युत दीप्तौ' अनुदात्तेत् । *व्यदिद्युतदिति* । ण्यन्ताल्लुङ्, चङि द्विर्वचनम् । *विदिद्योतिषते, विदिद्युतिषत*

न्यासः

इतिकरणस्य प्रकारार्थतां दर्शयितुमाह—एवम्प्रकाराणामित्यादि । दाधर्तिप्रभृतीनामिव येषां छन्दस्यलाक्षणिकं कार्यं दृश्यते त एवम्प्रकारा दाधर्तिसदृशा इत्यर्थः । के पुनस्ते ? गलगर्त्तीत्येवमादयः । 'गॄ निगरणे' इत्येतस्य यङ्लुकि श्लौ वा गलगर्त्तीति रूपम्, अभ्यासस्य चर्त्वाभावः, हलादिशेषापवादः, रेफस्य लत्वं च निपात्यते ॥

उरत् ॥ छन्दसीति निवृत्तम्; पूर्वसूत्रे चकारानुकृष्टत्वात् । ववृते, ववृधे, शशृध इति । 'वृतु वर्तने', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', लिट्; तत्राद्ययोरनुदात्तेत्त्वादात्मनेपदम्, इतरत्र स्वरितेत्त्वात्; पूर्ववदेव द्विर्वचनम्, हलादिशेषे च कृत ऋवर्णान्ततायामुपजातायामद्भावः, रपरत्वम्, हलादिशेषः ।

नर्नर्ति, नरिनर्ति, नरीनर्त्तीत्येवमादौ 'ऋदुपधस्य च' इति, 'रुग्रिकौ च लुकि' इति वा परत्वादपवादेषु कृतेषु रीगादिषु ऋवर्णान्ताभावादनेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—नर्नर्तीति ॥

द्युतिस्वाप्योः सम्प्रसारणम् ॥ हलादिशेषे प्राप्ते तस्यापवादो द्युतिस्वाप्योः सम्प्रसारणमारभ्यते । विदिद्युत इति । 'द्युत दीप्तौ', लिट्, अनुदात्तेत्त्वादात्मनेपदम्, तत्र

---

१. 'शशृधे'—इति मुद्रितपुस्तके नास्ति ।

स्वापेः—सुष्वापयिषति ।

स्वापिर्ण्यन्तो गृह्यते, तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणमिष्यते । इह न भवति—स्वापयतेर्ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयतेः सन्—सिष्वापकीयिषति ॥

पदमञ्जरी

इति । 'रलो व्युपधात्' इति सनः कित्त्वविकल्पः ।

*स्वापिर्ण्यन्तो गृह्यत इति* । स्वपेर्यो णिज्विहितस्तदन्तस्य ग्रहणम्, तेन स्वापं करोतीति णिचि कृते यः स्वापिस्तस्य ग्रहणं न भवति । एतच्च 'स्वापि' इत्युक्ते सहसा प्रथमं तस्यैव प्रतीतेर्लभ्यते । अण्यन्तस्यैव योऽभ्यासस्तस्यानेनैव सम्प्रसारणं सिद्धम् । तथा हि—लिटि तावत्किति 'वचस्वपियजादीनां किति' इति कृतसम्प्रसारणमेव द्विरुच्यते, अकित्यपि 'लिट्यभ्यासस्योभयेषाम्' इत्यस्ति सम्प्रसारणम्, सन्नपि 'रुदविदमुषग्रहिस्वपि' इति किदेव, यङ्यपि 'स्वपिस्यमिव्येञां यङि' इति कृतसम्प्रसारणमेव द्विरुच्यते । अथापि यङ्लुक्यभ्यासस्य सम्प्रसारणं न केनचित्प्राप्तम्, तथापि 'स्वापेः' इति निर्देशादेव ण्यन्तस्य ग्रहणम् । *तस्येत्यादि* । अभ्यासेनात्र स्वनिमित्तं प्रत्ययः सन्निधापितः, तेन स्वापिरङ्गं विशेष्यते—अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिस्तस्येति । सिस्वापकी-

न्यासः

सम्प्रसारणमनेन, 'सम्प्रसारणाच्च' इति परपूर्वत्वम् । व्यद्युतदिति ण्यन्ताल्लुङ्, च्लेश्चङ्, णिलोपः, उपधाह्रस्वत्वम्, द्विर्वचनम्, अडागमः । विदिद्युतिषते, विदिद्योतिषते इति । सन्, 'रलो व्युपधात्' इत्यादिना विकल्पेन कित्त्वम् । यदा कित्त्वं नास्ति, तदा लघूपधगुणः, 'पूर्ववत्सनः' इत्यात्मनेपदम् । सुष्वापयिषतीति । 'ञिष्वप् शये', णिच्, तदन्तात् सन् ।

किं कारणं ण्यन्तस्योदाहरणमुपन्यस्तम् ? इत्यत आह—स्वापिर्ण्यन्तो गृह्यत इति । तेन ण्यन्तस्योदाहरणमुपदर्शितमित्यभिप्रायः । ण्यन्तस्य ग्रहणं स्वापेरिति निर्देशादेव विज्ञायते । न ह्यण्यन्तस्यैवंविधो निर्देश उपपद्यते । अपि च—अण्यन्तस्य योऽभ्यासस्तस्यानेनैव शास्त्रेण सम्प्रसारणं सिद्धम् । तथा हि—लिटि तावत् 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनैव सिद्धम्, सनि तु 'रुदविद' इत्यादिना सनः कित्त्वे सति वच्यादिसूत्रेण कृतसम्प्रसारण एव सुपिभूतो द्विरुच्येत, यङ्यपि 'स्वपिस्यमिव्येञां यङि' इति कृतसम्प्रसारण एवासौ द्विरुच्यते । तस्मादण्यन्तस्यानेन शास्त्रेण सम्प्रसारणस्य सिद्धत्वात् स्वापिर्ण्यन्तो गृह्यते ।

यदि स्वापिर्ण्यन्तो गृह्यते, तदा स्वापयतेर्ण्वुल्—स्वापकः, स्वापकमिच्छतीति क्यच्, स्वापकीय इति स्थिते स्वापकीयितुमिच्छतीति सन्—सिष्वापकीयिषति, अत्रापि संप्रसारणं प्राप्नोति ? इत्याह—तस्येत्यादि । तस्य स्वापेरभ्यासस्य निमित्तं यः प्रत्ययस्तेनानन्तर्ये

## व्यथो लिटि ॥ ६८ ॥

व्यथेर्लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति। विव्यथे, विव्यथाते, विव्यथिरे। हलादिःशेषेण यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, यकारस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति प्रति-

पदमञ्जरी

यिषतीत्यत्र चाभ्यासनिमित्तं यः प्रत्ययः सन् न तस्मिन्स्वापिरङ्गम्, यस्मिंश्च स्वापिरङ्गं ण्वुलि न तदभ्यासस्य निमित्तम्। द्युतेस्तु—व्यदिद्युतदिति, अत्राभ्यासस्य निमित्तं यश्चङ् स यद्यपि णिचा व्यवहितः, तथापि सम्प्रसारणमिष्यते।

द्वन्द्वनिर्दिष्टयोरेतद्वैषम्यं लभ्यते कथम्?
तस्माद्वक्तव्यमेवैतदिति मन्यामहे वयम्॥

द्योतकीयतेः सनि अभ्यासस्य प्रसारणं भवति, न वेति चिन्त्यम्।

*व्यथो लिटि* ॥ *विव्यथे इति* । 'व्यथ भयचलनयोः', अनुदात्तेत्। अत्र थकारे हलादिशेषेण निवृत्ते वकारस्य प्रसारणप्रसङ्ग इत्याशङ्कयाह—*यकारस्येति*।

इह 'लिट्यभ्यासस्योभयेषाम्' इत्यस्यानन्तरम् 'व्यथः' इति वक्तव्यम्, ततः 'द्युतिस्वाप्योः'? तथा तु न कृतमित्येव॥

न्यासः

सत्यव्यवधान इदं सम्प्रसारणमिष्यते, तेन सिष्वापकीयिषतीत्यत्र न भवति। न ह्यभ्यासनिमित्तं यः प्रत्ययः इह स स्वापेरनन्तरः; ण्वुला क्यचा च व्यवधानात्।

कथं पुनरभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणं लभ्यते, यावता नायं विशेषः सूत्रोपात्तः? एवं मन्यते—अभ्यासेनाभ्यासनिमित्तं यः प्रत्ययः स सन्निधापितः, तस्य प्रत्ययविशेषनिमित्तत्वात्; तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन स्वापिरङ्गं विशिष्यते—अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिरिति। एवञ्च विशेष्यविशेषणभावे सत्यभ्यासनिमित्ते प्रत्ययेऽनन्तरे सति स्वापेरङ्गस्य योऽभ्यासस्तस्यैव सम्प्रसारणेन भवितव्यम्, न तु व्यवहितेन प्रत्ययान्तरेण हि यो व्यवहितः प्रत्ययः सन्नभ्यासे निमित्तं तदपेक्षया स्वापिरङ्गं भवति, न च सिष्वापकीयिषतीत्यभ्यासनिमित्तं यः प्रत्ययः स स्वापेरङ्गस्यानन्तरः; यस्तु स्वापेरनन्तरो ण्वुल् तदपेक्षया स्वापिरङ्गं भवति, न चासावभ्यासनिमित्त भवति। इह तर्हि कस्मान्न भवति—स्वपनं स्वापो घञ्, स्वापं करोतीति णिच्, स्वापयितुमिच्छतीति सन्, सिष्वापयिषतीति? उच्यते; अकारलोपस्य स्थानिवद्भावात् स्वापेर्योऽभ्यासस्तस्य सम्प्रसारणेन भवितव्यम्। न चाकारलोपस्य स्थानिवद्भावे सति स्वापेरभ्यासः, किं तर्हि? शब्दान्तरस्य स्वाप इत्येतस्य॥

व्यथो लिटि ॥ विव्यथ इति। 'व्यथ भयचलनयोः', अनुदात्तेत्वादात्मनेपदम्।

षिध्यते । लिटीति किम् ? वाव्यथ्यते ॥

दीर्घ इणः किति ॥ ६९ ॥

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः । ईयतुः । ईयुः । 'इणो यण्' इति यणादेशे कृते स्थानिवद्भावाद् द्विर्वचनम् ।

कितीति किम् ? इयाय । इययिथ ॥

अत आदेः ॥ ७० ॥

अभ्यासस्यादेरकारस्य दीर्घो भवति लिटि परतः । 'अतो गुणे' पररूपत्वस्यापवादः । आट, आटतुः, आटुः ।

आदेरिति किम् ? पपाच । पपाठ ॥

पदमञ्जरी

*दीर्घ इणः किति* ॥ *यणादेशे कृत इति* । परत्वात् । *स्थानिवद्भावादिति* । 'द्विर्वचनेऽचि' इति रूपस्थानिद्भावः । *इयाय, इययिथेति* । णलि थलि च वृद्धि-गुणयोः कृतयोः स्थानिवद्भावाद् द्विर्वचनम्, 'अभ्यासस्यासवर्णे' इतीयङ् ॥

*अत आदेः* ॥ 'आदेः' इति वचनादत्र तदन्तविधिर्न भवति, लिटीत्यनुवर्त्तते, किद्ग्रहणं तु निवृत्तम् । 'अतो गुणे' पररूपत्वे प्राप्ते दीर्घत्वमिदमारभ्यते । तपरकरणं किम् ? दीर्घस्य मा भूत्—'आछि आयामे', आञ्छ, आञ्छतुः,

न्यासः

अथ यकारस्य हलादिशेषेण निवृत्त्या भवितव्यम्, वकारस्य सम्प्रसारणेन !—इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—यकारस्येत्यादि ।

वाव्यथ्यत इति । यङ् ॥

**दीर्घ इणः किति** ॥ इणो ह्रस्वस्यैव श्रवणे प्राप्ते दीर्घत्वं विधीयते । ईयतुः, ईयुरिति । ननु च परत्वात् 'इणो यण्' इति यणादेशे सत्यनच्कत्वाद् द्विर्वचनं न प्राप्नोतीत्यत आह—इणो यणित्यादि । स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इत्यनेन । स च नियतकाले द्विर्वचन एव कर्त्तव्ये कृते च तस्मिन्नादेशरूप एवावतिष्ठते । इयाय, इययिथेति । णलि थलि चेति यथाक्रमं वृद्धिगुणयोः कृतयोः स्थानिवद्भावाद् द्विर्वचनमिकारः, तस्य 'अभ्यासस्यासवर्णे' इतीयङ् ॥

**अत आदेः** ॥ लिटीत्यनुवर्तते । किद्ग्रहणं तु निवृत्तम् । 'अतो गुणे' इति पररूपत्वे प्राप्ते दीर्घत्वमारभ्यते । तपरकरणं स्वभावत एव यो ह्रस्वस्तस्य दीर्घो यथा स्यात् । तेनोपदेशे यो दीर्घस्तस्य ह्रस्वत्वे कृतेऽपि दीर्घो न भवति—'आछि आयामे', आञ्छ,

## तस्मान्नुड् द्विहलः ॥ ७१ ॥

तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति। आनङ्ग, आनङ्गतुः, आनङ्गुः। आनञ्ज, आनञ्जतुः, आनञ्जुः।

द्विहल इति किम्? आट, आटतुः, आटुः।

ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति—आनृधतुः, आनृधुः॥

पदमञ्जरी

आञ्छुः। किं च स्यात्, यद्यत्र दीर्घः स्यात्? 'तस्मान्नुड् द्विहलः' इति नुट् प्रसज्येत। यद्यप्यत्रापि ह्रस्वत्वे कृते अद्भवति, तथापि तपरकरणसामर्थ्याद् 'अदेव योऽन्' इति विज्ञानात् स्वाभाविकस्य मात्रिकस्य परिग्रहः॥

*तस्मान्नुड् द्विहलः*॥ *आनङ्गेति*। 'अगि रगि लघि गत्यर्थाः'। *आनञ्जेति*। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। द्विहल्ग्रहणमनेकहलुपलक्षणम्, तेनानर्छेत्यत्र गुणे रपरे कृते त्रिहलोऽपि भवति।

'ऐऔच्' इत्यत्र 'वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति' इत्युक्त्वा 'नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्' इत्युक्तम्[1], तत्रावसरे प्राप्ते नुड्विधौ प्रतिविधत्ते—*ऋकारैकदेश इत्यादि*।

न्यासः

आञ्छतुः, आञ्छुरिति। लिट्, तिपो णल्, तसोऽतुस्, झेरुस्, द्विर्वचने हलादिशेषे 'ह्रस्वः'। किञ्च स्याद् यद्यत्र दीर्घः स्यात्? 'तस्मान्नुड् द्विहलः' इति नुट् स्यात्। 'आदेः' इति वचनादिहान्तस्य दीर्घो न भवति—पपाचेत्यादौ।

**तस्मान्नुड् द्विहलः**॥ द्वौ हलौ यस्य तद्द्विहल्। आनङ्ग, आनङ्गतुः, आनङ्गुरिति। 'अगि रगि लगि गत्यर्थाः', इदित्त्वान्नुम्। आनञ्ज, आनञ्जतुः, आनञ्जुरिति। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'।

'ऐऔच्' इत्यत्र 'प्रत्याहारे वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयः, तेषु तत् कार्यं न भवति, तच्छायानुकारिणो हि ते, न पुनस्त एव; पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः' इत्युक्त्वा 'नुड्विधिलादेशविनामेष्वृकारे प्रतिविधातव्यम्' इत्युक्तम्[1]। तत्रावसरप्राप्त्या ऋकारे नुड्विधौ प्रतिविधानमाह—**ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यत इति**। आनृधतुः, आनृधुरिति। 'ऋधु वृद्धौ'। कथं पुनर्वर्णात्मकानां हलां ग्रहणेनावर्णात्मक ऋकारैकदेशो रेफो गृह्यते? द्विहल्ग्रहणसामर्थ्यादिति भावः।

अत्र 'तस्मान्नुट्' इत्येवं वक्तव्यम्। न चैवं सत्याटतुः, आटुरित्यादौ नुट्प्रसङ्गो

---

१–१. 'काशिकायाम्' इति शेषः।

## अश्नोतेश्च ॥ ७२ ॥

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति । व्यानशे, व्यानशाते, व्यानशिरे ।

'अश्नोतेः' इति विकरणनिर्देशो अश्नोतेर्मा भूदिति—आश, आशतुः, आशुः ॥

## भवतेरः ॥ ७३ ॥

भवतेरभ्यासस्याकारादेशो भवति लिटि परतः । बभूव, बभूवतुः, बभूवुः ।

### पदमञ्जरी

अत्र द्विहल्ग्रहणं न कर्त्तव्यम्, 'तस्मान्नुट्' इत्येवास्तु; एवमुच्यमाने आटतुः, आटुरित्यत्रापि प्राप्नोति ? 'अश्नोतेश्च' इत्येतन्नियमार्थं भविष्यति—अद्विहलो यदि भवति अश्नोतेरेवेति; अश्नातिनिवृत्त्यर्थं नाश्न इत्येवं वाच्यं स्यात्, तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतदेव प्रयोजनम्—द्विहल्छायानुकारिणोऽपि यथा स्यादिति ॥

*भवतेरः* ॥ 'उरत्' इत्यस्यानन्तरमिदं नोक्तं लिटीत्युपजीवनाय । यदि पुनस्तदत्रैवोच्येत ? नैवं शक्यम्; लिट्येव हि स्यात् । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥

### न्यासः

भवति; अश्नोतेरित्यस्य नियमार्थत्वात्—अद्विहलो यदि भवति नुट् तदाश्नोतेरेव, नान्यस्येति । अश्नातिनिवृत्त्यर्थं तदेतन्नाशङ्कनीयम्; यद्येतावत् प्रयोजनं स्यात् 'नाश्नः' इत्येवं ब्रूयात् । तस्मान्नियम एवास्य प्रयोजनम् । तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यतो द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्—द्विहल्समानाकृतेरपि यथा स्यात् । यस्याप्येको हल् मुख्योऽवयवो द्वितीयस्त्वमुख्यस्तच्छायानुकारित्वादुपचारेण हल् व्यपदेशार्हः, तस्यापि यथा स्यादित्येवमर्थम् । एतच्च कथं लभ्यते ? यद्यत्र द्विहल इत्येवंश्रुतिस्तच्छायानुकारिण्यपि ऋकारावयवे रेफे वर्तते, नान्यथा । तस्माद् द्विहल्ग्रहणसामर्थ्यादत्र हल्ग्रहणेन ऋकारैकदेशो रेफो गृह्यते; अन्यथा द्विहल्ग्रहणमनर्थकं स्यात् ॥

अश्नोतेश्च ॥ अद्विहलार्थोऽयमारम्भः । व्यानशे इति । 'अशू व्याप्तौ', अनुदात्तेत्त्वादात्मनेपदम्, त, एश् ।

अश्नोतेरिति विकरणनिर्देशः 'अश भोजने'—इत्येतस्य क्रैयादिकस्य निवृत्तये । चकारो नुडागमानुकर्षणार्थः ॥

भवतेरः ॥ बभूवेति । 'भुवो वुग्लुङ्लिटोः' इति वुक् । अनुबभूवे इति । कर्मण्यात्मनेपदम् । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः—बोभावेति ॥

'भवतेः' इति धातुनिर्देशादिहापि भवति—अनुबभूवे कम्बलो देवदत्तेन । 'लिटि' इत्येव—बुभूषति । बोभूयते ॥

**ससूवेति निगमे ॥ ७४ ॥**

'ससूव' इति निपात्यते । सूतेर्लिटि परस्मैपदं वुगागमः, अभ्यासस्य चात्वं निपात्यते । ससूव स्थविरं विपश्चिताम् । सुषुवे इति भाषायाम् ॥

**णिजां त्रयाणां गुणः श्लौ ॥ ७५ ॥**

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति । णिजिर्—नेनेक्ति । विजिर्—वेवेक्ति । विष्लृ—वेवेष्टि ।

त्रिग्रहणमुत्तरार्थम् । एषां हि वृत्करणं समाप्त्यर्थं पठ्यत एवेति ।

पदमञ्जरी

*ससूवेति निगमे* ॥ दाधर्त्यादिष्वेवैतत्पठितव्यम् ॥

*णिजां त्रयाणां गुणः श्लौ* ॥

निजिर्, विजिर्, विष्लृ व्याप्तौ जुहोत्यादिष्वमी त्रयः ।

*त्रयाणां ग्रहणमुत्तरार्थमिति* । 'भृञामित्' इतीत्त्वं त्रयाणामेव यथा स्यात् । अथेहार्थमपि कस्मान्न भवति ? तत्राह—*एषां हीति* । यदि तर्ह्युत्तरार्थं त्रिग्रहणं कर्त्तव्यम्, तदेवास्तु, वृत्करणं तु निजामन्ते शक्यमकर्तुम् ? सत्यम्; तदपि कृतमित्येव ।

गुणग्रहणमिक्परिभाषोपस्थानार्थम्, तेन हलादिशेषे कृते गुणो भवति; अन्यथा तदपवादो हल एव एकारः स्यात् । अथ 'अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते' इत्याश्रीयेत ? तदा विस्पष्टार्थं गुणग्रहणम् ॥

न्यासः

**ससूवेति निगमे** ॥ **सूतेरिति** । 'षूङ् प्राणिगर्भविमोचने'—इत्येतस्य । **सुषुव इति** । ङित्त्वादात्मनेपदम्, उवङ् ।

**इतिकरणमेवम्प्रकाराणामन्येषामुपसंग्रहार्थम्** । तेन जाग्रमः, अदर्शमेत्यादि सिद्धं भवति । **जाग्रम इति** । जाग्रर्त्तेरग् निपात्यते । **अदर्शमेति** । लङि दृशेः पश्यादेशाभावः । जागृम, अपश्यामिति भाषायाम् । दाधर्त्यादिषु ससूवग्रहणं न कृतम्; वैचित्र्यार्थम् ॥

**णिजां त्रयाणां गुणः श्लौ** ॥ बहुवचननिर्देशादाद्यर्थो गम्यत इत्यत आह—**एषामित्यादि** । 'णिजिर् शौचपोषणयोः', विजिर् पृथग्भावे', विष्लृ व्याप्तौ'—इत्येते णिजादयो जौहोत्यादिकाः ।

**त्रिग्रहणमुत्तरार्थमिति** । 'भृञामित्' इतीत्त्वम् । त्रयाणामेव यथा स्यादधिकानां मा भूदित्येवमर्थं त्रिग्रहणम् । एतदर्थमपि कस्मान्न भवति ? इत्यत आह—एषामित्यादि ।

श्लाविति किम् ? निनेज ॥

भृञामित् ॥ ७६ ॥

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति । भृञ्–बिभर्त्ति । माङ्–मिमीते । ओहाङ्–जिहीते ।

'त्रयाणाम्' इत्येव–जहाति । 'श्लौ' इत्येव–बभार ॥

अर्तिपिपर्त्योश्च ॥ ७७ ॥

अर्ति, पिपर्ति–इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ । इयर्ति धूमम् । पिपर्ति सोमम् ॥

बहुलं छन्दसि ॥ ७८ ॥

छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । पूर्णां

पदमञ्जरी

*भृञामित्* ॥ अमी अपि जुहोत्यादौ भृञ्, माङ्, ओहाङ्–भृञादयः । *मिमीत इति* । 'ई हल्यघोः' ॥

*अर्तिपिपर्त्योश्च* ॥ *इयर्तीति* । 'ऋ सृ गतौ', 'पॄ पालनपूरणयोः' 'अभ्यासस्यासवर्णे' इतीयङ् । अच्छन्दोऽर्थमिदम्; छन्दस्युत्तरसूत्रेणैव सिद्धत्वात् ॥

न्यासः

यद्यत्र त्रिग्रहणं क्रियते, निजादीनामन्ते वृत्करणं किमर्थम् ? एतद् गणकारः प्रष्टव्यः, न सूत्रकारः; 'अन्यो हि गणकारोऽन्यश्च सूत्रकारः' इत्युक्तं प्राक् । गणकारेणापि वैचित्र्यार्थं वृत्करणं कृतमिति वेदितव्यम् । विचित्रा हि गणस्य कृतिर्गणकारेण ।

अथ गुणग्रहणं किमर्थम्, एकार एव नोच्येत ? अशक्यमेवेदं वक्तुम्; एवं ह्युच्यमाने द्वेष्यमपि कश्चिद् विजानीयाद्–हलादिशेषापवादोऽयं निजादीनामेकार इति । गुणग्रहणे हि संज्ञाविधाने नियम इतीक एव भवति, हलस्तु हलादिशेषेण निवृत्तिर्भवति ।

भृञामित् ॥ 'डुभृञ् धारणपोषणयोः', 'माङ् माने', ओहाङ् गतौ'–इत्येते भृञादयो जौहोत्यादिका एव । मिमीते, जिहीत इति । 'ई हल्यघोः' इतीत्त्वम् ॥

अर्तिपिपर्त्योश्च ॥ इयर्ति, पिपर्तीति । 'ऋ सृ गतौ', 'पॄ पालनपूरणयोः', जुहोत्यादिकत्वाच्छपः श्लुः, गुणः, द्विर्वचनम्, 'उरत्' इत्यत्त्वम्, अनेनेत्त्वम्, रपरत्वञ्च । अर्त्तेः 'अभ्यासस्यावर्णे' इतीयङ् । अथार्तिग्रहणं किमर्थम्, यावता निजादिभ्योऽयं परः पठ्यते । ये च निजादिभ्यः परे त सर्व एव छान्दसाः, तथा हि तान् पठित्वा छन्दसीत्युक्तम् । छान्दसत्वाच्चार्तेः 'बहुलं छन्दसि' इत्येवं सिद्धम् ? एवं तह्येतज्ज्ञापयति—भाषायामप्यर्त्तेः प्रयोगो भवतीति ।

विवष्टि–वशेरेतद्रूपम् । तथा वचेः–जनिमा विवक्ति । सचेः–वत्सं न माना सिषक्ति । जिघर्ति सोमम् । न च भवति–ददातीत्येवं ब्रूयात् । जजनमिन्द्रं माता यद्वीरं दधनन्धनिष्टा ॥

सन्यतः ॥ ७९ ॥

सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । पिपासति ।

सनीति किम् ? पपाच । अत इति किम् ? लुलूषति । तपरकरणं किम् ? पापचिषते ॥

ओः पुयण्ज्यपरे ॥ ८० ॥

'सनि' इति वर्तते, 'इत्' इति च । उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः ।

पदमञ्जरी

*सन्यतः* ॥ *यियक्षतीति* । यजेर्व्रश्चादिना षत्वम्, 'षढोः कः सि' ।

तपरकरणं किम् ? पापच्यतेः सन्, पापचिषते इत्यत्र मा भूत् । किं पुनः कारणमत्र ह्रस्वो न भवति ? दीर्घविधानसामर्थ्यात् । यदि तु 'सनि योऽभ्यासः' इत्येवं विज्ञायेत, ततो लाघवे विशेषाभावात्तपरकरणम् ॥

*ओः पुयण्ज्यपरे* ॥ पुयण्जकाराणां समाहारद्वन्द्वे सप्तम्येकवचनम् । पुयण्जि 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति समासान्तस्त्वनित्यत्वान्न भवति, अः परो

न्यासः

बहुलं छन्दसि ॥ विवष्टीति । 'वश कान्तौ', 'बहुलं छन्दसि' इति शपः श्लुः, व्रश्चादिसूत्रेण षत्वम् । विवक्तीति । 'वच परिभाषणे' । सिषक्तीति । 'सच समवाये', 'सच सेचने' इति वा । जिगर्ति, जिघर्तीति । 'गृ घृ सेचने' । सर्वत्र पूर्ववच्छपः श्लुः ।

जजनम्, दधनमिति । 'जन जनने', 'धन धान्ये' । लुङ्, मिपोऽम्, जुहोत्यादित्वाच्छपः श्लुः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यड्निषेधः ॥

सन्यतः ॥ पिपक्षतीत्यादि । पचियज्यो रूपे । पिपासतीति । पातेः, पिबतेर्वा ।

लुलूषतीति । 'लूञ् छेदने' । इको झल्' इति कित्त्वाद् गुणाभावः । 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधः । तपरकरणं किमर्थम् ? पापच्यतेः सन् पापचिषत इत्यत्र मा भूत् । किं पुनः कारणमत्र ह्रस्वो न भवति ? दीर्घविधानसामर्थ्यात् । यदि 'सनि योऽभ्यासः'—इत्येवं विज्ञायेत, ततो मुखसुखार्थम् ॥

ओः पुयण्ज्यपरे ॥ पुयण्जीति । पुयण्जमेकवद्भावं कृत्वा सप्तम्या निर्देशः । अपर

पवर्गेऽपरे–पिपविषते, पिपावयिषति । विभावयिषति ।

यण्यपरे–यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति ।

ज्यपरे–'जु' इति सौत्रोऽयं धातुः, जिजावयिषति ।

एतदेव 'पुयण्ज्यपरे' इति वचनं ज्ञापकम्–अद्विर्वचननिमित्तेऽपि

**पदमञ्जरी**

यस्मात्पुयण्जस्तदपरम्, अवर्णपरमित्यर्थः । *पिपविषत इति* । 'पूङ् पवने', 'स्मिपूङ्रञ्ज्वशां सनि' इतीड्गुणावादेशौ, तयोः 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'पू' इति द्विरुच्यते । *पिपावयिषतीति* । तत एव ण्यन्तात्सन् । *विभावयिषतीति* । भवतेर्ण्यन्तात्सन् । *यियविषतीति* । 'यु मिश्रणे', 'सनीवन्तर्ध' इतीट् । *यियावयिषतीति* । तस्मादेव ण्यन्तात्सन् । *रिरावयिषति, लिलावयिषतीति* । रौतिलुनातिभ्यां ण्यन्ताभ्यामेव सन् । *जिजावयिषतीति* । 'जु' इति सौत्रो धातुः 'जुचङ्क्रम्य' इत्यादौ निर्दिष्टः ।

कथं पुनर्ण्यन्तेषु सन्युवर्णान्ताभ्यासस्य, यावता णौ वृद्ध्यावादेशयोः कृतयोराकारान्तस्य द्विर्वचनेन भवितव्यम्, न हि णौ कृतस्य केनचित्स्थानिवद्भावो विहितः, णेरद्विर्वचननिमित्तत्वात् ? इत्यत आह–*एतदेवेति* । न हि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जोऽवर्णपराः सम्भवन्ति । पिपचिषति, यियविषते इति

**न्यासः**

इति । अः परो यस्मात् पुयण्जस्तदपरमवर्णपरमित्यर्थः । पिपविषत इति । 'पूङ् पवने,' सन्, 'स्मिपूङ्रञ्जवशां सनि' इतीट्, गुणावदेशौ । स्थानिवद्भावात् 'पू' इत्यस्य द्विर्वचनम्, स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इत्यनेन । पिपावयिषतीति । पूङो ण्यन्तात् सन् । अत्रापि स्थानिवद्भावात् 'पू' इत्येतद् द्विरुच्यते । बिभावयिषतीति । 'भू सत्तायाम्' । ण्यन्तात् सन् ।

यियावयिषतीति । यौतेर्ण्यन्तात् सन् । 'सनीवन्त' इत्यादिनेट् । रिरावयिषति, लिलावयिषतीति । रौतिलुनातिभ्यां ण्यन्ताभ्यां सन् ।

जिजावयिषतीति । 'जु' इति सौत्रो धातुः; 'जुचंक्रम्य' इत्यादौ पाठात् । तस्मात् ण्यन्तात् सन् ।

कथं पुनः पिपावयिषतीत्यादावुकारान्तताऽभ्यासस्य, यावता णौ परतोऽन्तरङ्गत्वाद् वृद्ध्यावादेशयोः कृतयोर्वकारान्तस्याद्विर्वचनेन भवितव्यम्, स्थानिवद्भावादुकारान्तस्य द्विर्वचनं भविष्यतीति चेत् ? न; न हि णौ कृतस्य स्थानिवद्भावो भवति । णेरद्विर्वचननिमित्तत्वादित्यत आह—एतदेवेत्यादि । न हि णिचमन्तरेण पुयण्जोऽवर्णपराः सर्वे सम्भवन्ति । तत्र हि यदि णौ कृतस्य स्थानिवद्भावो न स्यात्, तदा येषां णिच-

णौ स्थानिवद्भवतीति । ओरिति किम् ? पापच्यते । सन्–पापचिषते । पुयणजीति किम् ? अवतुतावयिषति । जुहावयिषति । अपर इति किम् ? बुभूषति ॥

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥**

स्रवति, शृणोति, द्रवति, प्रवति, प्लवति, च्यवति–इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वा इकारादेशो भवति सनि परतः । सिस्रावयिषति, सुस्रावयिषति । शृणोति–शिश्रावयिषति, शुश्रावयिषति । द्रवति–दिद्रावयिषति, दुद्रावयिषति । प्रवति–पिप्रावयिषति, पुप्रावयिषति । प्लवति–पिप्लावयिषति, पुप्लावयिषति । च्यवति–चिच्यावयिषति, चुच्यावयिषति ।

**पदमञ्जरी**

सम्भवतीति चेन् ? किमेतावता ! वर्णग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवति । तस्मादेतदेव वचनमुक्तस्यार्थस्य सूचकमिति । यच्चात्र वक्तव्यं तद् 'द्विर्वचनेऽचि' इत्यत्रोक्तम्, तत एवावधार्यम् ।

*पापचिषत इति* । 'सनि योऽभ्यासः' इत्येतदनाश्रित्येदं प्रत्युदाहरणम् । तदाश्रये तु प्रत्युदाहरणान्तरं मृग्यं यदि सम्भवति । *अवतुतावयिषतीति* । 'तु' इति सौत्रो धातुः 'तुरुस्तुशम्यमः' इत्यत्र निर्दिष्टः । *जुहावयिषतीति* । जुहोतेर्ण्यन्तात्सन् ॥

*स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा* ॥ 'श्रु श्रवणे', अन्ये गत्यर्थाः । उदाहरणेषु ण्यन्तेभ्यः सन् ।

कथं पुनर्यणि परत उच्यमानमित्त्वं सकारादीनां वर्णेन व्यवधाने भवति ?

**न्यासः**

मन्तरेणावर्णपरता न सम्भवति, तेषामुवर्णान्तोऽभ्यासो न स्यात्, उच्यते चेदम् 'ओः पुयण्ज्यपरे' इति वचनम्, तस्मादेतज्ज्ञापकम्–अद्विर्वचननिमित्तेऽपि णौ स्थानिवद् भवतीति । तेन तुतावयिषति, बिभावयिषतीत्यादि सिद्धं भवति । केषाञ्च पुनर्णिचमन्तरेणावर्णपरता न सम्भवति ? यकारपकाराभ्यामन्येषां सर्वेषामेव । पापचिषत इति । 'अतो लोपः' इत्यकारलोपः, 'यस्य हलः' इति यकारस्य । तुतावयिषतीति । 'तु' इति सौत्रो धातुः; 'तुरुस्तुशम्यमः' इत्यादौ सूत्रे पाठात् । जुहावयिषतीति । 'हु दाने', ण्यन्तात् तस्मात् सन् । बुभूषतीति । पूर्ववद् इड्गुणयोरभावः ॥

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ 'सु स्रु गतौ', 'श्रु श्रवणे', 'दु द्रु गतौ', 'प्रुङ् प्लुङ् च्युङ गतौ' । सिस्रावयिषतीत्यादि । एभ्यो ण्यन्तेभ्यः सर्वत्र सन् ।

वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रेण त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम्।

'अपरे' इत्येव—सुस्रूषति। शुश्रूषते॥

गुणो यङ्लुकोः॥ ८२॥

यङि, यङ्लुकि च इगन्तस्याभ्यासस्य गुणो भवति। चेचीयते। लोलूयते। यङ्लुकि—जोहवीति। 'यङो वा' इतीड्विकल्पः। चोक्रुशोति॥

दीर्घोऽकितः॥ ८३॥

अकितोऽभ्यासस्य दीर्घो भवति यङि यङ्लुकि च। पापच्यते।

पदमञ्जरी

तत्राह—*वचनसामर्थ्यादिति*। *पूर्वसूत्रे इत्यादिना* अप्राप्तविभाषेयमिति दर्शयति॥

*गुणो यङ्लुकोः*॥ लुक्शब्देनात्र यङ्लुगेव गृह्यते; सन्निधानात्। किञ्च-अभ्यासस्यायं गुणो विधीयते, न च लुगन्तरेऽभ्यासः सम्भवति। *चोक्रुशीतीति*। क्रुशेर्यङ्लुगन्तात्तिप्, 'यङो वा' इतीट्, 'नाभ्यस्तस्याचि पिति' इति लघूपधगुण-प्रतिषेधः॥

*दीर्घोऽकितः*॥ *अपवादत्वादिति*। नाप्राप्ते दीर्घे नुक आरम्भादपवादत्वम्।

न्यासः

ननु च सकारादिना वर्णेनात्र यणो व्यवधानम्, अत्रावर्णपरे यणि परत इत्त्वमुच्यमानं व्यवधाने कथं भवति? इत्याह—वचनसामर्थ्यादिति। सर्वत्रैव हि सकारादिनैकवर्णेन व्यवधानम्, उच्यते चेदं वचनम्, तस्मादत्र वचनसामर्थ्यादेकेन वर्णेन व्यवधानमाश्रीयते; अन्यथा हि वचनमिदमनर्थकं स्यात्। पूर्वसूत्रेणेत्यादिनाऽप्राप्तविभाषेयमिति दर्शयति।

शुश्रूषतीति। पूर्ववदिड्गुणयोरभावः। श्तिपा निर्देशो धातुनिर्देशार्थः, न यङ्लुग्निवृत्त्यर्थः। अत्र गुणे कृत उकारान्तताभावादित्त्वं न भवतीति। सोस्रविषति॥

गुणो यङ्लुकोः॥ अभ्यासस्य गुणोऽयं विधीयते। तेन यद्यत्र लुक्शब्दोऽयं सामान्यः, तथापि यङ्लुक एव सम्प्रत्ययो भवति। न ह्यन्यत्र लुक्यभ्यासः सम्भवतीति मत्वाऽऽह—यङि यङ्लुकि चेत्यादि। चोक्रुशोति। 'क्रुश आह्वाने' यङ्, तस्य 'यङोऽचि च' इति लुक्, 'यङो वा' इतीट्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद् यङो लुकि कृते गुणो न प्राप्नोतीति लुग्ग्रहणम्। 'पुगन्तलघूपधस्य च' इति प्राप्तोऽपि गुणः 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषिध्यते॥

दीर्घोऽकितः॥ यंयम्यत इति। 'यम उपरमे', 'नुगतोऽनुनासिकान्तस्य' इति नुक्

पापचीति । यायज्यते । यायजीति ।

अकित इति किम् ? यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।

ननु चात्रापवादत्वान्नुकि कृतेऽभ्यासस्यानजन्तत्वादेव दीर्घत्वं न भविष्यति ? एवं तर्हि 'अकितः' इत्यनेनैतज्ज्ञाप्यते—'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन्बाधन्ते' इति ।

पदमञ्जरी

*अनजन्तत्वादेवेति* । दीर्घश्रुत्या 'अचश्च' इत्युपस्थानादभ्यासविशेषणादजन्तस्याभ्यासस्य दीर्घो विधीयत इति भावः । *अभ्यासविकारेष्वित्यादि* । अपवादग्रहणं बाधकमात्रोपलक्षणम्, उत्सर्गग्रहणमपि बाध्यमात्रोपलक्षणम् । तत्र ह्रस्वत्वस्यावकाशः—ययावित्यत्र, दीर्घत्वस्यावकाशः—पापच्यत इत्यादि; डोढौक्यत इत्यादावुभयप्रसङ्गे परत्वाद्दीर्घत्वस्य प्रसङ्गः, नापवादत्वात् । तथा सन्वद्भावस्यावकाशः—अचिक्षणदिति, दीर्घत्वस्यावकाशः-अदीदिपदिति; अचीकरदित्यादावुभयप्रसङ्गे परत्वाद्दीर्घत्वप्रसङ्गः । मीमांसते इत्यत्राप्यनैमित्तिकत्वेनान्तरङ्गत्वाद्दीर्घत्वप्रसङ्गः, इत्त्वं तु सनि परतोऽङ्गाधिकारेऽभ्यासस्याकारान्तस्य विधानाद्बहिरङ्गम् । अजीगणदित्यत्र त्वेकस्मिन् येननाप्राप्तिन्यायेन हलादिशेषस्येत्वमपवादत्वाद् बाधकं प्राप्नोति । इह तु अपचच्छतुः, अपचच्छुः, चच्छदतुः,

न्यासः

ननु चेत्यादिनाऽकित इत्येतत्प्रत्याचष्टे । यंयम्यत इत्यत्र मा भूदित्येवमर्थम् 'अकितः' इत्युच्यते । अत्र ह्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यतीति नार्थोऽकित इत्यनेन । एवं तर्हीत्यादिना 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इत्येतां परिभाषां ज्ञापयितुम् 'अकितः' इत्येतदुच्यत इति दर्शयति । डोढौक्यत इति । 'ढौकृ गतौ' इत्यस्य यङि कृते हलादिशेषे च 'ह्रस्वः' इति ह्रस्वत्वम्, पूर्वसूत्रेण गुणः । तत्रासत्यस्मिन् ज्ञापके पिपासतीत्येवमादौ सावकाशं ह्रस्वत्वम् 'दीर्घोऽकितः' इत्यनेन सन्ध्यक्षरे दीर्घत्वेन बाध्येत । दीर्घस्य दीर्घविधाने प्रयोजनाभावाद् दीर्घो न भविष्यतीति चेत् ? नैतद्; अस्ति हि दीर्घस्य दीर्घविधाने प्रयोजनम्, किं तत् ? ह्रस्वो मा भूदिति । एवं चासत्यस्मिन् ज्ञापके अचीकरदित्यत्राप्यचिक्षणदित्यादौ सावकाशमित्त्वम् 'दीर्घो लघोः' इति दीर्घत्वेन बाध्येत । मीमांसत इत्यादावसत्यस्मिन् ज्ञापके पिपक्षतीत्यादौ सावकाशम् 'सन्यतः' इतीत्त्वं मानवधादिसूत्रेण विहितेन दीर्घत्वेन बाध्येत । अजीगणदित्यत्राप्यसत्यस्मिन् ज्ञापके पपाठेत्यादौ सावकाशो हलादिशेषः 'ई च गणः' इतीत्त्वेन बाध्येत । अस्मिंस्तु सति सर्वमेतन्न बाध्यते । ननु चासति प्रयोजने ज्ञापकं भवति, अस्ति चास्य प्रयोजनम्, किं तत् ? धातुकित्त्वमपेक्ष्य जहातेर्मा भूत्—जाहाति, जाहेतीति ? नैतदस्ति; यदि ह्येतत् प्रयोजनं स्यात्, तदा 'अहाकः' इति प्रतिषेधं कुर्यात् । किञ्च 'अकितः' इत्यभ्यासस्य विशेषणं भवितुमर्हति, यद्यभ्यासावस्थायां

किमेतस्य ज्ञापने प्रयोजनम् ? डोढौक्यते इत्यत्र 'दीर्घोऽकितः' इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते; अचीकरदित्यत्र 'दीर्घो लघोः' इत्यनेन सन्वदित्वं न बाध्यते; मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते—मीमांसते; 'ई च गणः' इतीत्वेन हलादिशेषो न बाध्यते—अजीगणत् ॥

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ८४ ॥

वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद, स्कन्द—इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च । वञ्चु—वनीवच्यते । वनीवञ्चीति । स्रंसु—सनीस्रस्यते । सनीस्रंसीति । ध्वंसु—दनीध्वस्यते ।

पदमञ्जरी

चच्छदुः, चिच्छादयिषति, चिच्छर्दयिषति, चेच्छिद्यते—इति परत्वात् ह्रस्वत्वात्त्वेत्त्वगुणेषु कृतेषु पश्चात्तुक् क्रियते; तेनैतन्न नोदनीयम्—तुकि कृते एते विधयो न प्राप्नुवन्तीति । 'ओहाक् त्यागे' इत्यस्य धातोर्निषेधो न भवति, धातुर्ह्ययं कित्, न त्वभ्यासः । ककारस्तु 'हश्च व्रीहिकालयोः' इत्यत्र हाङ्हाकोः सामान्येन ग्रहणार्थः ॥

*नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्* ॥ वञ्चुकसिपतिपद्यो गत्यर्थाः । 'स्कन्दिः शोषणार्थः', इतरे अवस्रंसनार्थाः । *वनीवच्यते इत्यादौ* 'अनिदिताम्' इत्युपधालोपः । *वनीवञ्चीतीत्यादौ* न भवति । यङो लुमता लुप्तत्वादीकारोच्चारणसामर्थ्यान्नीकि कृते गुणह्रस्वौ न भवतः ॥

न्यासः

कित्त्वमुपजायते । न च जहातेः कित्त्वमभ्यासमपेक्षते, पूर्वमेव हि तदभ्यासाद् भवति । तस्माज्जहातेः—जाहाति, जाहेतीति रूपेण भवितव्यम् । ततश्च 'अकितः' इति वचनं ज्ञापकमेव । कित्करणं तु जहातेः 'हश्च व्रीहिकालयोः' इत्यत्र सामान्यग्रहणाविघातार्थम् । अथ दीर्घग्रहणं किमर्थम्, आदित्येव नोच्येत ? नैवं शक्यम्; 'अकितः' इत्यस्य ज्ञापकता नोपपद्यते । सति हि दीर्घग्रहणे नुकि कृतेऽनजन्तत्वादेव हि दीर्घस्य प्राप्तिर्नास्तीति 'अकितः' इति प्रतिषेधस्य ज्ञापकत्वमुपपद्यते । आकारस्तु विधीयमानोऽजन्तस्याभ्यासस्य स्यादिति 'अकितः' इत्यस्य ज्ञापकत्वं न स्यात् । तस्माद् दीर्घग्रहणं कर्त्तव्यम् ॥

नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ 'वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु म्लुन्चु गत्यर्थाः' । 'स्रन्सु ध्वन्सु अवस्रंसने', 'कस गतौ', 'शल हुल पत्लृ गतौ', 'स्कन्दिर् गतिशोषणयोः' । वनीवच्यत इति । 'अनिदिताम्' इत्यादिनानुनासिकलोपः । वनीवञ्चीतीति । अत्र न भवत्यनुनासिकलोपः । यङो लुप्तत्वात् 'न लुमताङ्गस्य' इति

दनीध्वंसीति । भ्रंसु—बनीभ्रस्यते । बनीभ्रंसीति । कस—चनीकस्यते । चनीकसीति । पत—पनीपत्यते । पनीपतीति । पद—पनीपद्यते । पनीपदीति । स्कन्द—चनीस्कद्यते । चनीस्कन्दीति ॥

नुगतोऽनुनासिकान्तस्य ॥ ८५ ॥

अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः । तन्तन्यते । तन्तनीति । जङ्गम्यते । जङ्गमीति । यंयम्यते । यंयमीति । रंरम्यते । ररमीति ।

नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम् । स्थानिना ह्यादेशो लक्ष्यते । तेन यंयम्यते—इत्येवमादावझलपरत्वेऽप्यनुस्वारो भवति ।

❀ पदान्तवच्चेति वक्तव्यम् ❀ । 'वा पदान्तस्य' इति परसवर्णविकल्पो यथा स्यादिति ।

**पदमञ्जरी**

*नुगतोऽनुनासिकान्तस्य* ॥ *नुगित्येतदित्यादि* । केन सम्बन्धेनोपलक्षणम् ? अत आह—*स्थानिना हीति* । उपलक्षणत्वे किं सिद्धम् ? अत आह—*तेनेति* । *अझलपरत्वेऽपीति* । *तन्तन्यत* इत्यादौ झलपरत्वे तु 'नश्चापदान्तस्य झलि' इत्यनुस्वारः सिद्ध एव ।

'अनुस्वारस्य ययि परसवर्णः' इति नित्यं परसवर्णः प्राप्नोति, इष्यते च पक्षे अनुस्वारस्य श्रवणम् ? अत आह—*पदान्तवच्चेति* । तत्कथं लभ्यते ? इहान्तग्रहणं

**न्यासः**

प्रत्ययलक्षणनिषेधात् । अथ नीकि कृते ह्रस्वत्वं कस्मान्न भवति ? दीर्घोच्चारणसामर्थ्यात् ॥

**नुगतोऽनुनासिकान्तस्य** ॥ 'दीर्घोऽकितः' इत्यनेन दीर्घत्वे प्राप्ते वचनमिदमारभ्यते । तंतन्यते इत्यादीनि तमिगमियमिरमीणां रूपाणि ।

यदि नुक् क्रियते, यंयम्यते इत्यादौ 'नश्चापदान्तस्य झलि' इति झल्युच्यमानोऽनुऽनुस्वारो न सिध्यति, अझल्परत्वात् ? इत्यत आह—नुगित्येतदित्यादि । कथं पुनर्नुगित्येतदनुस्वारोपलक्षणार्थं शक्यते द्रष्टुम् ? इत्याह—स्थानिना हीत्यादि । नुका हि स्थानिनाऽत्रादेशोऽनुस्वार उपलक्ष्यते । तस्मादनुस्वार एवागमोऽत्र विधीयते, न तु नुक् । यंयम्यत इत्यादौ यद्यप्यझल्परतास्ति, तथाप्यनुस्वारः सिध्यति ।

एवम् 'अनुस्वारस्य ययि परसवर्णः' प्राप्नोति, इष्यते च पक्षेऽनुस्वारस्य श्रवणम्, तन्न सिध्यति, अपदान्तत्वात् ? इत्यत आह—पदान्तवच्चेत्यादि । पदान्तवदनुस्वारो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—तदन्तविधिनैवानुनासिकान्त-

अत इति किम् ? तेतिम्यते ।

तपरकरणं तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्—बाभाम्यते । अनुनासिकान्तस्येति किम् ? पापच्यते ॥

जपजभदहदशभञ्जपशां च ॥ ८६ ॥

जप, जभ, दह, दश, भञ्ज, पश—इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः । जञ्जप्यते । जञ्जपीति । जभ— जञ्जभ्यते । जञ्जभीति । दह—दन्दह्यते । दन्दहीति । दश— दन्दश्यते । दन्दशीति ।

पदमञ्जरी

न कर्त्तव्यं तदन्तविधिना सिद्धम् ? तत्क्रियते—पदान्तस्यानुस्वारस्य यो धर्मः सोऽस्य यथा स्यादिति । एवं च—अनुनासिकान्तस्येति पृथक् पदे, अनुनासिकेति लुप्तषष्ठीकम् ।

*तेतिम्यत इति* । 'तिम आर्द्रीभावे' ।

*तपरकरणं किमिति* । सर्वत्र ह्रस्वस्यैव भावान्नास्य किञ्चिद्व्यावर्त्यमिति प्रश्नः । *भूतपूर्वस्यापीति* । अन्यथा तपरकरणमनर्थकं स्यादिति भावः । *बाभम्यत इति* । 'भाम क्रोधे ॥

*जपजभदहदशभञ्जपशां* च ॥ 'जप जल्प व्यक्तायां वाचि', 'जभ जृभी गात्रविनामे', 'दह भस्मीकरणे', 'दन्श दशने', 'भञ्जो आमर्दने', 'पश' इति सौत्रो धातुः । *जञ्जप्यत* इत्यादिचतुर्षु 'लुपसद' इत्यादिना यङ्, इतरत्र सामान्यलक्षणेन ॥

न्यासः

स्यानुस्वारो भवतीति नार्थोऽन्तग्रहणेन, तत् क्रियते—पदान्तस्यानुस्वारस्य यो धर्मः स नुकोऽपि स्यादित्येवमर्थम्, तेनानुस्वारस्य पक्षे श्रवणं भविष्यतीति ।

तेतिम्यत इति । 'तिम ष्टिम आर्द्रीभावे' ।

अथ तपरकरणं किमर्थम्, यावता नास्ति किञ्चदन्यस्य व्यावर्त्यमिति सर्वत्र ह्रस्वाभावात् ? इत्यत आह—तपरकरणमित्यादि । वर्त्तमानस्य दीर्घस्याभावाद् भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थं तपरकरकरणं भविष्यतीति । बामाम्यत इति । 'भाम क्रोधे' ॥

जपजभदहदशभञ्जपशाञ्च ॥ अनुनासिकार्थोऽयमारम्भः । 'जप जल्प व्यक्तायां वाचि', 'जभि जृभी गात्रविनामे', 'दह भस्मीकरणे', 'दन्श दशने', 'भञ्जो आमर्दने', 'पशिः' सौत्रो धातुः । जञ्जप्यते इत्यादिषु दंदश्यत इति पर्यन्तेषु 'लुपसद' इत्यादिना यङ् । इतरत्र सामान्यलक्षणेन ॥

'दश'—इति दन्शिरयं नकारलोपार्थमेव निर्दिष्टः। तेन यङ्-लुक्यपि नकारलोपो भवति। भन्ज—बम्भज्यते। बम्भञ्जीति।

'पश' इति सौत्रो धातुः—पम्पश्यते। पम्पशीति॥

**चरफलोश्च ॥ ८७ ॥**

चर, फल—इत्येतयोरभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चूरीति। पम्फुल्यते। पम्फुलीति॥

**उत्परस्यातः ॥ ८८ ॥**

चरफलोरभ्यासात्परस्यात उकारादेशो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चूरीति। पम्फुल्यते। पम्फुलीति।

परस्येति किम्? अभ्यासस्य मा भूत्। अत इति किम्? अलोऽन्त्यस्य मा भूत्।

**पदमञ्जरी**

चरफलोश्च ॥ चरतिर्भक्षणार्थः। 'ञिफला विशरणे', 'फल निष्पत्तौ'—द्वयोरपि ग्रहणमिष्यते। *चञ्चूर्यत इति*। 'लुपसद' इत्यादिना यङ्। उत्तरसूत्रेणाकारस्योत्त्वे 'हलि च' इति दीर्घत्वम्। योगविभाग उत्तरार्थः॥

*उत्परस्यातः* ॥ *अभ्यासस्य मा भूदिति*। अन्यथा प्रकरणात्तस्यैव प्रसङ्गः।

*अन्त्यस्य मा भूदिति*। 'आदेः परस्य' इत्यस्य त्वप्रसङ्गः; पञ्चमीनिर्देशाभावात्।

**न्यासः**

चरफलोश्च ॥ 'चर गतौ'। ञिफला विशरणे', 'फल निष्पत्तौ'—द्वयोरपि ग्रहणम्। निष्पत्त्यर्थस्याकार उच्चारणार्थः, नानुबन्धः; प्रयोजनाभावात्, ततश्च निरनुबन्धकपरिभाषया निरनुबन्धकस्य निष्पत्त्यर्थस्यैवास्य ग्रहणं प्राप्नोति, न विशरणार्थस्य? नैष दोषः; चकारोऽत्र क्रियते, स च विशरणार्थस्य समुच्चयार्थो भविष्यति। चञ्चूर्यत इति। 'लुपसद' इत्यादिना यङ्। उत्तरसूत्रेणाकारस्योकारे कृते 'हलि च' इति दीर्घः। योगविभाग उत्तरार्थः॥

उत्परस्यातः ॥ अभ्यासस्य मा भूदिति। असति परग्रहणेऽभ्यासाधिकारादभ्यासस्यैव स्यादित्यभिप्रायः। अलोऽन्त्यस्य मा भूदिति। यदि 'अतः' इति नोच्येत, ततोऽलोऽन्त्यपरिभाषयाऽभ्यासात्परस्य धातुरूपस्य योऽन्त्योऽल् तस्य स्यादिति मन्यते।

अथ तपरकरणं किमर्थम्, यावता मात्रिकस्य स्थान आन्तरतम्याद् विधीयमानो मात्रिक एव भविष्यति? इत्यत आह—तपरकरणमित्यादि। असति तपरकरण उकारे कृते

उदिति तपरकरणम्—चञ्चूर्ति, पम्फुलीति इत्यत्र लघूपधगुण-निवृत्त्यर्थम् । दीर्घस्यासिद्धत्वादिह लघुत्वं न निवर्तते ॥

### ति च ॥ ८९ ॥

तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति । चरणं चूर्तिः । ब्राह्मणश्चूर्त्तिः । प्रफुल्तिः । प्रफुल्ताः सुमनसः ।

'यङ्यङ्लुकोः', 'अभ्यासस्य'–इति चानुवर्त्तमानमपि वचन-सामर्थ्यादिह नाभिसम्बध्यन्ते ॥

### रीगृदुपधस्य च ॥ ९० ॥

ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङ्यङ्लुकोः

**पदमञ्जरी**

*तपरकरणं किमिति* । यद्यपि भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति, तथा-प्यान्तर्यतो मात्रिकस्य मात्रिक एव सिद्ध इति प्रश्नः । *लघूपधगुणनिवृत्त्यर्थमिति* । अनेन लक्षणेन दीर्घस्य प्राप्त्यभावाल्लक्षणान्तरप्राप्तेऽपि विकारस्तपरकरण-सामर्थ्याद्वार्यत इति भावः । यथैव तर्हि गुणो निवर्त्तते, तथा 'हलि च' इति दीर्घत्वमपि निवर्त्तेत ? अत आह—*दीर्घत्वे हीति* ॥

*ति च* ॥ *वचनसामर्थ्यादिति* । यङ्लुकि पूर्वेणैव सिद्धत्वात् ॥

*रीगृधुपधस्य च* ॥ *ऋत्वत इति* । यङि परतो य ऋकारवान् तस्यैव ग्रहणम्,

**न्यासः**

चञ्चूर्ति, पम्फुल्तीत्यत्र 'पुगन्तलघूपधस्य' इति गुणः स्यात्, स मा भूदित्येवमर्थं तपरकरणं क्रियते । ननु चञ्चूर्तीत्यत्र दीर्घत्वमेव गुणस्य बाधको भविष्यति, तत् किमेतन्निवृत्त्यर्थेन तपरकरणेन ? इत्यत आह–दीर्घत्वमित्यादि । असिद्धत्वं तु 'पूर्वत्रासिद्धम्' इत्यनेन । यदि तर्हि लक्षणान्तरेण प्राप्तो गुणस्तपरकरणेन निवर्त्तते, गुणवद् दीर्घत्वमपि न स्यात् ? नैष दोषः; तपरकरणे हि दीर्घत्वपि सिद्धमिति । तेन दीर्घस्य निवृत्तिर्न शक्यते वक्तुम् । तथा च–'अत उत् सार्वधातुके' इति तपरकरणेन दीर्घत्वमशक्यं निवर्त्तयितुमिति मन्य-मानेन 'न भकुर्छुराम्' इति करोतेर्दीर्घत्वप्रतिषेध आरभ्यते । अत इति तपरकरणमिह मा भूत्–फलन्तं प्रयुङ्क्ते फालयतेः क्विप्, तदन्ताद् 'आचारे पुनः सर्वप्रातिपदिकेभ्यः' इति क्विप्, तदन्ताद् यङ्–पम्फाल्यते, पम्फालीति । कथञ्च प्राप्नोति ? एकदेशविकृत-स्यानन्यत्वात् ॥

ति च ॥ अयङ्लुगर्थोऽयमारम्भः । चूर्त्तिरिति । 'स्त्रियां क्तिन्' पूर्ववद्दीर्घः । प्रफुल्ता इति । निष्ठा, तदन्ताट्टाप्, जस् । वचनसामर्थ्यादिह नाभिसम्बध्यत इति । यदीह यङ्लुग्ग्रहणमभ्यासग्रहणञ्चाभिसम्बध्येत, ततो वचनस्य वैयर्थ्यं स्यात् । पूर्वेणैव यङ्यङ्लुकोरभ्यासस्य सिद्धत्वादित्यभिप्रायः ॥

परतः । वरीवृत्यते । वरीवृध्यते । वरीवृतीति । वरीवृधीति । नरीनृत्यते । नरीनृतीति ।

❀ रीगृत्वत इति वक्तव्यम् ❀ । इहापि यथा स्यात्—वरीवृश्च्यते । परीपृच्छ्यते । वरीवृश्चीति । परीपृच्छीति ॥

## रुग्रिकौ च लुकि ॥ ९१ ॥

यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतश्चकाराद्रीक्च । नर्नर्ति, नरिनर्ति, नरीनर्ति । वर्वर्ति, वरिवर्ति, वरीवर्ति । उकार उच्चारणार्थः ।

❀ मर्मृज्यते मर्मृज्यमानास इत्युपसंख्यानम् ❀ । मर्मृज्यते । मर्मृज्यमानासः ॥

## ऋतश्च ॥ ९२ ॥

ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक्च यङ्लुकि । चर्कर्ति, चरिकर्ति, चरीकर्ति । जर्हर्ति, जरिहर्ति, जरीहर्ति ।

तपरकरणं किम् ? किरतेः—चाकर्ति ।

### पदमञ्जरी

न तूपदेशे ऋत्वतः । तेन परीपृच्छ्यत इत्यादौ सम्प्रसारणे कृतेऽपि भवति ॥

*रुग्रिकौ च लुकि* ॥ *मर्मृज्यत इति* । लुकि विधीयमानो रुग्यङि न प्राप्नोतीति वचनम् ॥

### न्यासः

रीगृदुपधस्य च ॥ वरीवृत्यत इत्यादीनि वृतिवृधिनृतीनां रूपाणि । रीगृत्वत इति वक्तव्यमिति । ऋदुपधादन्यस्यापि ऋत्वतो रीगादयो यथा स्युरित्येवमर्थो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स च ऋदुपधादन्यस्यापि ऋत्वतः समुच्चयार्थः, तेन वृश्चतिप्रभृतीनामपि ऋत्वतां रीगादयो भवन्तीति ।

'रीगृत्वतः' इति सूत्रं न कृतम्; वैचित्र्यार्थम् ।

'ऋदुपधस्य' इति तपरकरणसन्देहार्थम् । उकारे परतो यणादेशे कृते सन्देहः स्यात्—किमृकारोपधस्य ? अथ वा रेफोपधस्येति ? ॥

रुग्रिकौ च लुकि ॥ ऋतश्च ॥ लुकीत्येव । चकारेण रीगादयोऽनुकृष्यन्ते । चर्करीति । 'डुकृञ् करणे' । जर्हरीति । 'हृञ् हरणे' ।

किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥

तत्रेयं प्राप्तिः—तपरकरणसामर्थ्यादङ्गविशेषणम् 'ऋतः' इत्येतत्, तथा चाप्राप्तिः किरते रुगादीनामिति ॥

पदमञ्जरी

ऋतश्च ॥ *किरतिमिति* । ऋकारान्तोपलक्षणमेतत् । 'चर्करीतम्' इति यङ्लुकः पूर्वाचार्यसंज्ञा । *पचतीति* । लट उपलक्षणम्, तेन चाकर्तीत्यादीनि रूपाणि, किरतेर्यो नयेदित्यर्थः । यद्वा—अत्र यङ्लुकि किरतिं पचतीति यो नयेत्=पचतिना तुल्यरूपाणि यो नयेत्, पचतिवद् रुगादिकमकृत्वा नयेदित्यर्थः । *प्राप्तिज्ञमिति* । रुगादीनां विषयविभागेन या प्राप्तिस्तां जानातीति प्राप्तिज्ञः । *प्रारब्ध इति* । संग्रहणं संग्रहः, साधुशब्दसंग्रहस्तेन प्रारब्ध इति योग्यतातिशयोद्भावनेनायं स्तूयते ।

तत्र प्राप्तिज्ञमित्यत्र प्राप्तिं व्याचष्टे—*तत्रेयं प्राप्तिरिति* । *तपरकरणसामर्थ्यादिति* । अभ्यासविशेषणे तु भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणमिति व्याख्येयम् । न हि मुख्यनिवर्त्त्यसम्भवे गौणकल्पना न्याय्येति अङ्गविशेषणमृत इत्याश्रितमित्यर्थः ॥

न्यासः

किरतेश्चाकर्त्तीति । 'कॄ विक्षेपे' इत्यस्य ।

किरतिमित्यादि । किरतिग्रहणमुपलक्षणार्थम् । तेन 'गॄ निगरणे' इत्येवमादेरपि ऋकारान्तस्य ग्रहणं वेदितव्यम् । चर्करीतान्तमिति । यङ्लुगन्तमित्यर्थः । यङ्लुक एव पूर्वाचार्यप्रणीतैषा संज्ञा 'चर्करीतम्' इति । पचतीति । लट्प्रथमपुरुषस्यैकवचनम् । एतदप्युपलक्षणार्थमेव । वचनान्तराणामपि ह्यत्रग्रहणम् । तेन 'कॄ' इत्येवमादिकमृकारान्तं यो लट्प्रथमपुरुषैकवचनादौ नयेत्=चाकर्त्तीत्येवमादीनि रूपाणि प्रापयेत्, सम्पादयेदित्यर्थः । प्राप्तिज्ञं तमहं मन्य इति । प्राप्तिं जानातीति प्राप्तिज्ञः । इह तु रुगादीनां प्रकृतत्वात् तत्प्राप्तिं यो जानाति स प्राप्तिज्ञो वेदितव्यः । मन्ये अवगच्छामि । प्रारब्धस्तेन संग्रह इति । अनेन प्राप्तिज्ञतायां हेतुमाह । सम्यग् गृह्यते ज्ञायते लक्षणमनेनेति संग्रहः=व्याकरणशास्त्रम् । प्रकर्षेणारब्धः प्रारब्धः; बहुभ्यो बहुशः श्रवणात् ।

का पुनरसौ प्राप्तिर्यत्परिज्ञानाय प्राप्तिज्ञमवगच्छामीत्याह—तत्रेयमित्यादि । द्वयमिह प्रकृतम्—अङ्गम्, अभ्यासश्चेति । ऋत इति विशेषणमुपात्तम्; तत्र यद्यप्युभयं प्रकृतं तथाप्यृत इत्येतदङ्गस्यैव विशेषणम्, नाभ्यासस्य । कुतः ? तपरकरणसामर्थ्यात् । सर्वत्रैव ह्यभ्यासस्य 'ह्रस्वः' इति ह्रस्वत्वेन भवितव्यम्; अतो दीर्घस्याभ्यासस्याभावात् । यदि 'ऋतः' इत्येतदभ्यासस्य विशेषणं स्यात्, तदा तपरकरणमनर्थकं स्यात् । तस्मात् तपरकरणसामर्थ्यादङ्गस्यैव विशेषणमृत इत्येतत्, नाभ्यासस्य । एवञ्च सति किरतेर-

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९३ ॥

लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। 'सन्यतः' इत्युक्तम्, चङ्परेऽपि तथा—अचोकरत्। अपीपचत्।

'ओः पुयण्ज्यपरे' इत्युक्तम्, चङ्परेऽपि तथा—अपीपवत्। अलीलवत्। अजीजवत्।

'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' इत्युक्तम्, चङ्परेऽपि तथा—असिस्रवत्, असुस्रुवत्। अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्।

### पदमञ्जरी

*सन्वल्लघुनि चङ्परेऽनग्लोपे* ॥ 'लघुनि चङ्परे' इति व्यधिकरणे सप्तम्यौ, न समानाधिकरणे; चङ्परस्य लघुनोऽसम्भवात्। *चङ्परे णौ परत इति*। कथं पुनर्णाविति लभ्यते ? चङ्परस्यान्यस्यासम्भवात्। ननु चाचकमतेत्यत्र मकारः सम्भवति, अदुद्रुवद्, असुस्रवदित्यत्र वकारः ? एवं तर्हि 'चङ्परे' इत्यङ्गस्य विशेषणम्—चङ्परे यदङ्गं तस्य योऽभ्यासस्तस्य सन्वत्कार्यं भवति। *लघुनि धात्वक्षर इति*। चङ्परे णौ यदङ्गं तस्य सम्बन्धि यल्लघ्वित्यर्थः। *सामर्थ्याण्ण्यन्तस्य*

### न्यासः

प्राप्तिः; ऋगादीनां तपरकरणेन व्यावर्त्तितत्वात्। आदिशब्देन रिगादीनां परिग्रहः। तथा चाप्राप्तिः क्रिरते ऋगादीनामिति ब्रुवतैतदुक्तं भवति—करोतिप्रभृतीनामेव ह्रस्वान्तानां पारिशेष्यात् प्राप्तिरिति ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे** ॥ 'सन्यतः' इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्यं भवति तल्लघुनि चङ्पर इत्यतिदिश्यते। 'लघुनि', 'चङ्परे' इति व्यधिकरणे सप्तम्यौ—चङ्परे णौ परतो यत् पूर्वं लघु तस्मिन् परतो योऽभ्यासस्तस्य सन्वद् भवतीति। 'चङ्परे' इति बहुव्रीहिः—चङ्परो यस्मादिति तच्चङ्परम्, न तु चङ् चासौ परश्चेति तत्पुरुषः। तेन सामर्थ्याण्ण्यन्तस्यैवायमतिदेशो विज्ञायते; अन्यथा हि यदि प्रकृत्यन्तस्यायमतिदेशः स्यात्, तदा 'सन्वच्चङि' इत्येवं ब्रूयात्। अनग्लोप इति। 'चङ्परे' इत्यस्यैतद् विशेषणम्। अगिति प्रत्याहारग्रहणम्। अको लोपोऽग्लोपः, स यस्य नास्ति तदनग्लोपम्। अपीपचदिति पचेर्णिच्, लुङ्, च्लेश्चङ्, उपधाह्रस्वत्वम्, द्विर्वचनमभ्यासकार्यम्, हलादिशेषे च कृतेऽनेन सन्वद्भावः, 'सन्यतः' इतीत्वम्, उत्तरसूत्रेण दीर्घत्वम्।

लघुनीति किम् ? अततक्षत् । अररक्षत् । जागरयतेः—अजजागरत् ।

अत्र केचिद् गशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यमभ्यासेन नास्तीति व्यवधानेऽपि वचनप्रामाण्याद्भवितव्यम् ? तदसत्; 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन व्यवधानमाश्रीयते, न पुनरनेकेन ।

पदमञ्जरी

*ग्रहणमिति* । णेः समीपभूतस्याङ्गस्य ग्रहणमित्यर्थः । ण्यन्तस्यावयवभूतं यदङ्गं तस्य ग्रहणमिति वा । *अनग्लोप इति* । नास्मिन्नग्लोपो विद्यत इति अनग्लोपः । एतच्च 'चङ्परे' इत्यनेन समानाधिकरणम् । तेनायमर्थः–चङ्परे णावको लोपेऽसतीति । अततक्षदित्यत्र संयोगपरत्वाद् गुरुसंज्ञया लघुसंज्ञाया बाधः, अजजागरदित्यत्र आकारः परः ।

*अत्र केचिदित्यादि* । ननु च गकारो जाशब्देन व्यवहितः ? अत आह–*सर्वत्रैवेति* । अचीकरदित्यादावपि ककारादिना व्यवधानाल्लघोरानन्तर्यं नास्ति, ततश्च वचनप्रामाण्याद्व्यवधान एव सन्वद्भावेन भवितव्यमिति तेषामभिप्राय इत्यर्थः । दूषयति—*तदसदिति* ॥

यदि तर्हि वर्णसङ्घातेन व्यवधानं नाश्रीयते व्यञ्जनसङ्घातेनापि व्यवधाने न

न्यासः

अततक्षत्, अररक्षदिति । अत्र रेफतकारयोः संयोगपरत्वाद् गुरुसंज्ञायां सत्यां न भवति सन्वद्भावः । अजजागरदिति । अत्र जकाराकारस्य दीर्घत्वाद् गुरुत्वम् ।

अत्र केचिदित्यादि । तेषामजीजागरदिति भवितव्यम् । किं पुनः कारणं त एवमिच्छन्ति, यावता लघुनि चङ्पर इत्युच्यते, व्यवहितश्चात्र लघुनि चङ्परे ? इत्यत आह–सर्वत्रैवेत्यादि । अचीकरदित्यादावपि ककारादिना वर्णेन व्यवधानाल्लघोरानन्तर्यमभ्यासे नास्ति; उच्यते चेदं वचनम्, अतो वचनप्रामाण्याद् व्यवधान एव सन्वद्भावेन भवितव्यम् । ततश्च यथाचीकरदित्यादौ व्यवधानेऽपि भवति, तथेहापि व्यवधाने सन्वत्कार्येण भवितव्यम् । अथेह चेद् व्यवधानान्न भवति, अत्रापि न स्यादिति भावः । तदसदिति । अजजागरदित्यत्र गशब्दं लघुमाश्रित्य यत् सन्वद्भावमिच्छन्ति, सर्वत्रैवेत्यादिना च यत् कारणमुक्तम्, तदुभयमत्राशोभनम्; अयुक्तत्वात् । कथम् ? इत्याह–येनेत्यादि । एकेन वर्णेन व्यवधानमस्ति सर्वत्र । वर्णसङ्घातेन व्यवधानमस्ति नास्ति च । तत्र 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति यन्नियतभाव्येकेन वर्णेन व्यवधानमशक्यं परिहर्त्तुम्, तदेवाश्रीयते, न तु वर्णसङ्घातेन । अजजागरदित्यत्र वर्णसङ्घातेन व्यवधानम् ।

यद्येवम्, कथमचिक्षणदिति ? आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवञ्जातीयकानामित्त्वमिति । यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं विदधाति ।

चङ्पर इति किम् ? अहं पपच । परग्रहणं किम् ? चङ्येव केवले मा भूत्—अचकमत । अनग्लोप इति किम् ? अचकथत् । दृषदमाख्यातवान् अददृषत् ।

पदमञ्जरी

सिध्यतीति मन्यमानः पृच्छति—*कथमिति* । *एवञ्जातीयकानामिति* । संयोगव्यवहितानामित्यर्थः ।

*अचकमतेति* । 'कमेरुपसंख्यानम्' इति च्लेश्चङादेशः । *अचकथदिति* । 'कथ वाक्यप्रबन्धे' चुरादावदन्तः, 'अतो लोपः' । अत्राल्लोपस्य स्थानिवद्भावे सति व्यवधानान्न भविष्यति, अतः प्रत्युदाहरणान्तरोपन्यासः । *अददृषदिति* । 'तदाचष्टे' इति णिच इष्ठवद्भावेन टिलोपः । अत्राज्झलोर्लोपः, नाच एव केवलस्येति नास्ति स्थानिवद्भावः । एतदर्थं च 'अनग्लोपे' इत्येतत्क्रियमाणमचकथदित्यत्र सन्वद्भावं निवर्त्तयतीति तस्योपन्यासः ।

यदि चङ्परे णौ यदङ्गं तस्य यल्लघु तत्र परतोऽभ्यासस्य सन्वद्भावो विधीयते, वादितवन्तं प्रयोजितवानवीवददित्यत्रापि तर्हि न प्राप्नोति, किं कारणम् ?

न्यासः

यदि तर्हि वर्णसङ्घातेन व्यवधानं नाश्रीयते, व्यञ्जनसङ्घातेन व्यवधाने न सिद्ध्यति ?—इत्यभिप्रायेणाह—कथमचिक्षणदित्यादि । 'क्षणु हिंसायाम्' इत्येतस्यैतद्रूपम् । अत्रापि ज्ञापकेन सिध्यतीत्यत आह—आचार्यप्रवृत्तिरित्यादि । क्षणोतिना ये सदृशाः संयोगादयस्त एवञ्जातीयाः । क्षणोतिप्रकारा इत्यर्थः । तेषां यदीत्त्वं न स्यात्, तदा तद्बाधनार्थम् 'अत्स्मृदृत्वरप्रथम्रद' इत्यादिनाऽत्त्वं न विदध्यात्, विदधाति च । तस्मादेतदेवात्त्वविधानलक्षणमाचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवञ्जातीयकानामित्त्वमिति ।

अहं पपचेति । उत्तमे णलि यदा 'णलुत्तमो वा' इति णित्त्वं नास्ति तदेदं प्रत्युदाहरणं भवति । अत्र लघु परतोऽक्षरम्, न तु चङ्परम् । अचकमतेत्यादि । 'कमेश्च्रुपसंख्यानम्' इति 'कमु कान्तौ' इत्येतस्मात् प्रकृत्यन्तादेव लुङ्, चङ् । अचकथदिति । 'कथ वाक्यप्रबन्धे' चुरादावदन्तः । अत्र 'अतो लोपः' इत्यकारलोपः । अत्र त्वग्लोपस्य स्थानिवद्भावे सति व्यवधानेऽपि न स्यात् । अतः प्रत्युदाहणान्तरमाह—दृषदमाख्यददृषदिति । 'तत्करोति तदाचष्टे' इति णिच् । 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः । अत्राज्झलोर्लोपः, नाक एव केवलस्येति नास्त्यत्र स्थानिवद्भावः । अन्यार्थं त्वग्लोप इति क्रियमाणमचकथदित्यत्रापि सन्वद्भावं निवर्त्तयतीत्यस्योपन्यासः ।

वादितवन्तं प्रयोजितवान् अवीवददित्यत्र योऽसौ णौ णेर्लोपः, नासावग्लोप इत्याश्रीयते, किं कारणम् ? 'चङ्परे' इति णिजातेर्निमित्तत्वेनाक्षेपात् ततोऽन्यस्याको लोपः परिगृह्यते । मीमादीनामत्र ग्रहणात् 'सन्वद्भावेनाभ्यासलोपो न भवति' इत्युक्तम् ।

किञ्च—सन्वदिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः

### पदमञ्जरी

यश्चङ्परो णिर्न तत्र लघुः; पूर्वेण णिचा व्यवहितत्वात् । लोपे कृते नास्ति व्यवधानम् । अजादेशः पूर्वविधौ स्थानिवद् भवतीति स्थानिवद्भावाद्व्यवधानमेव । यद्यपि दीर्घविधिं प्रति स्थानिवद्भावो निषिद्धः, सन्वद्भावे तु प्राप्नोति । यस्मिंश्च णौ लघुर्नासौ चङ्परः; द्वितीयेन णिचा व्यवहितत्वात् । भवतु वा स्थानिवत्त्वनिषेधः, अग्लोपित्वान्न प्राप्नोति । वृद्धौ कृतायां णेर्लोपः, तन्नाग्लोप्यङ्गं भवति । अग्लोपि वास्तु, प्रागेव वृद्धेर्णिलोपे कृते ? तत्रापि परिहारमाह—*योऽसौ णौ णेर्लोप इत्यादि* । ततोऽन्योऽग्लोप इति अन्याकारोऽन्य उक्तः । जात्याश्रयणे हि गोवलीवर्दन्यायेन णिजातेर्निमित्तत्वेन परिगृहीताया अन्यस्याको लोपः प्रतिषेधविषयः परिगृह्यते, न तु तस्या णिजातेः; ततश्चास्य लोपस्याग्लोपत्वेनानाश्रयणात्तेनाग्लोप्यङ्गं न भवतीति भवत्येवात्र सन्वद्भावः । *मीमादीनामत्र ग्रहणादिति* । तत्र ह्यच इति 'अभ्यासलोपश्च' इत्येव सिद्धेऽत्रग्रहणं विषयावधारणार्थम् । अत्र मुख्ये सन्येव भवति, न सन्वद्भावविषय इति ।

*किञ्चेत्यादि* । अनेनेदमाह—न केवलं मुख्यसन्परिग्रहमात्रमत्र कारणम्, किं

### न्यासः

अवीवददिति । वदतेर्ण्यन्ताद् वादितवन्तं प्रयोजितवानिति 'हेतुमति च' इति णिच्, पुनर्णिच्युत्पन्ने 'णेरनिटि' इति णिलोपे कृते सत्यप्यग्लोप्यङ्गं भवति, अतो न भवितव्यं सन्वद्भावेनेति यो मन्यते, तं प्रत्याह—वादितवन्तं प्रयोजितवानित्यादि । चङ्पर इत्यादिना णिलोपस्याग्लोपित्वेनानाश्रयणे कारणमाह । 'चङ्परे' इत्यनेन हि सन्वद्भावनिमित्तेन णिजातिराक्षिप्ता । तस्माद् गोबलीवर्दन्यायेन णिजातिर्निमित्तत्वेनाश्रीयते । अतो णिजातेरन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन परिगृह्यते, न तु तस्या एव णिजातेः । तस्माण्णिलोपस्याग्लोपित्वेनानाश्रयणात् तल्लोपेऽग्लोप्यङ्गं न भवति । अतो भवत्येवात्र सन्वद्भावः । सन्वदित्यतिदेशेन यथाचीकरदित्यादावभ्यासस्येत्त्वं भवति, तथामीमपदित्यादावप्यभ्यासलोपेन मीमादीनां भवितव्यमिति यश्चोदयेत्, तं प्रत्याह—मीमादीनामित्यादि । आदिशब्देन घ्वादीनां ग्रहणम् ।

किञ्चेत्यादिना परीहारान्तरम् । सन्वदित्यतिदेशेन हि सनाश्रयमेव कार्यमति-

सनमेवापेक्षते, किं तर्हि ? इस्भावाद्यपि; तदभावाद् अमीमपदित्यादावभ्यासलोपो न भविष्यति ॥

दीर्घो लघोः ॥ ९४ ॥

दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे । अचीकरत् । अजीहरत् । अलीलवत् । अपीपचत् ।

लघोरिति किम् ? अबिभ्रजत् ।

'लघुनि' इत्येव—अततक्षत् । अररक्षत् ।

'चङि' इत्येव—अहं पपच ।

'परे' इत्येव—अचकमत ।

'अनग्लोपे' इत्येव—अचकथत् ॥

अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९५ ॥

स्मृ, दृ, त्वर, प्रथ, म्रद, स्तॄ, स्पश—इत्येतेषामभ्यासस्य 'आत्' इत्ययमादेशो भवति चङ्परे णौ परतः । स्मृ—असस्मरत् । दृ—अददरत् । त्वर—अतत्वरत् । प्रथ—अपप्रथत् । म्रद—अमम्रदत् । स्तॄ—अतस्तरत् । स्पश—अपस्पशत् । सन्वद्भावादित्वं प्राप्तमनेन बाध्यते ।

पदमञ्जरी

तर्हि ? इस्भावाद्यपि विषयत्वेन निर्दिश्यते । इह च धातोः सन्वद्भावादिस्भावादि न भवति, ततश्चाभ्यासलोपोऽपि न भवतीति । यद्वा—सकारादौ सन्यभ्यासलोपो विहितः, न सन्मात्रे, ततश्च सामान्यातिदेशे विशेषानतिदेशात् लोपाभावः ॥

*दीर्घो लघोः* ॥ *अबिभ्रजदिति* । 'भ्राजभास' इत्यादिना पक्षे उपधाह्रस्वनिषेधः ॥

*अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्* ॥ *तपरकरणसामर्थ्यादिति* । स्थानिनो ह्रस्वत्वाद्

न्यासः

दिश्यते । सनाश्रयञ्च किं कार्यम् ? यत् सनमपेक्षते, नापरं किञ्चित् । न च 'अत्र लोपोऽभ्यासस्य' इत्यनेन विधीयमानो लोपः सनमेवापेक्षते, किं तर्हि ? इस्भावादिकमपि । आदिशब्देन—'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, 'मुचोऽकर्मकस्य' इति गुणश्च परिगृह्यते । तेनामीमपदित्यादाविसादेशो न भवति । अभ्यासलोपोऽपि न भवतीत्यभिप्रायः ॥

दीर्घो लघोः ॥ अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ 'स्मृ चिन्तायाम्', 'दृ भये', ञित्वरा

तपरकरणसामर्थ्यादति कृते 'दीर्घो लघोः' इत्येतदपि न भवति—अददरत् ॥

विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥

वेष्टि, चेष्टि—इत्येतयोरभ्यासस्य विभाषा 'अत्' इत्ययमादेशो चङ्परे णौ परतः। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। अभ्यासह्रस्वत्वे कृते अत्त्वं पक्षे भवति ॥

ई च गणः ॥ ९७ ॥

गणेरभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारादच्च। अजीगणत्, अजगणत् ॥

पदमञ्जरी

भाव्यमानत्वेन सवर्णग्रहणाच्च नानेन दीर्घस्य प्रसङ्गः, अतो लक्षणान्तरेण प्राप्तं दीर्घत्वं तपरकरणेन व्यावर्त्यते ॥

ई च गणः ॥ 'गण संख्याने' चुरादावदन्तः, तस्यातो लोपेनानग्लोप इति प्रतिषेधाद्वचनम्। कृतयोर्हलादिशेषदीर्घत्वयोरीत्वमत्त्वं च विधीयते।

'लोपः पिबतेः' इत्येतदत्रैव पठितव्यम्—पिबतेरालोपश्चेति, चकारात् ई चाभ्यासस्य ? सत्यम्; विभाषेत्यस्यानुवृत्तिः शङ्क्येत ॥

न्यासः

सम्भ्रमे', 'प्रथ प्रख्याने', 'म्रद मर्दने', 'स्तॄञ् आच्छादने', 'स्पर्श बाधनस्पर्शनयोः'।

अथाददरदित्यत्र 'दीर्घो लघोः' इति दीर्घत्वं कस्मान्न भवतीत्याह—तपरकरणसामर्थ्यादित्यादि। अनेनैव हि लक्षणेन दीर्घो नैव प्राप्नोति, यस्य निवृत्तिस्तपरकरणेन क्रियते; 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति भाव्यमानानां सवर्णानामग्रहणात् सर्वत्र स्थानिनो ह्रस्वत्वाच्च। तत्र यदि लक्षणान्तरेणापि प्राप्नुवतो दीर्घस्य निवर्त्तकं तपरकरणं न स्यान्निरर्थकमेव तपरकरणं स्यात्। तस्मात् तपरकरणसार्थ्यादति कृते 'दीर्घो लघोः' इति दीर्घो न भवतीति भावः ॥

विभाषा वेष्टिचेष्ट्योः ॥ 'वेष्ट वेष्टने', 'चेष्ट चेष्टायाम्'—एतयोरभ्यासस्य लघुपरता नास्तीत्यप्राप्त एव सन्वद्भाव इति अनेन विभाषाऽकारो विधीयते ॥

ई च गणः ॥ 'गण संख्याने', चुरावदन्तः। तत्राकारस्य 'अतो लोपः' इति लोपे कृतेऽनग्लोप इति वचनादप्राप्तयोरेव सन्वद्भावदीर्घयोरिदमीत्वं विधीयते।

चकारो विभाषेत्यनुकर्षणार्थः ॥

इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ
सप्तमस्याध्यायस्य चतुर्थः पादः

पदमञ्जरी

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
सप्तमस्याध्यायस्य तुरीयश्चरणः

न्यासः

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपाद-
विरचितायां काशिकाविवरणपञ्जिकायां
सप्तमाध्यायस्य चतुर्थः पादः

ॐ:ॐ:ॐ

समाप्तश्च सप्तमोऽध्यायः

ॐ:ॐ:ॐ

अयं व्याख्याद्वयोपेतः, स्वामि-शुक्लैः परिष्कृतः ।
काशिकासप्तमाध्यायः सङ्ख्यावद्भ्यस्समर्प्यते ।।

॥ तस्मै श्रीगुरवे नमः ॥

# काशिकावृत्तिः

## अथ अष्टमाध्याये प्रथमः पादः

### सर्वस्य द्वे ॥ १ ॥

'सर्वस्य' इति च 'द्वे' इति चैतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः 'पदस्य' इत्यतः प्राक् 'सर्वस्य द्वे भवतः' इत्येवं तद्वेदितव्यम्।

#### पदमञ्जरी

सर्वस्य द्वे ॥ 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयम्, तदाह—*सर्वस्येति द्वे इति चेति*। 'सर्वस्य' इत्युक्ते यत्प्रतीयते, 'द्वे' इति चेत्युक्ते यत्प्रतीयते, एतदर्थस्वरूपमित्यर्थः। यद्यपि 'स्वं रूपम्' इति वचनादुभयोरपि स्वरूपग्रहणं युक्तम्, तथापि 'नाम्रेडितस्यान्त्यस्य तु वा', 'नित्यमाम्रेडिते डाचि' इति द्विरुक्तेऽच्छब्दस्य सत्तामङ्गीकृत्य कार्यविधानात्तदभावः। न हि द्वयोरन्यतरस्य वा स्वरूपग्रहणे द्विरुक्तेऽच्छब्दस्य सम्भवः, तथा 'तस्य परमाम्रेडितम्' इति पूर्वपराभावादनुपपन्नं स्यात्। तस्मादर्थग्रहणम्। सर्वशब्दश्चायं द्रव्यप्रकारावयवकार्त्स्न्यवृत्तिः, द्रव्यकार्त्स्न्ये यथा—सर्वस्वं ददातीति, यच्च यावच्च स्वं तत्सर्वं ददातीति गम्यते। प्रकारकार्त्स्न्ये यथा—सर्वान्नीनो भिक्षुरिति, सर्वप्रकारकमन्नं भक्षयतीति गम्यते। अवयवकार्त्स्न्ये यथा—सर्वः पटो दग्ध इतिः, सर्वावयवः पटो दग्ध इति गम्यते। इह तु पर्यादीनां विशिष्टार्थानां शब्दानामुपादानाद् द्रव्यप्रकारकार्त्स्न्ययोरसम्भवः। यत्रापि किञ्चिन्नोपादीयते 'नित्यवीप्सयोः' इति, तत्रापि विशेषानुपादानादेव सर्वस्य शब्दस्य सिद्धम्। तस्मादवयवकार्त्स्न्यवृत्तिर्गृह्यते। परेः सर्वस्य द्वे भवतः, न कश्चिदवयवो द्विर्वचनेन वर्ज्यत इत्यर्थः।

#### न्यासः

सर्वस्य द्वे ॥ स्वरितलिङ्गासङ्गादधिकारत्वमस्यावगम्याह—सर्वस्येत्यादि। वक्ष्याम इति। व्याख्यास्याम इत्यर्थः। प्राक् पदस्येति। 'पदस्य' इति वक्ष्यमाणो यो योगस्तस्मात् प्रागित्यर्थः। 'पदस्य' इति वक्ष्यमाणस्य योगस्यानुकरणमेतत्। विभक्तिस्त्वनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्यर्थवत्त्वे प्रातिपदिकत्वाभावान्न भवति, यथा—गवित्ययमाहेति। सर्वस्य द्वे भवत इत्येवं तद्वेदितव्यमिति। इतिकरणोऽर्थनिर्देशार्थः। 'सर्वस्य द्वे भवतः' इति योऽयमर्थः प्रतीयत एतदर्थरूपं तद् वक्ष्यमाणं वेदितव्यमित्यर्थः।

वक्ष्यति—'नित्यवीप्सयोः' इति, तत्र सर्वस्य स्थाने द्वे भवतः। के द्वे

पदमञ्जरी

अत्र 'आ दशभ्यः संख्याः संख्येये वर्तन्ते' इति 'द्वे' इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे संख्येये 'षष्ठी स्थानेयोगा' इति वचनात्सर्वस्येति स्थानषष्ठी, सर्वस्य पर्यादेः स्थाने द्वे शब्दरूपे भवत इत्यर्थः, यथा—'अस्तेर्भूः' इति, तदा 'स्थाने द्विर्वचनम्' इत्ययं पक्षो भवति। शब्दसम्बन्धिनि तूच्चारणे संख्येये स्थान्यादेशभावो न सम्भवति, निवृत्तिधर्मा हि स्थानी शब्दश्चेन्निवृत्तः कस्योच्चारणं स्यात्। अतोऽध्याहृतोच्चारणशब्दापेक्षया 'कर्तृकर्मणोः कृति' इति सर्वस्येति कर्मणि षष्ठी, सर्वस्य पर्यादेर्द्वे उच्चारणे भवतः, सर्वः पर्यादिर्द्विरुच्चारणीय इत्यर्थः, तदा 'द्विःप्रयोगो द्विर्वचनम्' इत्येष पक्षो भवति।

तत्र प्रथमं पक्षं दर्शयति—*सर्वस्य स्थाने द्वे भवत इति*। के द्वे इति।

न्यासः

वक्ष्यतीति सूत्रकारः।

तत्रेति। 'नित्यवीप्सयोः' इत्यत्र योगे। इह द्वौ पक्षौ सम्भवतः—स्थाने द्विर्वचनम्, द्विष्प्रयोगो द्विर्वचनञ्चेति। कथं कृत्वा? सर्वस्येति शब्दानुशासनप्रस्तावात् सर्वस्य शब्दस्येति गम्यते। यद् द्विशब्दश्चायम् 'आदशभ्यः संख्याः संख्येये वर्त्तन्ते' इति संख्येयवचनः, तच्चेह संख्येयं शब्दरूपं वा स्याद्, आवृत्तिर्वा? 'द्वे' इत्यपि निर्देशो नपुंसकलिङ्गेन वा स्यात्? स्त्रीलिङ्गेन वा? तत्र यदा नपुंसकलिङ्गेन निर्देशः, तदा शब्दरूपे संख्येये। यदा तु स्त्रीलिङ्गेन निर्देशः, तदा शब्दस्यावृत्ती उच्चारणलक्षणे क्रिये। तत्र यदा शब्दरूपे विधीयेते तदा सर्वस्येति स्थानषष्ठीयं सम्पद्यते; अनियतसम्बन्धत्वात् 'षष्ठी स्थानेयोगा' इति न्यायात्। अस्मिन् दर्शने 'स्थाने द्विर्वचनम्' इत्येष पक्षो भवति। यदा तु द्वे आवृत्ती विधीयेते तदा 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्षो जायते। अस्मिन् दर्शने स्थान्यादेशभावो नास्ति। आवृत्तिर्हि क्रिया, तस्याश्चेह शब्दः साधनम्। न च क्रियायाः साधनस्य च स्थान्यादेशभाव उपपद्यते। यदि हि स्यात्, शब्दस्य स्थानिनो निवृत्तिधर्मत्वान्निवृत्तिरेव स्यात्, ततश्च क्रियाया अभाव एव स्यात्। न हि शब्देन विनोच्चारणक्रियोपपद्यते; तस्याः शब्दधर्मत्वात्। तस्माद् यदा द्वे आवृत्ती विधीयेते तदा 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्ष उपजायते। अस्मिंस्तु पक्ष आवृत्तिशब्दापेक्षया सर्वस्येति 'कर्तृकर्मणोः कृति' इति कृद्योगलक्षणा कर्तृषष्ठी वेदितव्या। सर्वो हि शब्द आवर्त्यमान एवावृत्तिक्रियायाः कर्त्ता भवति। अत्राद्यं पक्षमाश्रित्यैतदुक्तम्—सर्वस्य स्थाने द्वे भवत इति।

कथं पुनः स्थाने द्विर्वचनपक्ष आश्रितः? कथं पुनर्नाश्रयितव्यः? सदोषत्वात्। स्थाने द्विर्वचने पुनः—श्वलिट् श्वलिट्, वाग्वागिति 'पूर्वत्रासिद्धम्'—इत्यसिद्धत्वात् पूर्वं ढत्वादिभ्यो द्विर्वचने कृते ढत्वादयोऽत्र न सिद्धयन्ति; अपदान्तत्वात्? नैष दोषः; वक्ष्यति ह्येतत्—'पूर्वत्रासिद्धीयमद्विर्वचने' इति। अपि च नित्येऽर्थे वीप्सायाञ्च यः

भवतः ? ये शब्दतश्चार्थतश्चोभयथान्तरतमे । एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवतः—पचतिपचति । ग्रामोग्रामो रमणीयः ।

पदमञ्जरी

विशेषानुपादानाद्ये केचन द्वे प्राप्नुत इति प्रश्नः । इतरोऽप्यन्तरतमपरिभाषामाश्रित्याह— *शब्दतश्चेति* । बिभीतकादिवाचिनामक्षादिशब्दानां शब्दत एवान्तर्यम्, तरुपादपादीनामर्थत एव, द्वयोस्तु पचतिशब्दयोरुभयथान्तर्यम्; तत्र ते एव यथा स्यातामित्युभयग्रहणम् । ते एवोभयथान्तरतमे दर्शयति—*एकस्येति* ।

ननु चास्मिन्पक्षे राजाराजा, वाक्वाक्, लिट्लिट्, गोधुग्गोधुक्, शब्दप्राट्शब्दप्राट्, उपानदुपानत्, गौगौरित्यत्र नलोप-कुत्व-ढत्व-घत्व-षत्व-धत्व-दीर्घत्वा-(वृद्धी)नामसिद्धत्वादकृतेष्वेतेषु द्विर्वचने कृते पदस्य स्थाने समुदायस्यादिष्टत्वात्तस्यैव स्थानिवद्भावेन पदत्वं नावयवयोरिति पूर्वत्र भागे नलोपादीनि न स्युः, उत्तरत्र तु समुदायपदत्वेनापि सिद्ध्यति ? ननु च नलोपादीन्यतरङ्गाणि पदत्वमात्रा पेक्षत्वाद्, द्विर्वचनं तु बहिरङ्गं वीप्साद्यर्थापेक्षत्वात्, ततश्च तेषु कृतेषु द्विर्वचनं भविष्यति ? एवमपि कृतानामपि तेषां द्विर्वचने कर्तव्येऽसिद्धत्वान्नका-

न्यासः

शब्दो वर्त्तते तस्य द्विर्वचनं विधीयते, न च ढत्वादिष्वकृतेषु नित्यादावर्थे पदस्य वृत्तिरुपपद्यते । तस्मात् पूर्वं ढत्वादिभिरेवात्र भवितव्यम्, पश्चाद् द्विर्वचनेनेत्येष क्रमः । इह तर्हि विसंविसम्, मुसलम्मुसलमित्यत्र 'आदेशप्रत्यययोः' इति षत्वं प्राप्नोति ? अयमप्यदोषः; यस्मादादेशो यः सकारस्तस्य षत्वं विधीयते, न ह्यत्रादेशः सकारः, किं तर्हि ? तदवयवः । इह तर्हि नृभिर्नृभिरित्यत्र 'रषाभ्यां नो णः समानपदे' इति णत्वं प्राप्नोति ? एषोऽप्यदोषः; कार्यिणो नकारस्य रेफादिना निमित्तेन यदा सर्वदा समानपदस्थत्वमेवं सति णत्वेन भवितव्यमिति । किं वक्तव्यमेतत् ? न; कथं तर्हि अनुच्यमानं लभ्यते ? समानग्रहणसामर्थ्यात् । यदि हि यत्र समानपदस्थत्वमसमानपदत्वञ्च तत्रापि स्यात्, समानग्रहणमनर्थकं स्यात् । नृभिरिति शब्दस्य नकारस्य द्विर्वचन एव कृते रेफेण निमित्तेन समानपदस्थत्वम्, नाऽकृते । तस्माददुष्ट एव स्थाने द्विर्वचनपक्ष इति युक्त एवाश्रयितुम् । के द्वे इति । एवं मन्यते—विशिष्टे द्वे एवेष्येते, इह च विशेषानुपादानादनियमेन ये केचन शब्दरूपे प्राप्नुत इति 'स्थानेऽन्तरतमः' इति परिभाषया व्यवस्था भविष्यतीत्यनेनाभिप्रायेणाह—ये शब्दतश्चेत्यादि । इह केषाञ्चित् शब्दानां शब्दत एवान्तरतम्यम्, यथा—बिभीतकादिवाचिनामक्षादिशब्दानाम् । केषाञ्चिदर्थत एव, न शब्दतः, यथा—तरुपादपादिशब्दानाम् । केषाञ्चिदुभयत एव, यथा—द्वयोः पचतिशब्दयोस्तिङन्तयोः । तत्रोभयथा यत्रान्तरतम्यमस्ति तत्र यथा स्यादित्येवमर्थमुभयोर्ग्रहणम् । एतच्च 'स्थानेऽन्तरतमः' इति परिभाषायास्तमब्ग्रहणाल्लभ्यते । ते एवोभयथान्तरतमे दर्शयितुमाह—एकस्येत्यादि । अथ 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति

पदमञ्जरी

रादियुक्तस्य द्विर्वचनमिति पुनः पूर्वपदे निमित्तभावान्न स्युरेव, यथा औजढदित्यत्र कृतानामपि ढत्वादीनामसिद्धत्वात् हत इत्येतस्य द्विर्वचनेऽभ्यासे हकारस्यैव श्रवणं भवति ? नैष दोषः; वक्ष्यत्येतत् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति, ततश्च परत्वादन्तरङ्गत्वाद्वा नलोपादिषु कृतेषु तद्युक्तस्यैव द्विर्वचनं भविष्यति ।

यानि तर्हि पदकार्याणि नाकृते द्विर्वचने प्राप्नुवन्ति, तानि न स्युः; तद्यथा किङ्किमिति—'वा पदान्तस्य' इति परसवर्णविकल्पः, अपचन्नपचन्निति ङमुट्, अग्नाअग्नाविति वलोपः, छायाच्छायेति तुग्विकल्पः, वृक्षान्वृक्षानिति 'पदान्तस्य' इति णत्वप्रतिषेधः, अजेऽजे इति, 'एङः पदान्तादति' इति पूर्वरूपत्वम् । किं चात्र 'स्वरितो वानुदात्ते पदादौ' इत्येष विधिर्न स्यात्, उत्तरभागस्यापदत्वात्; तथाऽपदत्वात्तदाश्रयाणि कार्याणि प्राप्नुवन्ति, तद्यथा—अङ्गेनाङ्गेनेत्यतो गुणे पररूपत्वं स्यात्, पयःपय इति 'सोऽपदादौ' इति सत्वप्रसङ्ग इत्येषा दिक् । अतो द्वयोरपि पृथक्पदत्वमेषितव्यम्; तदुच्यते—यदि प्रत्यस्तमितावयवभेद एक एवादेशः स्याद्, 'द्वे' इति द्विवेचनमनुपपन्नं स्यात्; ततः 'द्वे' इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते, तत्र स्थानिवद्भावेन समुदायस्यापि पदत्वं स्वतः, एवं चावयवयोरपीति समुदायस्यावयवयोश्च पदकार्याणि भविष्यन्ति । एवमपि विसंबिसम्, मुसलंमुसलमिति 'आदेशप्रत्यययोः' इति षत्वप्रसङ्गः ? नैष दोषः; नैवं विज्ञायते—आदेशस्य सकार इति, कथं तर्हि ? आदेशो यः सकार इति । अत्र च समुदायस्य समुदाय आदेशः, न सकारमात्रस्य सकारमात्रमिति न भविष्यति । इह तर्हि नृभिर्नृभिरिति समुदायस्य पदत्वाद्रेफनकारयोः समानपदस्थत्वाद्रषाभ्यामिति णत्वप्रसङ्गः ? एषोऽप्यदोषः; तत्र समानग्रहणं न कर्त्तव्यम्, 'पदे' इत्येवास्तु, तत्रापदस्थयोर्निमित्तनिमित्तिनोरसम्भवादेकत्वविवक्षार्थमेव पदग्रहणमिति समानपदस्थत्वं सिध्यति, ततश्च समानग्रहणाद् यत्र समानपदस्थत्वमेव, तत्र णत्वम् । इह तु स्थानिवद्भावादेकपदत्वम् ! वस्तुतस्तु पदद्वयात्मक आदेश इति पृथक्पदस्थमिति णत्वाभावः । तदेवं निर्दोषः 'स्थाने द्विर्वचन'पक्षः ।

न्यासः

स्वरूपग्रहणाद् द्विशब्दादेश एव कस्मान्न भवति ? द्विवचनेन निर्देशात् । स्वरूपग्रहणे तु सति द्विशब्दस्यैकत्वादेकवचनेनैव निर्देशं कुर्यात्, द्विवचनेन तु निर्देशः कृतः, तस्मान्नेदं स्वरूपग्रहणम्, अतो न भवति द्विशब्दादेशप्रसङ्गः । यतश्चायम् 'तस्य परमाम्रेडितम्' 'अनुदात्तञ्च' इत्याह, ततो विज्ञायते—न द्विशब्दादेश इति । द्विशब्दादेशे हि सति भेदनिबन्धनत्वात् परस्य द्विशब्दस्य चाभिन्नत्वात् परत्वमेव तावन्न द्विशब्दादेशे स्यात्, कुतः पुनराम्रेडितसंज्ञा, अनुदात्तत्वञ्च ! यदि च द्विशब्द आदेशः स्याद्, 'अव्यक्तानुकरणस्यात इतौ' इत्यनुवर्त्तमाने 'नाम्रेडितस्यान्त्यस्य तु वा' इत्याम्रेडिता-

न्यासः

वयवस्याच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्यते, न द्विशब्दस्याच्छब्दोऽवयवोऽस्ति। एतेन सर्वशब्दस्यापि स्वरूपग्रहणं प्रतिक्षिप्तम्। यदि हि सर्वशब्दस्य स्वरूपग्रहणं स्यात्, तस्यैव हि द्विर्वचनं स्यात्। ततश्च पूर्ववदाम्रेडितसम्बधिनोऽच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्येत, 'नित्यवीप्सयोः' इत्यत्र नित्यग्रहणं चानर्थकं स्यात्। तत्र हि नित्येऽर्थे वीप्सायाञ्च वर्त्तमानस्य द्विर्वचनं विधास्यते। न च सर्वशब्दस्य नित्येऽर्थे वृत्तिरस्ति, तिङ्क्षु नित्यता; 'अव्ययकृत्सुप्सुप्सु वीप्सा' इति वचनात्। तस्मात् सर्वस्येत्यत्रार्थग्रहणम्। सर्वशब्दोऽयमिह सकले कलावति वर्त्तते, तेन पचतीत्यादेः कृत्स्नस्य शब्दस्य द्विर्वचनं भवतीत्यलमतिप्रसङ्गेन। एवं तावत् स्थाने द्विर्वचनपक्षमाश्रित्य 'सर्वस्य स्थाने द्वे भवतः' इत्युक्तम्।

इदानीम् 'द्विष्प्रयोगो द्विर्वचनम्' इति पक्षमाश्रित्याह—यदा त्वित्यादि। तुशब्दः पूर्वस्मात् पक्षाद् विशेषस्य प्रदर्शकः[1], तत्रान्तरतम्येन द्वे शब्दरूपे आदिश्येते। इह तु स एव शब्दो द्विरावर्त्यते द्विरुच्यत इत्यर्थः। द्वे आवृत्ती भवत इति। द्वे उच्चारणक्रिये भवत इत्यर्थः। कथम् 'पुनर्द्विष्प्रयोगो द्विर्वचनम्' इति पक्ष आश्रयितव्यः? कथं च नाश्रयितव्यः? सदोषत्वात्। द्विष्प्रयोगे हि–आम् पचसि पचसि देवदत्त इत्यत्र 'आम एकान्तरमामन्त्रितमनन्तिके' इति निघातप्रतिषेधो न प्राप्नोति; आमन्त्रितस्य पदद्वयेन व्यवधानादेकान्तरताया अभावात्। स्थाने पुनर्द्विर्वचने ह्येकपदस्यायमादेश इति सत्यप्यादेशस्य स्वगते भेदे स्थानिवद्भावादेकत्वव्यपदेशे सत्येकान्तरता भवतीति निघातप्रतिषेधः सिध्यति? नैष दोषः; धर्मभेदादुपचरितो हीह भेदः, स्वगतस्त्वभेद एव; अन्यथा वृत्तिरेव न स्यात्। एकस्यैव हि वस्तुन आवृत्तिः क्रियते। तस्माद् भिन्नत्वाद् वस्तुन इहैव सुतरामेकान्तरता सिध्यति। इह तर्हि पौनःपुन्यमिति? अत्र 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति ष्यञ् न प्राप्नोति, पौनःपुनिक इत्यत्र च 'कालाट्ठञ्' इति ठञ् न प्राप्नोति; अप्रातिपदिकत्वात्। अप्रातिपदिकत्वं त्वर्थवत्समुदायानां समासस्यैवेति समासग्रहणस्य नियमार्थत्वात्। स्थाने द्विर्वचने पुनर्यद्यपि सुबन्ततया स्वाश्रया प्रातिपदिकसंज्ञा नास्ति, तथापि स्थानिवद्भावात् प्रातिपदिकग्रहणे ग्रहणात् प्रातिपदिकं भवति। यद्यपि चास्य स्थानी प्रत्ययलक्षणेन सुबन्तः, तथाप्यप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधो न भवति; प्रातिपदिकसंज्ञायाः प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधो न भवतीत्यस्यार्थस्य 'न ङिसम्बुद्ध्योः' इत्यनेन ज्ञापितत्वात्। द्विष्प्रयोगे द्विर्वचनेऽपि न दोषः। अत्र समासग्रहणं हि तुल्यजातीयस्यैव प्रातिपदिकसंज्ञां निवर्त्तयति। कश्च तुल्यजातीयः? यस्य भेदसंसर्गद्वारेण समुदायार्थ उपजायते। कस्य चैवंविधोऽर्थ उपजायते? वाक्यस्य। नित्यादिश्चायमर्थः पदावस्थायां न दृष्ट एव। द्विरुक्तिकाले दृश्यमानः पदान्तरेण न भिद्यते, नापि संसृज्यत इति कुत एवम्प्रकारस्य

1. 'विशेषणार्थः'—इति पाठा०।

यदा तु 'द्विःप्रयोगो द्विर्वचनम्', तदा स एव पचतिशब्दो द्विरावर्त्तते, तस्य द्वे आवृत्ती भवतः ।

पदमञ्जरी

इदानीं द्वितीयं पक्षं दर्शयति—*यदा त्विति* । *द्विरावर्त्तत इति* । उच्चार्यमाणस्य शब्दस्य यो व्यापार उच्चारणं नाम सेहावृत्तिर्विवक्षिता । द्विरुच्चरतीत्यर्थः । द्वे *आवृत्ती भवत इति* । द्वे उच्चारणक्रिये भवत इत्यर्थः । न पुनर्मुख्ये एवावृत्ती द्वे भवतः, तथा सति त्रिर्वचनप्रसङ्गात् । नन्वस्मिन्पक्षे आं पचसिपचसि देवदत्त३—इत्यत्रावृत्तिभेदनिबन्धनया द्वित्वसंख्यया स्वाश्रयस्यैकत्वस्य निवर्त्तनादेकान्तरताया अभावाद् 'आम एकान्तरम्' इति निघातप्रतिषेधो न स्याद्यथा किरिणेत्यादावावृत्तिभेदनिबन्धनेनापि द्व्यच्त्वेन स्वाश्रयस्यैकाच्त्वस्य निवर्तनात् 'सावेकाचः' इति विभक्त्याद्युदात्तत्वं न भवति, तद्वत् । स्थाने द्विर्वचने तु समुदायस्यापि स्थानिवद्भावेन पदत्वात्सिध्यति, तथा पौनःपुन्यमिति पुनःपुनर्भवितरि वर्तमानात्पुनःपुनशब्दाद्भावे ष्यञ्विधीयते; पुनःपुनर्भवः पौनःपुनिक इति च कालाट्ठञ्', तत्र द्विःप्रयोगे पदस्य विज्ञायमाने समुदायस्य वीप्सालक्षणेनार्थेन सत्यप्यर्थवत्त्वेऽर्थवत्समुदायानां समासग्रहणं नियमार्थमित्यप्रातिपदिकत्वात्तद्धितो न स्यात्; सुबन्तादुत्पत्तिपक्षेऽपि समुदायस्यासुबन्तत्वान्न स्यादेव, पक्षान्तरे तु स्थानिवद्भावादुभयमप्यस्तीति सिध्यति । यद्यप्यस्य स्थानी सुबन्तः, तथापि सुब्लुकि कृते 'न ङिसम्बुद्ध्योः' इति निषेधाज्ज्ञापकात् प्रत्ययलक्षणेन 'अप्रत्ययः' इति निषेधाभावात्प्रातिपदिकत्वमव्यावृत्तमिति ? अत्रैवं भाष्ये परिहार उक्तः—पचसिपचसीत्यर्थरूपयोः समानत्वात्स एव पचशब्दः, स एव च तिङ्, ततश्च यः पूर्वस्माद्विहितः स परस्मादपि यश्च परस्मात्स पूर्वस्मादपि, तदादिग्रहणं च पदसंज्ञायामनुवर्त्तते, तत्र समुदायस्यावयवयोश्च तुल्येऽपि तिङन्तत्वे समुदायस्यैव पदसंज्ञा भविष्यति द्विर्वचनवत्, तद्यथा—पपाचेत्यत्र समुदायस्यावयवानां च तुल्येऽप्येकाच्त्वे समुदायस्यैव द्विर्वचनं भवति, नावयवानाम्; तत्कस्य हेतोः ? शास्त्रहानेः, अवयवद्विर्वचने ह्यवयवान्तरे विषये समुदायविषये च शास्त्रं हीनं स्यात्, तद्वत्पदसंज्ञापि समुदायस्यैव भविष्यतीत्येकान्तरता युज्यते । पौनःपुन्यमित्यादौ तद्धितोऽप्युक्तेन न्यायेन समुदायस्य सुबन्तत्वात् प्रातिपदिकत्वाच्च सिद्ध्यतीति ।

अत्रैवं चोदयन्ति—प्रागेव द्विर्वचनात् पचसीत्यस्यामवस्थायां प्रवृत्ता पदसंज्ञा किमिति पुनः कृतेऽपि द्विर्वचने प्रवर्त्तते, प्रवर्त्तमाना वा किमिति समुदाय-

न्यासः

समासग्रहणान्निवृत्तिः ! अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवञ्जातीयेभ्यस्तद्धितोत्पत्तिरिति, यदयं कस्कादिषु कौतस्कुतशब्दं पठति । कुतः कुत आगत इति 'अव्ययात्त्यप्' इति त्यपि प्राप्तेऽस्मादेव निपातनादण् ।

पदमञ्जरी

स्यैव प्रवर्त्तते, न तु प्रत्येकमवयवयोः, न ह्येवंविधो द्विर्वचनन्यायस्य विषय इति संयोगसंज्ञायामुक्तम्; निर्ल्लेयादित्यादौ त्रिष्वपि द्वयोः संयोगसंज्ञाभ्युपगमात्। किञ्च यत्र समुदायस्यैव पदत्वम्—अपचन्नपचन्नित्यादौ, तत्रावयवेषु पदकार्याभावप्रसङ्ग इति।

अपर आह—उच्चारणक्रियैवात्र परं भिद्यते, तद्भेदात्त्वौपचारिकः पदभेदः; तत्त्वतस्त्वेकमेव पदमित्येकान्तरता युज्यते, पौनःपुन्यमित्यादौ च वीप्सालक्षणेनार्थेन समुदायस्याप्यर्थवत्त्वात् प्रातिपदिकत्वम्। न च समासग्रहणान्निवृत्तिः; अतुल्यजातीयत्वात्। येषां हि भिन्नार्थानां सतां परस्परसम्बन्धमात्रमधिकं तत्समुदायस्यैव तुल्यजातीयस्य तेन निवृत्तिः। न चात्रैतदुभयमस्ति। न हि द्वयोः पुनः शब्दयोरर्थो भिद्यते, नापि तत्समुदाये तत्सम्बन्धोऽधिकः, किं तर्हि? वीप्सारूपोऽन्य एवेति। यद्येवम्, किरिणेत्यादौ 'सावेकाचस्तृतीयादिः' इति विभक्तिस्वरः स्यात्? तत्रापि ह्युच्चारणक्रियैव भिद्यते, तत्त्वतस्त्वेक एवेकारः। किञ्च—नित्यानां विभूनां वर्णानां तदात्मकानां च पदानां स्वरूपेण व्यवधानमव्यवधानं च न सम्भवतीत्युपलब्धिगतमेव तदाश्रयितव्यम्। तत्र च यथा पदभेदेऽप्युपलब्धिभेदः, तथा तदभेदेऽपीति कथमेकान्तरता! यदि च पौनःपुन्यमित्यादावुक्तेन न्यायेन समुदायस्यापि प्रातिपदिकत्वम्, हन्तैवं ग्रामोग्रामो रमणीय इत्यादावप्येवमेव प्रातिपदिकत्वे सति सुब्लुक् स्यात्, तस्मात्स्थाने द्विर्वचनमेवात्र रोचयामहे। अत एव 'स्थाने द्विर्वचनम्' पूर्वं वृत्तिकारेण दर्शितम्, पश्चात्सम्भवमात्रेण 'द्विःप्रयोगोऽपि' दर्शितः।

न्यासः

सर्वस्येति वचनमिह 'अलोऽन्त्यस्य' निवृत्त्यर्थं वा स्यात्? षष्ठ्यर्थप्रतिपत्त्यर्थं वा? तत्र त्वलोऽन्त्यनिवृत्त्यर्थं तावन्नोपपद्यते। तथा हि—शब्दतश्चार्थतश्चान्तरमाभ्यां द्वाभ्यां शब्दरूपाभ्यां भवितव्यम्। ये चैवम्प्रकारे ते नियोगतोऽनेकाल्स्वरूपे इत्यन्तरेणापि सर्वग्रहणेन 'अनेकाल्शित्सर्वस्य' इति सर्वस्यैव भविष्यतः, नान्त्यस्य। षष्ठ्यर्थप्रतिपत्त्यर्थमपि सर्वग्रहणं नोपपद्यते। तथा हि—यत्र तावत् षष्ठ्युच्चार्यते 'परेर्वर्जने' इत्यादौ, तत्र षष्ठ्युच्चारणादेव षष्ठ्यर्थस्य प्रतिपत्तिर्भविष्यति। 'नित्यवीप्सयोः' इत्यत्र यद्यपि षष्ठी नोच्चार्यते, तथापि सर्वस्येति वचनमन्तरेणापि शक्यते षष्ठ्यर्थोऽवगन्तुम्। कथम्? 'द्वे' इति ह्यादेशनिर्देशः, आदेशश्च सम्बन्धिनमपेक्षते, 'नित्यवीप्सयोः' इति चार्थनिर्देशः, न चार्थनिर्देशे स्थान्यादेशसम्बन्ध उपपद्यते। तस्मान्नित्यवीप्सयोर्यः शब्दो वर्त्तते तस्य द्वे भवतः—इत्येवं वाक्यार्थः स्थाने द्विर्वचनपक्षे तावदगम्यते। यदा 'द्विष्प्रयोगो द्विर्वचनम्', तदापि विना सर्वस्येति वचनेन षष्ठ्यर्थोऽवगम्यत एव। एवं ह्यावृत्तिर्हि क्रिया, तस्या अवश्यं साधनेन सम्बन्धिना भवितव्यम्; तदायत्तत्वादात्मलाभस्य

सर्वस्येति किम् ? विस्पष्टार्थम् । अथ पदस्येत्येव कस्मान्नोच्यते ?

पदमञ्जरी

इह सर्वस्येति वचनमलोऽन्त्यनिवृत्त्यर्थं वा स्यात्, षष्ठ्यर्थप्रसिद्ध्यर्थं च । तत्र स्थाने द्विर्वचनपक्षे तावच्छब्दतोऽर्थतश्चान्तरतमाभ्यां द्वाभ्यामादेशाभ्यां भाव्यम् । ये चैवं प्रकारास्ते नियोगतोऽनेकाल्स्वभावाः—इत्यन्तरेणापि सर्वग्रहणम् 'अनेकाल्शित्सर्वस्य' इति सर्वस्य भविष्यति । षष्ठ्यर्थोऽपि 'परेर्वर्जने' इत्यादौ यत्र षष्ठ्युच्चार्यते तत्र तावत् सिद्धः; यत्रापि षष्ठी नास्ति—'नित्यवीप्सयोः' इति, तत्रापि सामर्थ्याल्लभ्यते—नित्यवीप्सयोर्यः शब्दस्तस्य द्वे भवत इति । द्विःप्रयोगपक्षे त्वलोन्त्यविधिप्रसङ्ग एव नास्ति; स्थानषष्ठ्यभावात् । षष्ठ्यर्थोऽपि लभ्यत एव, उच्चारणस्य शब्दधर्मत्वाद् । अतो नार्थः सर्वग्रहणेनेत्यभिप्रायेणाह—*सर्वस्येति किमिति* । *विस्पष्टार्थमिति* । य एवं प्रतिपत्तुमसमर्थः, तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यत इत्यर्थः । *अथेत्यादि* । एवं मन्यते—समासतद्धितवाक्यनिवृत्त्यर्थमवश्यम् 'पदस्य' इति वक्तव्यम् । समासनिवृत्त्यर्थं तावत्—सप्तपर्णोऽष्टापदम्, अत्र सप्तसंख्यानि पर्णानि वीप्स्यन्ते, न तु तद्वान्वृक्ष इति वीप्सायामेकत्वस्यानन्तर्भावात्प्रागेव विभक्तेर्द्विवचनप्रसङ्गः, पदाधिकारात्तु न भवति; तद्धितः—द्विपदिकां ददाति, अत्र द्वित्वसंख्यायुक्तः पदार्थो वीप्स्यत इति स्त्रीत्वैकत्वलक्षणयोर्लिङ्गसंख्ययोरनन्तर्भावात्प्राक् तद्धितोत्पत्तेः समासे कृते प्राप्तं द्विर्वचनं पदत्वाभावान्न भवति; वाक्यम्—ग्रामेग्रामे पानीयम्, अत्र वाक्यस्यापदत्वाद् द्विर्वचनं न भवति ग्रामे पानीयमिति । किञ्चोत्तरत्र पदस्येति न वक्तव्यं भवति; 'पदस्य पदात्' इत्यस्यैवानुवृत्तेरिति । *नैवं शक्यमिति* । अस्याप्ययमभिप्रायः—'पदस्य' इत्युच्यमानेऽपि सप्तपर्णाभ्यामित्यादौ स्वादिषु पूर्वस्य पदत्वाद् द्विर्वचनप्रसङ्गः; तस्मादेवमत्र परिहारो वाच्यः—यद्वीप्सायुक्तम्, न अदः प्रयुज्यते; किं पुनस्तत् ? पर्वणिपर्वणि सप्तपर्णान्यस्येति, यच्च प्रयुज्यते न तद्वीप्सायुक्तम्—सप्तपर्णान्यस्येति पर्णशब्द इति ।

न्यासः

क्रियायाः । तस्मादयत्तस्याः क्रियायाः साधनं तस्य द्वे भवत इति विस्पष्टैव षष्ठ्यर्थप्रतिपत्तिर्भवतीत्यभिप्रायेणाह—सर्वस्येति किमिति ? विस्पष्टार्थमिति । य एवं न शक्नोति सर्वादेशं षष्ठ्यर्थं वा प्रतिपत्तुम्, तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यत इति भावः ।

अथेत्यादि । एवं मन्यते—'पदस्य' इत्युच्यमाने समासतद्धितवाक्यानां द्विर्वचननिवृत्तिः कृता भवति, उत्तरत्र च 'पदस्य' इति वक्तव्यं न भवति । एतदेव हि 'पदस्य' इति वचनं तत्रानुवर्त्तयिष्यते । अनुच्यमाने 'पदस्य' इत्येतस्मिन्, समासस्यापि द्विर्वचनं स्यात्—पर्वणिपर्वणि सप्तसप्त पर्णान्यस्य सन्तीति सप्तपर्ण इति; तद्धितस्यापि द्वौ द्वौ पादौ ददाति 'पादशतस्य संख्यादेः' इत्यादिना वुन्—द्विपदिकां ददातीति; वाक्य-

नैवं शक्यम्, इह हि न स्यात्—प्रपचति, प्रपचतीति। इह द्रोग्धा,

पदमञ्जरी

तद्धिते तु तद्धितेनैवोक्तत्वाद् द्विर्वचनाभावः, स हि 'वीप्सायाम्' इत्युच्यते। वाक्यस्यापि द्विर्वचनं न भवति; पदद्विर्वचनेनोक्तत्वाद्वीप्सायाः। तस्मात् समासादिनिवृत्त्यर्थं तावत्पदाधिकारो न कर्तव्य इति।

प्रत्युत क्रियमाणे पदाधिकारेऽव्याप्तिलक्षणो दोष इत्याह—*इह हि न स्यादिति*। *प्रपचतीति*। धातूपसर्गसमुदायः क्रियाविशेषवाची। अडादिव्यवस्थार्थं तु धातूपसर्गयोः पृथक् कल्पनम्, ततश्च क्रियाधर्मो नित्यता समुदायस्येति तस्यैव द्विर्वचनम्। *इहेत्यादि*। द्रुहेस्तृचि विहिते 'वा द्रुहमुह' इति

न्यासः

स्यापि—ग्रामेग्रामे पानीयमिति। 'पदस्य' इति चोत्तरत्र न वक्तव्यं भवति। नैवं शक्यमिति। अत्र कारणमाह—इह हीत्यादि। प्रपचतीति। वाक्यमेतत्; पदसमुदायात्मकत्वात्। अत्र 'पदस्य' इत्युच्यमानेऽस्य द्विर्वचनं न स्यात्। तस्मादशक्यं पदस्येति वक्तुम्। सप्तपर्णः, द्विपदिकां ददातीत्यत्र तु पदस्येत्युच्यमाने द्विर्वचनं न भविष्यति; समासतद्धिताभ्यामेवोक्तत्वात्। वीप्सायां ग्रामेग्रामे पानीयमित्यत्रापि न भविष्यति; अवयवद्विर्वचनेनेव वीप्साया द्योतितत्वादित्यभिप्रायः।

इहेत्यादि। 'द्रुह जिघांसायाम्', ततस्तृच्, द्रुह्+तृ इति स्थिते घत्वढत्वे प्राप्नुतः, द्विर्वचनं च, तत्र 'पूर्वत्रासिद्धम्' इति द्विर्वचने कर्त्तव्ये घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं पूर्वं प्राप्नोति। कृते तस्मिन् पश्चाद् 'वा द्रुहमुहष्णुहष्णिहाम्' इति विकल्पे सत्यनिष्टमपि प्राप्नोति। नावश्यमिष्टमेव यद्ययं नियमो लभ्यते। यदैकस्य घत्वं भवति तदा द्वितीयस्यापि घत्वेन भवितव्यम्, यदा त्वेकस्य ढत्वं तदा द्वितीयस्यापि ढत्वेन भवितव्यमिति तदेष्टमेव स्यात्। न त्वेष नियमो लभ्यते; नियमकारणाभावात्। तस्मात् कदाचिदनिष्टमपि स्यात्। तत्र यदा पूर्वोत्तरयोरेकस्य घत्वं भवत्यपरस्य ढत्वम्, तदानिष्टमपि प्राप्नोति। यदोभयोरपि घत्वं ढत्वं वा भवति, तदेष्टं स्यात्। तस्मादनिष्टनिवृत्त्यर्थम् 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वक्तव्यम्। 'पूर्वत्रासिद्धम्' इत्यस्मिन्नधिकारे भवं पूर्वत्रासिद्धीयं नलोपादिकार्यम्, गहादित्वाच्छः, ततो द्विर्वचनादन्यत्रासिद्धं भवति, न तु द्विर्वचने।

अथ वा—पूर्वत्र सपादसप्ताध्याय्यामसिद्धं पूर्वत्रासिद्धम्, तदेव नलोपादिकार्यम्, तत्र भवं पूर्वत्रासिद्धीयम्। तत् पुनस्तस्यैव नलोपादेरसिद्धत्वम्, तद् द्विर्वचनादन्यस्मिन् कर्त्तव्ये भवति, न तु द्विर्वचन एव। एतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'न मु ने' इत्यत्र नेति योगविभागः कर्त्तव्यः, तेन द्विर्वचने कर्त्तव्येऽसिद्धत्वं न भविष्यतीति। असति चासिद्धत्वे द्रुहेस्तृचि कृते पूर्वं विकल्पेन घत्वम्, 'झषस्तथोर्धोऽधः'

द्रोढा—इति घत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्—द्रोग्धा द्रोढा, द्रोढा द्रोग्धेति। तस्माद्वक्तव्यमेतत्—'पूर्वत्रासिद्धीयमद्विर्वचने' इति।

'सर्वस्य' इत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम् ॥

पदमञ्जरी

घत्वढत्वे प्राप्नुतः, द्विर्वचनं च; तत्र घत्वढत्वयोरसिद्धत्वात्पूर्वं द्विर्वचनं प्राप्नोति। अस्तु, को दोषः ? तत्राह—*तत्रेति*। पश्चाद्विकल्पे प्रवर्त्तमाने यदा परत्र ढत्वं तदा पूर्वत्रापि ढत्वमेवेति नियमाभावात् घत्वमपि कदाचित् स्यात्। एवं घत्वेऽपि द्रष्टव्यम्—परत्र घत्वं पूर्वत्र ढत्वमिति। एतच्चैकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भवतीति न्यायमनाश्रित्योक्तं द्रष्टव्यम्। अयं च न्यायः 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रैव व्याख्यातः।

न्यासः

इति घत्वम्, 'झलां जश् झशि' इति जश्त्वम्—घकारस्य गकारः, ततो द्विर्वचनम्—द्रोग्धाद्रोग्धेति। यदा तु घत्वं नास्ति तदा 'हो ढः' इति ढत्वम्, पूर्ववद्धत्वम्, ष्टुत्वञ्च, 'ढो ढे लोपः' इति पूर्वढकारलोपः, ततो द्विर्वचनम्—द्रोढाद्रोढेति इष्टमेव सिध्यति। यदि तर्हि 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतद्वक्तव्यम्, तदा 'पूर्वत्रासिद्धम्, इत्यत्र औजढदित्यस्य सिद्धये यद्वक्ष्यति—'ढत्वष्टुत्वढलोपादीनामसिद्धत्वाण्णौ यष्टिलोपस्तस्य स्थानिवद्भावाद् हत् इत्येतद् द्विरुच्यते' इति—तद् विरुध्यते ? नास्ति विरोधः; 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यासर्वविषयत्वात्। कथं विज्ञायते ? 'उभौ साभ्यासस्य' इत्यस्य सूत्रस्यारम्भात्। यदि हि 'पूर्वत्रासिद्धोयममद्विर्वचने' इत्येतत् सर्वविषयकं स्यात्, एवं सति 'अनितेः' इत्यनेन कृतणत्वस्य द्विर्वचनेन भवितव्यमिति सिद्धम्—प्राणिणिषतीत्यादिकं रूपम्, किम् 'उभौ साभ्यासस्य' इत्यनेन सूत्रारम्भेण ? आरब्धञ्च, ततो ज्ञायते—'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतदसर्वविषयमिति।

यस्तु मन्यते—आष्टमिकं द्विर्वचनमभिप्रेत्यैतद् वक्तव्यमिति, तदयुक्तम्; तस्य 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इत्यत्र विषुषुपुरित्यस्य सिद्धयर्थं यद् वक्ष्यति—'षुपिभूतो द्विरुच्यते' इति, तद्विरुध्यते; यदि हि षाष्ठिके द्विर्वचने कर्त्तव्ये षत्वस्यासिद्धत्वं नास्ति, एवं षुपिभूतस्य द्विर्वचनं लभ्यते, नान्यथा। तस्मात् पूर्व एव परीहारः साधुः।

सर्वस्येतद्वेत्यादि। वाशब्दः पूर्वप्रयोजनापेक्षया विकल्पार्थः। अथ वा—नैवं विस्पष्टार्थं सर्वग्रहणम्। किं तर्हि ? कृतसर्वकार्यस्य प्रतिपत्त्यर्थं कृतम्। सर्वं ढत्वादिकार्यं यस्य तस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थं सर्वग्रहणं द्रष्टव्यम्। एतत् कथम् ? सर्वशब्दोऽयं मत्वर्थीयाकारप्रत्ययान्तः—सर्वं कार्यमस्यास्तीति सर्वः, अर्शआदित्वादच्, तेन कृतसर्वकार्यस्य द्विर्वचनं भवतीत्युक्तं भवति ॥

## तस्य परमाम्रेडितम् ॥ २ ॥

तस्य द्विरुक्तस्य यत्परं शब्दरूपं तदाम्रेडितसज्ञं भवति । चौर चौर चौर वृषल वृषल वृषल दस्यो दस्यो दस्यो घातयिष्यामि त्वा, बन्धयिष्यामि त्वा ।

आम्रेडितप्रदेशाः—'आम्रेडितं भर्त्सने' इत्येवमादयः ॥

### पदमञ्जरी

*पूर्वत्रासिद्धीयमिति* । 'पूर्वत्रासिद्धम्' इत्यस्मिन्नधिकारे भवं नलोपादिकार्यं पूर्वत्रासिद्धीयम्, तद् द्विर्वचनादन्यत्रासिद्धं भवति । अथ वा—पूर्वस्यां सपादसप्ताध्याय्यामसिद्धं नलोपादि पूर्वत्रासिद्धम्, तत्र भवमसिद्धत्वं पूर्वत्रासिद्धीयम्; तद् द्विर्वचने कर्त्तव्ये न भवति, ततश्च घत्वे ढत्वे वा प्रवृत्ते तद्युक्तस्यैव द्विर्वचनमिति नास्ति दोषः ।

*सर्वस्येत्येतदेवेत्यादि* । पूर्वं 'पूर्वत्रासिद्धीयमद्विर्वचने' इति वचनाश्रयेण द्रोढाद्रोढेति साधितम्, इदानीम् 'सर्वस्य' इत्यनेन साधितमित्येकस्मिन्साध्ये द्वयोर्हेत्वोर्विकल्पः । कथं पुनः 'सर्वस्य' इत्यनेन कृतसर्वकार्यप्रतिपत्तिः ? अर्शआद्यच्प्रत्ययान्तोऽयं सर्वशब्दः—सर्वं कार्यं यस्मिन्नस्ति तदिदं सर्वम्, तस्य द्वे भवतः । सर्वेषु कार्येषु कृतेषु द्विर्वचनमित्यर्थः ॥

*तस्य परमाम्रेडितम्* ॥ 'तस्य' इत्यवयवयोगे षष्ठी, परशब्दोऽवयववचनः । 'दिक्शब्दाऽन्यूत्तरपद' इत्यत्र यद्यपि 'दिशि दृष्टः शब्दो दिक्शब्दः'—इत्याश्रयणात्सम्प्रत्यदिक्शब्दत्वेऽपि पञ्चमी विहिता, तथाप्यस्मादेव निर्देशादवयववाचिभिर्योगे षष्ठी भवति । एवं च पूर्वं कायस्येत्यादि सिद्धं भवति । उदाहरणे—'आम्रेडितं भर्त्सने' इति प्लुतः । तस्य ग्रहणं विषयावधारणार्थम्–तस्यैतस्यानन्तरस्य द्विरुक्तस्येति, तेन षाष्ठिके द्विर्वचने इयं संज्ञा न भवति । ननु आम्रेडितशब्दो *निघण्टुषु* प्रसिद्धः—'आम्रेडितं द्विस्त्रिरुक्तम्[1]' इति ? सत्यमर्थे प्रसिद्धः; इह तु शब्दे परिभाष्यते

महासंज्ञाकरणं पूर्वाचार्यानुरोधेन ॥

### न्यासः

तस्य परमाम्रेडितम् ॥ 'तस्य' इत्यवयवषष्ठी । तस्य द्विरुक्तस्य यत् परमवयवभूतं शब्दरूपं तस्याम्रेडितसंज्ञा विधीयते । अथ द्विष्प्रयोगद्विर्वचनपक्षे कथं परमिति व्यपदेशः ? कथञ्च न स्यात् ? तस्य भेदनिबन्धनत्वात् । परव्यपदेशो हि भेदनिबन्धनः । न च द्विष्प्रयोगद्विर्वचनपक्षे शब्दभेदोऽस्ति, आवृत्तिमात्रं हि तत्र भिद्यते, न शब्दः ?

1, अ० को० १.६.१२

## अनुदात्तं च ॥ ३ ॥

अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् । भुङ्क्तेभुङ्क्ते । पशून्पशून् ॥

### पदमञ्जरी

*अनुदात्तं च* ॥ परमित्यनेन सामानाधिकरण्यात्तस्य चाज्झल्समुदायरूपत्वादन्वर्थोऽत्रानुदात्तशब्दः—अविद्यमानमुदात्तमनुदात्तमिति । स्वरितेऽप्युदात्तस्य भावात्तस्यापि निवृत्तिः । एवमपि न ज्ञायते-केन स्वरेणाम्रेडितं प्रयोक्तव्यमिति ? उच्यते; उदात्तस्वरितौ तावन्निषिद्धौ, न चास्वरकस्याच उच्चारणं सम्भवति, तत्र पारिशेष्यादनुदात्तत्वमेव भविष्यति । यद्वा—अनुदात्ताच्कमनुदात्तम्, आम्रेडितस्था अचोऽनुदात्ता भवन्तीत्यर्थः । *भुङ्क्तेभुङ्क्त इति* । 'भुजोऽनवने' इत्यात्मनेपदम्, तस्य 'तास्यनुदात्तेत्' इत्यनुदात्तत्वम्, श्नमः प्रत्ययस्वरः, तस्य 'श्नसोरल्लोपः' इत्यल्लोपे उदात्तनिवृत्तिस्वरेण भुङ्क्तेशब्दोऽन्तोदात्तः, द्विर्वचनेन परस्यानुदात्तत्वम् । पशुशब्दः कुप्रत्ययान्तोऽन्तोदात्तः ॥

### न्यासः

नैष दोषः;. अभिन्नस्यापि शब्दस्य धर्मभेदादौपचारिकमन्यत्वं भविष्यति । भवति हि धर्मभेदादभिन्नेऽपि वस्तुनि भेदव्यवहारः । तथा हि वक्तारो वदन्ति—परुद् भवान् पटुरासीत् पटुतरश्चैषमोऽन्य एवासि संवृत्त इति । चौर चौर इति । 'एङ्ह्रस्वात् सम्बुद्धेः' इति सुलोपः, 'वाक्यादेरामन्त्रितस्य' इत्यादिना भर्त्सने द्विर्वचनम्, 'आम्रेडितं भर्त्सने' इति प्लुतः । दस्यो दस्यो इति । 'सम्बुद्धौ च' इति गुणः ।

अथ तस्यग्रहणं किमर्थम्, यावता 'द्वे' इत्यनुवर्त्तिष्यते, तत्रैवं विज्ञायते— द्वयोर्यत् परमिति ? नैवं शक्यम्; 'एकाचो द्वे प्रथमस्य' इत्यत्रापि परमाम्रेडितसंज्ञं स्यात् । तस्यग्रहणे सति यत्रैतद्वक्ष्यमाणं द्विर्वचनं तस्य परमिति विज्ञायते । तेन न भवत्यतिप्रसङ्गः ।

आम्रेडितमिति महत्याः संज्ञायाः करणमन्वर्थसंज्ञाविज्ञानार्थम् । आम्रेड्यत आधिक्येनोच्यत इत्याम्रेडितम् । तेनेहापि भवति—अहो दर्शनीया अहो दर्शनीया, मह्यं रोचते मह्यं रोचत इति । दर्शनीयत्वस्य रुचेश्चाधिक्यं द्योतयितुमत्र द्रष्टव्यं द्विर्वचनम् । एतदेव महत्याः संज्ञायाः करणं ज्ञापकम्— आधिक्याभिधाने द्विर्वचनं भवतीति ॥

अनुदात्तञ्च ॥ प्रकृतिस्वरे प्राप्ते परस्यानुदात्तत्वमुच्यते । अनुदात्तशब्दश्चात्र परशब्दसामानाधिकरण्यान्न शास्त्रीयमनुदात्तमाह, किं तर्हि ? अन्वर्थो विज्ञायते—अविद्यमानमुदात्तमनुदात्तमिति । शास्त्रीये ह्यनुदात्ते गृह्यमाणे सम्बन्धार्थं परस्येति षष्ठ्युच्चारयितव्या स्यात् । तथा च 'अलोऽन्त्यस्य' स्यात् । अथापि सर्वस्येत्यनुवर्त्तेत,एवमपि वचनप्रामाण्यादेकाल एव सर्वादेशः प्रसज्येत । तस्मादन्वर्थस्यैव ग्रहणं युक्तम् । भुङ्क्तेभुङ्क्त इति । 'भुजोऽनवने' इत्यात्मनेपदम् । तस्मिन्कृते सति शिष्टस्वरत्वाद्धातुस्वरं बाधित्वा

